BENARES SANSKRIT SERIES;
A
COLLECTION OF SANSKRIT WORKS:
EDITED BY THE
PANDITS OF THE BENARES SANSKRIT COLLEGE,
UNDER THE SUPERINTENDENCE OF
R. T. H. GRIFFITH, M. A., C. I. E.
AND
G. THIBAUT, PH. D.
*No. 86.*

---

# भेदधिक्कारः

श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमन्नृसिंहाश्रममुनिप्रणीतः ।
तदीयशिष्यश्रीनारायणाश्रमविरचितभेदधिक्कार-
सत्क्रियाख्यव्याख्यासनाथः ।
काशीस्थद्राविडोपाह्व पण्डितलक्ष्मणशास्त्रिणा विषमपदटिप्पणीपूर्वकं संशोधितः ।

# BHEDADHIKKÂRA

BY
*ŚREE NRISIMHÂŚRAMAMUNI,*
*With a Commentary by the Author's Pupil*
Sree Narayanasrama.
EDITED AND ANNOTATED BY
PANDIT LAKSHMANA ŚASTRÎ DRÂVIDA,
PROFESSOR OF VEDÂNTA, CENTRAL HINDU COLLEGE, BENARES.

*Fasciculus I.*

BENARES.
*Published by the Proprietors Messrs. Braj B. Das & Co.,*
AND SOLD BY H. D. GUPTA,
*Secretary, Chowkhamba Sanskrit Book Depot.*

---

Printed at the Vidyâ vilas Press,
BENARES.
1904.

॥ श्रीः ॥

# सव्याख्ये भेदधिक्कारः प्रारभ्यते

वेदान्तवनसञ्चारिनीलाचलगुहाशयम् ।
ज्योतिर्विराजतेऽध्वस्तमायावरणवारणम् ॥ १ ॥

मृषामायाशक्त्याऽऽवृतमहिमनि ब्रह्मणि परे
जगज्जालं जातं स्फुरति वियतीवोरुनगरम् ।
विरिञ्चिश्रीशेशत्रिदशनरतिर्यग्गतभिदा
कुतोऽतो भूमाऽहं निरवधिसदानन्दघनचित् ॥ १ ॥
काशते कलितं यस्य पदं वैदिकमस्तकैः ।
भक्तमुक्त्यै समीहन्तं तं नृसिंहं गुरुं भजे ॥ २ ॥
गम्भीरभावभारेण दुर्वहा गौरवी कृतिः ।
तथापि भेदधिक्कारसत्क्रियां श्रद्धयाऽऽरभे ॥ ३ ॥

यद्यपि श्रुतिस्मृतीतिहासपुराणागमैः क्रियासमभिहारेण जगन्निदाने सर्वज्ञे परमात्मनि सजातीयादिसमस्तभेदो निन्दितो निषिद्धश्च यद्यपि चात्र भगवद्भिर्बादरायणभगवत्पादादिभिः पूर्वाचार्यैरारम्भणाधिकरणादिन्यायतोऽपि भेदसत्ता निराकारि, तथापि केचित्स्वोत्प्रेक्षापरिकल्पितपारिभाषिकयुक्तिकलापाकुलीकृतान्तःकरणा भेदसत्तां सम्भावयन्तो न श्रुत्यादिसिद्धाद्वितीयचिदात्मनि श्रद्धां बध्नन्ति अतस्तन्मोहशान्तये समस्तभेददुर्निरूपत्वप्रकटनाय ग्रन्थमारभमाणस्तत्परिसमाप्त्यादिफलकमीश्वरतत्त्वानुस्मरणं मङ्गलं मनसाऽनुष्ठितं शिष्यशिक्षार्थं प्रकटयन्प्रकरणविषयादिकं च सूचयन् स्मृतवस्तुस्वरूपं सलक्षणप्रमाणं निर्दिशति * वेदान्तेत्यादिना * ज्योतिः चित्प्रकाशः विराजते विविधनामरूपप्रपञ्चात्मना दीप्यते तेनाध्यस्तसमस्तप्रपञ्चात्मत्वापत्त्या तदधिष्ठानत्वं तत्तदवच्छिन्नस्फूर्तिमत्तया च

सर्वज्ञत्वमिति तटस्थलक्षणद्वयं सूचितं ज्योतिःपदोपात्तस्य चित्प्रकाशस्य सदानन्दात्मत्वेन श्रुतिन्यायाभ्यां निर्द्धारितत्वात्तेन सच्चिदानन्दरूपत्वं स्वरूपलक्षणमुक्तम् । ननु प्रपञ्चाधिष्ठानचित्प्रकाशात्मत्वमात्रेण कथं ब्रह्मणः सर्वज्ञत्वं तदात्मत्वेऽपि जीवस्य तदभावादित्याशङ्क्य 'मायिनं तु महेश्वरं' 'योनियोनिमधितिष्ठत्येकः' 'विद्याविद्ये ईशते यस्तु सोऽन्यः' 'मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरं' 'मायापरैत्यभिमुखे च विलज्जमाने' इत्यादिश्रुतिस्मृतिभिरीश्वरस्य मायानियन्तृत्वावधारणात्तं प्रति तत्स्वरूपावरणानुपपत्तेस्तस्यैव सर्वज्ञत्वं जीवस्य तु तत्प्रतिबिम्बस्य 'नृतेन हि प्रत्यूढा' 'अनीशया शोचति मुह्यमान' इत्यादिवचनात् अविद्यावृतस्वरूपत्वादज्ञतैवेत्यभिप्रेत्याह * अध्वस्तेति * अध्वस्ताऽनादिकालमारभ्याखण्डदण्डायमाना या माया जीवपुरुषार्थाच्छादनेन तदनर्थहेतुभूता तत्कृतावरणस्य नितरां वारणं नित्यनिवृत्तिर्यस्मात्तत्तथा, मायाया अर्थाच्छादनेनानर्थोपस्थापकत्वमुक्तं श्रीभागवते 'ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि । तद्विद्यादात्मनो मायां यथाभासो यथा तम' इति। ध्वस्तेति वा च्छेदः स्वप्रकाशासङ्गचैतन्यस्य वस्तुनो मायां प्रत्याश्रयविषयत्वानुपपत्तेस्तदाश्रयविषयभूतवस्त्वन्तरानिरूपणाच्च तदपेक्षा माया न वस्तुसती तदिदमाह * ध्वस्तेति * नित्यनिरस्तसत्ताकेत्यर्थः । यद्वा मायावरणमेव वारणो मत्तगजः दुर्बलानां भयादिविक्षेपहेतुत्वात् स ध्वस्तः समूलमुन्मूलितः येन प्रत्यगात्मतया साक्षात्कृतेन तत्तथा, जडापि चरमसाक्षात्कारात्मिका वृत्तिर्यद्बलमवष्टभ्यात्यन्तनिरूढमप्यावरणं निवारयति तत्र तस्य काऽसम्भावनेति भावः । एवं शास्त्रीयलक्षणलक्षितं विषयभूतं वस्तु सप्रयोजनं निर्दिश्य प्रकरणनिष्पत्तिस्थानं सूचयन् प्राकृतजनस्यापि सुबोधायोपलक्षणान्तरमाह * नीलेति * नीलाचले या गुहावत् तत्त्वाभिव्यक्तिहेतुत्वाद् गुहा पुरुषोत्तमसिंहासनस्थानं तत्र शेते निरतिशयैश्वर्यशालितयाऽभिव्यज्यते इति तथोक्तं, तत्र प्राकृतानामपि प्रकाशमानज्योतिष एवेश्वरात्मत्वमुक्तं विष्णुपुराणे 'ब्रह्माक्षरमजं नित्यं यथाऽसौ पुरुषोत्तमः । तथा रागादयो दोषाः प्रयान्तु प्रशमं ममेति' । उक्तलक्षणे ब्रह्मणि प्रमाणाकाङ्क्षायामाह * वेदान्तेति * वेदान्ता एवानभ्यासिनां दुरवगाहित्वाद्वनमिव वनं फलवचनार्थवा-

'किं न त्वं नरसिंह एव यदि वा नाहं न नोचे त्कथं
बन्धो मय्यखिलेश्वरे त्वयि विभो किं नास्ति मत्तः परः॥

द्यादिफलपुष्पादियुक्तनानाशाखाकाण्डवल्लीसमुदायात्मकत्वाद्वा वनमिव वनं वेदान्तास्तदात्मत्वादुपनिषदां तत्त्वं तत्र सञ्चरणशीलं तद्वेकावगममिति यावत् अत्र वनपदेनोपनिषदां कात्स्न्र्यपरेण तासां ब्रह्मणि प्रामाण्यकारणं गतिसामान्यं सूचितम् । उक्तलक्षणे ब्रह्मणि प्रमाणान्तरानिरूपणा 'नावेदविन्मनुते तं बृहन्तं' 'नैषा तर्केण मतिरापनेया' 'सर्वे वेदा यत्पदमामनन्ति' 'तं त्वौपनिषदं' मित्यादिश्रुतेश्च 'सत्यं ज्ञानमनन्तं ब्रह्म' 'यतो वा इमानि भूतानि जायन्ते' 'सदेव सौम्येदमग्र आसीदेकमेवा ऽद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति' 'यः सर्वज्ञः स सर्वविद्' दित्यादि समस्तवेदान्ता एवोक्तलक्षणे ब्रह्मणि प्रमाणमिति भावः । अत्र वनशैलगुहादिकीर्त्तनात्सिंहाकृति ब्रह्म स्वाभीष्टं द्योतितम् ॥ १ ॥

ननु समस्तभेदसत्त्वसाधनसमर्थेषु कणभुगादिमतानुवर्त्तिष्वभिनवतार्किकेषु जीवत्सु कथं वेदान्तानां स्वारस्यमात्रेण प्रत्यगभिन्नाद्वयब्रह्मणि प्रामाण्यं सिद्ध्येदित्याशङ्क्य सर्वज्ञेनापि परमेश्वरेण मां प्रति जीवपरादिभेदसत्त्वमशक्यं साधयितुमिति परमेश्वरेण सह विवादव्याजेन वदन्नन्यान्प्रति तन्निराकृतिः सुकरेति सूचयन्भक्तिभारनम्रेण चेतसा पुनस्तमेवानुसन्धत्ते *किं न त्वमित्यादिना* हे नरहरे आस्तां तावदन्यभेदसाधने मानं तवैव नाम निरुच्यमानं मदभेदं साधयतीत्याह किं न त्वं नरसिंह एवेति । नरसिंह एव न किमिति किमा नञर्थ आक्षिप्यते । तव नरसिंहनामधेयत्वस्य लोकवेदसिद्धत्वादभ्यर्हितकर्मधारयसमासात्मकनामनिर्वचनेन नृशब्दवाच्यस्य मम सिंहशब्दार्थत्वेन श्रुतिसिद्धेन त्वया सहाभेदप्रतीतेर्नावयोर्भेदः सन्नित्यर्थः । ननु नुः जीवस्य मदभेदं तव किमायातमित्यत आह *यदीति* अहं ना न किमित्यनुषङ्गः । मयि नृशब्दवाच्यजीवत्वस्यानुभवसिद्धत्वान्न तदपलापः कर्त्तुं शक्य इत्यर्थः । ननु त्वं नानेति न किं तु प्रमातृत्वकर्त्तृत्वभोक्तृत्वादिबन्धयुक्तत्वात्तव नित्यमुक्तेन मया सह भेद एव नाभेद इति शङ्कते *नोचेदिति* उक्तविधया ऽभेदो न चेदित्यर्थः *कथमित्यादि* तदेवं बन्धो मयि यदि वास्तवः स्या-

भूयादर्थवदात्मबन्धहर इत्याद्यं वचोपौरुषं
न त्वं ना तदहं त्वमेव नृहरे भूयासमात्मंस्त्वयि ॥२॥

त्स तु मुखप्रतिबिम्बादिगतश्यामतादिवदापौधिकभेदमुपजीव्य मयि कियन्तं कालं व्यवस्थितः अधुना श्रुतिन्यायादिना परमेश्वरात्मना निश्चिते मयि कथं वास्तवबन्धो घटेत अवास्तवेन च तेन कथमावयोः सत्यभेदसिद्धिरित्यभिप्रेत्याह * कथं बन्धो मय्यखिलेश्वरे त्वयीति* त्वयि मयीति सप्तम्यौ समानाधिकरणे । किं च विभुत्वप्रसिद्धिरपि तव सर्वभेदसत्तामपवदति निरवयवस्यासङ्गस्य वस्तुनः केनापि संयोगादेरसम्भवेन 'सर्वं समाप्नोषि ततोऽसि सर्वः' 'अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः' 'सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः । सर्वव्यापी स भगवांस्तस्मात्सर्वगतः शिवः' । ' महान्प्रभुर्वैश्वरूप' इत्यादिवचनसिद्धसर्वात्मत्वयोग्यत्वस्यैव विभुत्वादित्यभिप्रेत्य तत्त्वेन सम्बोधयति * विभो इति * ननु जीवानामनेकत्वादेकेन मया कथं तेषामभेद इत्याशङ्क्य तद्भेदोऽप्यवास्तव इत्याह * किं नास्ति मत्त इति * मदन्यो ना जीवः किमस्ति-नास्त्येवेत्यर्थः। एतदतिरिक्तानि शरीराणि ममैव भोगसाधनानि शरीरत्वात् एतच्छरीरवत्, चैत्रमैत्रात्मानौ न वस्तुनः परस्परं भिद्येते उपाधिपरामर्शं विना भेदेनाविभाव्यमानत्वात् घटाद्याकाशवदित्यादिप्रयोगाद्विपक्षे कल्पनागौरवादिबाधकतर्कोपेतात् 'एको देवः सर्वभूतेषु गूढः' 'एक एव हि भूतात्मा भूते भूते व्यवस्थितः' 'अविभक्तं च भूतेषु विभक्तमिव च स्थित'मित्यादिवचनाच्च जीवैकत्वसिद्धिः । न चैवं कर्तृत्वभोक्तृत्वव्यवस्थाया एकस्य सकलशरीरवर्तिसुखदुःखाद्यनुसन्धानस्य चानुपपत्तिः स्यादिति वाच्यम् । स्थूलसूक्ष्मशरीरद्वयभेदेनैव तदुपपत्तेर्वक्ष्यमाणत्वादिति भावः । ननु त्वत्कृतनामनिर्वचनमात्रं नावयोरभेदसाधकं तस्य पौरुषेयतया स्वार्थे मानान्तरापेक्षणात् भेदहेतोर्बन्धस्य सर्वजनीनत्वात् अबाधितत्वेन मिथ्यात्वायोगात्त्वदनुभवस्य च प्रत्यक्षानुभववद्बन्धवैतथ्यासाधकत्वादित्याशङ्क्याह * भूयादर्थवदित्यादिना * स्वात्मबन्धहर इत्येतदाद्यं यस्य तदपौरुषं वचोऽर्थवद् भूयादित्यन्वयः । 'एष उ एव नृ एष हि सर्वत्र सर्वदा सर्वात्मा सिंहोऽसौ परमे-

'श्वरो ऽसौ हि सर्वत्र सर्वदा सर्वात्मा सन्सर्वमत्ति नृसिंह एवैकलः' उपद्रष्टानुमन्तैष आत्मा नृसिंहः चिद्रूप एवाविकारोह्युपलब्धा सर्वत्रेत्यादिकं बहुव्रीहिपरिगृहीतम्। अयम्भावः, तापन्यां चतुर्थखण्डे एष उ एव नृएष इत्यादि श्रुतिवाक्यमपौरुषेयतया निरस्तसमस्ताप्रामाण्यशङ्कं पौर्वापर्यन्यायेन मानान्तरात्प्रबलं पदार्थद्वयप्रदर्शनपूर्वकं समानाधिकरणपदद्वयात्मकमहावाक्यात्मकनामनिर्वचनेन प्रत्यग्ब्रह्माभेदपरं न शक्यमन्यथयितुं। तदुक्तं तापनीयटीका(१)यां, मन्त्रराजमध्यगतनृसिंहपदेनैव च ब्रह्मात्मैक्यं प्रतिपत्तव्यमित्याह एष उ एव नृइत्यादिना। यदवादि प्रत्यगात्मनि सर्वजनीनो बन्धः सत्य इति तदसाधु, देहात्मभावस्यासत्यस्यापि सर्वजनीनत्वात्। किं च मन्त्रराजमध्यस्थनृसिंहपदार्थप्रकटनाय द्वितीयखण्डे नुर्जीवस्य स्वस्वरूपभूतस्य चिअर्थं बन्धं हन्तीति नृसिंह इति च व्युत्पत्तिमभिप्रेत्य स्वात्मबन्धहर इत्यभेदेनावगतस्य तव स्वात्मीयबन्धनिवर्त्तकत्वाभिधानाद् बन्धवैतथ्यं दुर्वारं न हि बन्धस्य सत्यत्वे प्रतीचस्त्वद्रूपत्वं बन्धस्य स्वात्मीयत्वं वा तस्य त्वज्ज्ञाननिवर्त्यत्वं वा सम्भवति नहि सत्यस्य शक्यं ज्ञाननिवर्त्यत्वं क्वचिद्दर्शयितुं एतदभिप्रेत्यार्थवद्भूयादित्युक्तं। तस्मादसत्यो बन्धो न वा भेद इति। नन्वहमपि सिंहाकृतिशरीरादिमत्वात्त्वदभिन्नत्वाच्च जीव एव स्यामिति कथं मदभेदादिना बन्धो मिथ्येति तत्राह *न त्वं नेति* 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत' 'अवजानन्ति मां मूढा मानुषीन्तनुमाश्रित'मित्यादिभवदीयवचना'देष सर्वेश्वर एष भूताधिपतिः' 'अतश्चान्यो अभिचाकशीती'त्यादिवचनाच्च लोकानां भोगापवर्गार्थं लीलया नानावतारवत्यपि त्वयि जीवत्वसम्भावनायोगात् मय्यपि जीवत्वस्य प्रतिबिम्बत्वादिवदौपाधिकभेदेनैव व्यवस्थितत्वाच्च न सत्यत्वमिति भावः। एवं स्वाभेदमीश्वरेऽभि(२)धाय निःशङ्कं तमात्मत्वेन सम्बोधयन्नभेदमुपसंहरति * तदहमिति * तत् तस्मादित्यर्थः। तर्हि किं मम जीवमात्रत्वमित्याशङ्क्य न जीवस्यैवारोपितविपरीतरूपपरित्यागेन ब्रह्मरूपे पर्यवसानमित्याह *भूयासमिति *विधिवदावश्यकत्वादिदमन्यथयितुमशक्यमित्याशयेन विध्यर्थलिङ्प्रयोगः। अथवा उक्तविधया समस्तबन्धहरे परमेश्वरे त्वयि सति

---

(१) दीपिकायामिति क पु० पा०। (२) प्रसाध्येति क पु० पा०।

हृदयालयमालम्ब्य करुणारससुन्दरम् ।
गुरूणां चरणाम्भोजं कुर्वे भेदस्य धिक्कृतिम् ॥ ३॥

अन्तःकरणातिरिक्तोऽहमिति प्रतीयमानो जीवः परस्मा-

मयि प्रातीतिकोऽपि बन्धः न युक्तः अतः तमपि निवारयेति प्रार्थयते * भूयासमिति * त्वय्येवान्तर्भूतः स्यामित्यर्थः ॥ २ ॥

इदानीं स्वसामर्थ्यनिदानं दर्शयन् चिकीर्षितं प्रतिजानीते *हृदयेति* गुरूणां श्रीचरणपरिचरणनैपुण्यपरिणतत्वादसाधारणास्व-कीयविद्यादिसम्पत्तेः गुरुभिः कृतां करुणामारक्तत्वसुकुमारत्वादिमा-म्भोजसदृशतच्चरणकृतां मत्वा करुणारससुन्दरमित्युक्तम् । भेदस्य धिक्कृतिर्नाम तुच्छीकरणं तच्च प्रामाण्यादिनिरासपुरःसरं तन्मि-थ्यात्वसाधनं तदत्र प्राधान्येन क्रियत इत्यर्थः ॥ ३ ॥

यद्यपि स्वमते भेदमिथ्यात्व ( १ ) साधनेनाद्वैतसिद्धौ श्रु-तिरेव भगवती प्रमाणं तथापि न्यायमेव बहु मन्यमानं प्रति न्यायतः तावज्जीवपरभेदमिथ्यात्वं साधयति * अन्तःकरणे-ति * अहमिति प्रतीयमानः अहमिति वर्त्तमानव्यवहारहे-तुप्रतीतिगोचरः जीवपदाभिधेयो जीवः परस्मान्न भिद्यते अव्यक्ता-त्परो योऽसंसार्यात्मा तत्प्रतियोगिकभेदात्यन्ताभाववानित्यर्थः । एतच्च स्वरूपेणैव स्वसंसृज्यमानाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वं मि-थ्यात्वमिति मतेनोक्तं । अत्र कर्तृत्वादिधर्मिवाचकजीवपदवाच्यत्वम-हमिति प्रतीयमानत्वं च वस्तुनः सिद्धान्तेऽहङ्कारेऽपीति तस्य पक्षत्वे बाधः स्यात्तद्वारणायान्तःकरणातिरिक्तेत्युक्तम् । अन्तःकरणातिरि-क्तो जीव इत्येतावत्युक्ते 'आमुक्तेर्भेद एव स्यात् जीवस्य च परस्य च । मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावत' इति मते मुक्तजीवे सिद्धसा-धनं स्यात्परस्मिन्स्वप्रतियोगिकभेदाभावेन तदभिन्नजीवेऽपि तदभा-वात् तन्निरासायाहमिति प्रतीयमान इत्युक्तं । तदपीश्वरे परमतेऽस्तीति तत्र सिद्धसाधनतावारणाय जीव इत्युक्तं । स्वमते तु अन्तःकरणा-तिरिक्तोऽहमिति प्रतीयमान इत्येकः पक्षनिर्देशः अन्तःकरणातिरि-

---

( १ ) मिथ्यात्वेनेति क० पु० पा० ।

श्च भिद्यते चेतनत्वात्पदार्थत्वाद्वा ब्रह्मवत्, विपक्षे भेदग्राहकप्रमाणाभावादभेदश्रुत्यप्रामाण्यप्रसङ्गाच्च नाप्रयोजकत्वम् । तथा हि—

क्तो जीव इति चापरोऽभिप्रेतः अत्रोक्तसाध्ये चेतनत्वादित्येव हेतुः परप्रतियोगिकभेदाश्रयस्यानात्मवर्गस्य कल्पितस्य कल्पितभेदाधिष्ठानत्वाभावेन तत्र तदत्यन्ताभावाभावात् पदार्थत्वादित्यस्य तत्र व्यभिचारापत्तेरहेतुत्वात् । तत्त्वमिति वाक्यस्य पदार्थत्वादिति वाऽयं हेतुः विवक्षितः ततश्चोक्तव्यभिचाराभावादयमपि हेतु र्भवत्येव, यस्मिन्मतेऽधिष्ठानेऽपि सत्त्वावच्छिन्नत्वेनैवारोपितात्यन्ताभावो न स्वरूपेण यन्मते चाधिष्ठानमेवारोपिताभावः तत्र मतद्वयेऽपि परप्रतियोगिकस्वानधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्ववान्न भवति इति साध्यं विवक्षितम् । तत्र जीव इत्येव पक्षनिर्देशः यथाश्रुतपदार्थत्वादित्यपि हेतुः घटादेरपि पक्षसमत्वेन व्यभिचाराभावात् परप्रतियोगिकभेदवति जीवे स्वानधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वविशिष्टभेदनिषेधो भेदे विशेषणाभावेन पर्यवस्यति विशेषणाभावश्च भेदे स्वाधिकरणमात्रवृत्त्यत्यन्ताभावप्रतियोगित्वेन वा स्ववैयधिकरण्यानधिकरणात्यन्ताभावप्रतियोगित्वेन वेति भेदे तन्मतद्वयाभिमतमिथ्यात्वसिद्धिः । न चाधिष्ठानातिरिक्ताभाववादे जीवनिष्ठपरभेदे स्वानधिकरणपरवृत्त्यत्यन्ताभावप्रतियोगित्वसत्त्वात्तदभावो बाधित इति वाच्यम् । तन्मते एकस्यैव भेदस्य विभागादिवद्धर्मिप्रतियोगिनिष्ठत्वेन तस्य तदनधिकरणत्वाभावात् । न चोक्तविशेषणविशिष्टभेदस्य निषेध्यस्योक्तमतद्वयाप्रसिद्धत्वेन तन्निषेधायोग इति वाच्यम् । परप्रसिद्ध्या परो बोधनीय इति न्यायेन तदुपपत्तेः । 'तद्धैक आहुरसदेवेदमग्र आसीदि'त्यादिना शून्यवादिमतसिद्धस्यासत्कारणत्वस्य निषेधाद्वेदवदेव वेदविदां व्यवहारस्य परभ्रान्तिनिवृत्तिमात्रप्रयोजनत्वादिति भावः । अप्रयोजकत्वेन व्याप्यत्वासिद्धिमाशङ्क्य परिहरति *विपक्ष इति* यदि भेदः सत्यः स्यात्तर्हि तत्प्रमाणतत्स्वरूपतद्धर्मिप्रतियोग्यादि निरूप्येत वक्ष्यमाणविधया च तदशक्यं निरूपयितुं तथा जीवपरभेदस्य सत्यत्वे तदभेदश्रुतीनामप्रामाण्यं

मानाभावादयुक्तेश्च न भिदेश्वरजीवयोः ।
जीवानामचितां चैव नात्मनो न परस्परम् ॥ ४ ॥

अथ कथं भेदे मानाभावः ।

नाहमीश्वर इत्येतत्प्रत्यक्षं सर्वसम्मतम् ।
न भ्रान्तिर्बाधविरहान्न वा तद्धेत्वसम्भवः ॥ ५ ॥

अस्ति खल्वस्मदादिप्रत्यक्षं नाहमीश्वर इति तच्चाबाधि-

स्याद्भेदाभेदासम्भवस्य च वक्ष्यमाणत्वादित्यर्थः । प्रथमं तर्कस्य विपर्ययपर्यवसानं दर्शयन्भेदमात्रस्य सत्त्वासम्भवं साधयति *तथाहीति* अयुक्तेरिति* लक्षणाद्यभावेन तदनुपपत्तेरित्यर्थः। मानानुग्राहकयुक्त्यभावाच्चेति वा । सत्यानां परस्परभिन्नानां कथमेकेनेश्वरेण भेदाभाव इत्याशङ्क्य यद्यपि जीवाः स्वरूपेण सत्यास्तथापि तद्भेदोऽपि न वास्तव इत्याह *जीवानामिति* जीवानां परस्परमपि भिदा नेत्यन्वयः। जीवेश्वरयोर्जीवानां च स्वाभाविकभेदाभावेऽप्यौपाधिको भेदो वास्तवोऽस्त्वित्याशङ्क्य जडप्रपञ्चस्य स्वरूपेणापि मिथ्यात्वेन तद्भेदस्यापि तथात्वात्तत्प्रयुक्तचेतनभेदः कथं सत्यः स्यादित्यभिप्रेत्याह * अचितां चेति*अचितां जडानामपि परस्परमपि न भिदा जीवेश्वररूपादात्मनः सकाशादपि न भिदेत्यर्थः ॥ ४ ॥

विमतः भेदः न सत्यः अप्रमाणिकत्वादनुपपन्नत्वाद्वा देहात्मभाववदित्युक्ते हेतोरसिद्धिं शङ्कते * अथ कथमिति * तत्र तावदभावप्रत्यक्षत्ववादी मानान्तरवार्त्तानभिज्ञः, प्राकृतजनैरप्यनुभूयमानत्वाज्जीवेश्वरभेदस्य तत्र प्रत्यक्षमेव प्रमाणमित्युपपादयति * नाहमिति * सर्वसम्मतस्यापि भेदप्रत्यक्षस्य देहात्मभावानुभववत्परीक्षकानुभवबाधितत्वादप्रमाण्यत्वमित्याशङ्क्य तद्बाधकानुभवासम्प्रतिपत्तेर्मैवमित्याह * न भ्रान्तिरिति* तथापि तद्धेतोरिन्द्रियादेरसम्भवात्साभ्रान्तिरित्याशङ्क्याह *न वा तदिति* श्लोकस्य पूर्वार्द्धं विवृणोति *अस्तीति* प्रत्यक्षस्य व्यावहारिकभेदविषयत्वान्न तत्त्वावेदकत्वमित्याशङ्क्याह *तच्चेति* च शब्दोऽवधारणे तदबाधितमेवेत्यर्थः।तस्य किमभेदग्राहि प्रत्यक्षं बाध-

तं अहमीश्वर इत्यप्रतीतेः । ननु न तावदिदं चक्षुरादिजन्यं आत्मनि तदसामर्थ्यात् मनसश्च प्रमाणान्तरसहकारिणः पृथक्प्रमाणत्वायोगात् अतः क्लृप्तकारणाभावात्सा भ्रान्तिरिति चेन्न । सुखाद्युपलब्धेः प्रमाणान्तराजन्यतया मनस एव तत्प्रमाणत्वे भेदस्यापि तत्प्र-

कमुतान्यत्, न द्वितीयः तदनिरूपणादित्यभिप्रेत्याद्यं निरस्यति *अहमिति* चतुर्थपादव्यावर्त्याशङ्कामाह *नन्विति* किमात्मनि ईश्वरभेदप्रत्यक्षे बहिरिन्द्रियं हेतुरुत मनः, नाद्यः बाह्येन्द्रियाणां रूपादिरहितात्मग्रहणासामर्थ्येन तद्गतभेदग्रहेऽप्यसामर्थ्यादित्याह *न तावदिति* मनस्समवधानदशायामेवात्मभेददर्शनान्मन एव तत्र मानमिति द्वितीयमाशङ्क्याह *मनसश्चेति* मनो न प्रमाणं प्रमाणसहकारित्वात् प्रमाणत्वपर्यवसानाधिकरणसहकारित्वादित्यर्थः ततश्च वाक्याद्यवयवपदादिषु न व्यभिचारः प्रमाणमपि प्रमात्रादिसहकारीति तद्व्यावृत्तये प्रमाणेत्युक्तं । आ (१) लोकादिवद्विपक्षे चालोकादेरपि परमते प्रमाणत्वप्रसङ्गः ततश्च मनसः क्वचिदप्यप्रमाणत्वादन्यस्यात्मभेदग्राहिप्रत्यक्षस्याभावात् क्लृप्तकरणाजन्यत्वात्तत्प्रतीतिर्भ्रान्तिरित्यर्थः । प्रत्यक्षात्मविशेषगुणेषु मानान्तरस्याभावान्मनसस्तत्र प्रमाणत्वमावश्यकं ततश्चोक्तानुमानमप्रयोजकमिति जीवपरभेदेऽपि तस्यैव प्रमाणत्वान्न तत्प्रतीतिर्भ्रान्तिरिति स्वमतसिद्धवत्कारेण पूर्ववादी परिहरति *न सुखेति* सुखादिप्रत्यक्षस्य जन्यत्वमेवासिद्धं वक्ष्यमाणविधया तत्र कादाचित्कत्वानुभवस्य साधनोपादानस्य च परमते सुखादिसमवाय इव सुखादिकादाचित्कत्वेनाप्युपपत्तेः सुखाद्युपाधिपरामर्शं विना तदनुभवे स्वतो भेदानवगमात् लाघवानुगृहीततदनुगतबुद्ध्या तदेकत्वसिद्धौ तन्नित्यत्वसिद्धेः न तस्य कारणापेक्षा आत्मनस्तु स्वसत्तायां संशयाद्यगोचरत्वेन स्वत एव प्रकाशमानत्वात्कर्तुः कर्मत्वविरोधाच्च तदनुभवेपि न मनः करणं ततश्च क्वचिदपि मनसः प्रमाणत्वाभावाद्भेदानुभवेपि तस्य तत्त्वम-

(१) अलोकादिवदिति क० पु० पा०

माणत्वात्। नन्वेवमप्यतीन्द्रियेश्वरभेदः कथं प्रत्यक्षः स्या-दप्रत्यक्षप्रतियोगिकाभावस्यैव प्रत्यक्षत्वादिति चेन्न। न हि प्रतियोगिप्रत्यक्षत्वमभावप्रत्यक्षत्वे तन्त्रं मनसि घटत्वाभावस्याप्रत्यक्षत्वात् घटे मनस्त्वाभावस्य प्रत्यक्षत्वाच्च किन्तु यत्र यत्सत्त्वमनुपलब्धिविरोधि तत्र तदभावः प्रत्यक्षः ततश्च जीवे तदभेदवदीश्वराभेदोऽप्यस्ति

युक्तमित्याद्यरुचिं सूचयन्मनसः प्रमाणत्वमङ्गीकृत्यापि प्रकारान्तरेण भेदप्रत्यक्षमाक्षिपति *नन्वेवमपीति* प्रतियोगितद्व्याप्येतरयावदुपलम्भकसमवधानसहितानुपलम्भस्याभावग्राहिप्रत्यक्षसहकारित्वाभ्युपगमात्प्रतियोगिप्रत्यक्षत्वमभावप्रत्यक्षत्वे तन्त्रं अन्यथा घटादौ जलपरमाण्वाद्यभावस्य प्रत्यक्षत्वप्रसङ्गात्तथाचाप्रत्यक्षेश्वरप्रतियोगिकान्योन्याभावरूपभेदस्य प्रत्यक्षत्वं न सम्भवतीत्यर्थः। स्यादेतदेवं यदि प्रतियोगिप्रत्यक्षत्वमभावप्रत्यक्षत्वे प्रयोजकं स्यान्नत्वेतदस्ति तस्य तत्र प्रयोजकत्वं किं तद्व्याप्यत्वमुत तद्व्यापकत्वं नोभयमपि व्यभिचारादिति परिहरति *न हि प्रयोगीत्यादिना* उक्तव्यभिचारोऽसम्मत इति मन्वानं प्रति तमुपपादयन्नभावप्रत्यक्षत्वं प्रति समनियतं प्रयोजकमाह *किं तु यत्रेति* यत्राभावाधिकरणे यस्य प्रतियोगिनः तर्कितसत्त्वं तदनुपलब्धिविरोधित्वेन तर्कितुं शक्यते तत्र तदभावः प्रत्यक्ष एवं सति घटत्वस्य मनसि सत्त्वेपि मनसोऽतीन्द्रियत्वादतीन्द्रियगतजातेरपि मनस्त्ववदतीन्द्रियत्वेनानुपलम्भविरोधित्वाभावात्तत्र तदभावो न प्रत्यक्षः मनस्त्वस्य तु घटे सत्त्वे व्यक्तिग्राहकेन्द्रिययोग्यत्वनियमात्तद्गतजातेर्घटत्ववदेवानुपलब्धिविरोधित्वस्य सुवच(१)त्वात्तदभावः तत्र प्रत्यक्ष एवेति भावः। फलितमाह *ततश्चेति* स्तम्भे पिशाचाभेदसत्त्वे स्तम्भाभेदवत्तस्याप्युपलम्भापातेनानुपलम्भविरोधित्वात्तदभावरूपः पिशाचभेदः स्तम्भे यथा स्तम्भः पिशाचो न भवतीति प्रत्यक्षविषयस्तथा जीवे ब्रह्मा-

(१) सुवचत्वादिति ख० पु० पा०।

चेत्प्रत्यक्षः स्यादिति तदनुपलम्भात्तद्भेदः प्रत्यक्षः ॥ ५ ॥

ननु त्वमप्ययमौपाधिक एव शरीरविशिष्टस्यैवेश्वरभेदानुभवादिति न भेदधीः प्रमा स्यादिति चेन्न, अहमिति

भेदसत्त्वं जीवाभेदवत्तदनुपलम्भायोगात्तत्र तदभावरूपो ब्रह्मभेदः प्रत्यक्षइत्यर्थः ॥ ५ ॥

अत्रेदं चिन्त्यं घटे मनस्त्वाभावानुभवः प्रत्यक्षो मनसि तु घटत्वाभावानुभवो न प्रत्यक्षः स्तम्भे पिशाचभेदः प्रत्यक्षः पिशाचे तु स्तम्भभेदो न प्रत्यक्ष इत्यादिव्यवस्था कथमिति । नह्यत्र किञ्चित्प्रमाणं शक्रेणापि शक्यं निरूपयितुम् पारिभाषिकप्रयोजकानुरोधेन तद्व्यवस्थायामतिप्रसङ्गात्, व्यवस्थितानुभवानुरोधेनैव तत्प्रयोजकस्य कल्प्यत्वाच्च, प्रत्यक्षगोचरस्तम्भाभेदे पिशाचेपि तत्प्रत्यक्षत्वापादनं सुकरमिति तथापि स्तम्भभेदः प्रत्यक्षः स्यात् न ह्यभेदरूपप्रतियोगिसत्त्वस्यानुपलम्भविरोधित्वापादनं धर्मिद्वारकमेव न प्रतियोगिद्वारकमिति शक्यं नि ( १ ) रूपयितुं तद्धर्मिप्रतियोगिनोरेकत्वात् । किं च यदभावाधिकरणे प्रतियोग्यनुपलम्भो निश्चितः स्यात्तदा खलु तत्र तर्कितं तत्सत्त्वं तदनुपलम्भविरोधित्वेन शक्यं तर्कितुं तथा चानुपलम्भस्याप्युपलम्भाभावत्वात्तत्प्रतियोग्यनुपलम्भान्तरनिश्चये सति प्रत्यक्षेण तन्निश्चयो वाच्यः एवं तस्य तस्यापीत्यनवस्थानाच्च कोऽप्यभावः प्रत्यक्षपद्धतिमध्यासीतेत्याद्यरुचिं सूचयन्नङ्गीकृत्याप्यौपाधिक एव जीवपरभेदः प्रत्यक्षगोचरो न स्वाभाविकः औपाधिकश्च भेदः स्वाभाविकाभेदेपि न विरुध्यते तस्य मिथ्यात्वादिति शङ्कते * नन्वेवमपीति * कृशोऽहमित्यादिप्रतीतिगोचरः कार्श्यादिर्यथा शरीराद्युपाधिकतयाऽऽत्मनि कल्पितः तथा नाहमीश्वर इति प्रतीतेरन्वयव्यतिरेकाभ्यां शरीरादिप्रतिभासाधीनत्वात्तद्गोचरो भेदस्तदुपाधिको न वास्तव इत्यर्थः । जाग्रत्स्वप्नयोरेकशरीरानवभासेऽप्यहम्प्रत्ययस्यैकरूपस्यानुवर्त्तमानत्वाद्विविक्तात्मैव तद्गोचरो वाच्यः तथा च तत्र प्रतीयमानभेदस्यौपाधिकत्वायोगात् स स्वाभाविक एवेत्यभिप्रेत्य परिहरति * न, अहमि-

( १ ) नियन्तुमिति ख० पु० पा०

प्रत्यक्षस्य शुद्धात्मविषयत्वेन तत्प्रत्याय्यभेदस्याप्यनौपाधिकत्वादिति, मैवं—

अप्रमाणं मनोरुक्तमयोग्यानुपलब्धिकम् ।

तीति * सिद्धान्ती मानाभावादयुक्तश्चेत्येतदुपपादयितुं भेदस्य प्रत्यक्षप्रमाणगोचरत्वमुक्तं तावदयुक्तमित्याह * मैवमिति * चाक्षुषत्वावच्छिन्नज्ञानं प्रति लाघवेनालोकस्यानुकूलत्वनिश्चयेनालोकाभावे चाक्षुषत्वायोगादनुपलब्धेरेव तत्र प्रामाण्यमावश्यकमिति तस्या एव प्रत्यक्षत्वेनाभिमताभावमात्रे प्रामाण्योपपत्तेर्नान्योन्याभावात्मकभेदे प्रत्यक्षप्रामाण्यं युक्तमिति भावः । यदवादि सुखाप्रामाण्यमिति तदप्ययुक्तमित्याह * अप्रमाणमिति * नास्ति प्रमाणं यस्मिंस्तदप्रमाणं न हि परोत्प्रेक्षितेऽणुपरिमाणवति क्रमिककार्यजननसमर्थे मनसि किञ्चित्प्रमाणं शक्यं निरूपयितुं सर्वेन्द्रियेषु तत्तद्विषयसम्बद्धेषु युगपदनेकज्ञानोत्पत्तेः केषु चित्प्रज्ञावत्स्वनुभूयमानतया तदनुत्पत्तिरूपलिङ्गस्यासिद्धेः सिद्धौ वा ज्ञानाश्रयस्यैव लाघवेन क्रमजननसामर्थ्यकल्पनया तदुपपत्तौ तत्समर्थधर्मिकल्पने गौरवात् शब्दादिज्ञानक्रमनियमस्य मनसः परमते श्रोत्रादिसंयोगनियमवददृष्टादेवोपपत्तेः सुखाद्यनुभवस्य च नित्यतया करणानपेक्षाया वक्ष्यमाणत्वात्कुतः परकीयमनःसिद्धिः कुतस्तरां तस्य प्रामाण्यं कुतस्तमां चात्मभेदस्य प्रत्यक्षप्रमाणगोचरतेति भावः । यद्वा श्रुत्यनुभवसिद्धमनसोऽङ्गीकारेऽपि क्वापि न तत्प्रमाणमित्याह * अप्रमाणमिति * मनो न प्रमाणं ऐन्द्रियकविशेषगुणजातीयानाश्रयद्रव्यत्वाद्दिक्कालवत् । अत्र परं प्रति विशेषगुणानाश्रयद्रव्यत्वादित्येव हेतुः । स्वमतेऽसाधारण्यनासिसिद्धिपरिहारायैन्द्रियकेत्यादिविशेषणम् । अथवा आत्मतद्धर्मगोचरानीश्वरसाक्षात्कारो न विशेषगुणशून्यप्रमाणजन्यः साक्षात्कारत्वात्सम्मतवत् ततश्च मनसोऽन्यत्राप्रसङ्गान्न क्वापि प्रामाण्यमिति सिसिद्ध्यति विपक्षे ग्राह्यसजातीयगुणानाश्रयस्यापि ग्राहकत्वे श्रोत्रादीनां नभस्त्वादिकं न सिद्ध्येदिति भावः । किं च मनो न भेदादौ प्रत्यक्षं प्रमाणं तदसन्निकृष्टत्वात् सम्मतवत् । न च हेत्वसिद्धिर्निरवयवात्मनि मनसः प्रदेशवृत्तिसंयोगासम्भवस्य वक्ष्यमाणत्वात्त-

सोपाधिकस्थो भेदो ऽयं नाध्यक्षमितिगोचरः ॥५॥

प्रमाणसहकारित्वाद्विषयस्याप्यभावतः ।

न प्रमाणं मनोऽस्माकं प्रमादेराश्रयत्वतः ॥ ६ ॥

मनो न प्रमाणं प्रमाणसहकारित्वात् कालादिवत्, प्रमा-

द्वित्वसम्बन्धान्तरस्याप्ययोगायुतसिद्धयोः समवायाभावादनवस्था-धापातेन तस्य ( १ ) काप्यसम्मतत्वाच्च विशेषणतादेः सन्निकर्षत्वेन. काप्यक्लृप्तत्वाच्चेत्यभिप्रेत्याह * असत्कमिति * किं चाभावग्राहकप्रत्यक्षसहकारितया पराभ्युपेतयोग्यानुपलम्भाभावाच्च न मनोऽभावरूपात्मभेदग्राहकं न च हेत्वसिद्धिः त्वन्मते सर्वगतात्माभेदस्यैव ब्रह्माभेदस्य परिच्छिन्नत्वादिभ्रमहेतुदोषादात्मनि सतोऽप्यनुपलम्भोपपत्तेर्विशुद्धचित्तस्य तु तदनुपलम्भोऽसिद्ध इत्यभिप्रेत्याह * अयोग्यानुपलब्धिकामिति * किं च स्थूलसूक्ष्मशरीरोपाधितादात्म्यापन्नात्मगततया भेदप्रतीतेर्वक्ष्यमाणत्वात्तस्य च रजततादात्म्यापन्नशुक्तीदमंशगतशुक्तिप्रतियोगिकभेदवन्न प्रत्यक्षप्रमितिगोचरतेत्याह * सोपाधिकस्य इति * ॥ ५ ॥

पूर्वोक्तहेत्वतिरिक्तहेतून् सङ्गृह्णन् मनसोऽप्रमाणत्वमुपपादयति * प्रमाणेति * विषयस्येत्यनन्यथासिद्धप्रमेयशून्यत्वादित्यर्थः । प्रमादेरित्यत्रादिपदार्थ इच्छादि, मनो न प्रमाकरणं तदाश्रयत्वात् प्रमातृत्ववत् स च केवलान्तःकरणातिरिक्तस्तत्तादात्म्यापन्नः सिद्धान्तेऽप्यस्तीति न दृष्टान्तासिद्धिः नापि परमते परमेश्वरे व्यभिचारः । न च प्रमाद्याश्रयत्वस्य मनस्यसिद्धिरिति वाच्यं। अहमुपलभे इत्याद्यनुभवेन ' तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्वं ' ' कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवे'त्यादिश्रुत्या बुद्ध्यादिगुणलिङ्गकपरिशेषानुमानेन च प्रमादेरहङ्कारात्मकमनोधर्मत्वस्य वक्ष्यमाणत्वादिति परमते मनसः प्रमाणत्वं प्रमाणाभावात्पारिभाषिकम् । अस्मिन्मते तु तदप्रमाणत्वमनेकप्रमाणसिद्धं न पारिभाषिकमिति भावेनास्माकमित्युक्तम् । पद्यस्याद्यपादं विवृणो-

( १ ) तस्य समवायस्य

णस्य चक्षुरादिवत्प्रमाणान्तरासहकारित्वात् बाधकस्य त-त्प्रयोज्यजातिविशेषस्यात्रापि तुल्यत्वात् न हि चक्षुरादि-जन्यरूपादिज्ञाने मानसत्वं कश्चिदनुभवति । न चाननु-

ति * मनो नेति * ननु न तावत्सकलप्रमाणसहकारित्वं हेतुः परमते मनसोपि प्रमाणत्वेन तत्र तत्सहकारित्वस्यासिद्धेः । नापि स्वव्यतिरिक्तसकलप्रमाणसहकारित्वं स्वव्यतिरिक्तत्वविशेषणस्य व्याप्तिग्रहानुपयुक्तत्वेनासिद्धिपरिहारमात्रप्रयोजनस्याप्रयोजकत्वात् । नापि किञ्चित्प्रमाणसहकारित्वं हेतुः एकत्र प्रमाणभूतस्याप्यन्यत्र प्रमाणसहकारित्वोपपत्तेरप्रयोजकत्वात् । अत एव सकलप्रमाजनकत्वं हेत्वर्थः इति निरस्तमिति तन्न । किञ्चित्प्रमाणसहकारित्वस्यैव हेतोर्विवक्षितत्वात् । यदुक्तं तस्याप्रयोजकत्वमिति तत्राह * प्रमाणस्येति * प्रमाणत्वपर्यवसानाधिकरणस्येत्यर्थः । यदि मनः प्रमाणं स्यात्तर्हि चक्षुरादिवत्प्रमाणसहकारि न स्यादिति हेतूच्छित्तिरेव विपक्षे बाधिकेति नाप्रयोजकतेत्यर्थः । ननु गन्धादिज्ञानेष्वयोग्यत्वादेव चक्षुरादेर्न सहकारित्वं तत्सन्निकृष्टार्थविशेषविषयशाब्दबोधादौ चाक्षुषत्वादिजातिविशेषापत्तिश्चक्षुरादिजन्यत्वे बाधिकेति न तच्चक्षुरादिसहकारीति वैषम्यमाशङ्क्याह * बाधकस्येति * रूपादिज्ञानस्य मनःकरणकत्वे सुखादिज्ञानवत्तत्रापि मानसत्वरूपजातिविशेषापत्तिर्बाधिकेति तुल्यतेत्यर्थः । इष्टापत्तिमाशङ्क्याह * न हीति * चाक्षुषादिज्ञाने मानसत्वरूपजातिविशेषः किमनुभवबलादभ्युपेयते उत मानान्तरात्, नाद्यः तत्र तदनुभवस्यानुपलब्धिपराहतत्वात् । वैशेषिकादिमते व्युत्पन्नैः सोऽनुभूयते इति चेन्न । वादिपरिकल्पितानुभवमात्राद्वस्तुसिद्धावतिप्रसङ्गात् । न द्वितीयः रूपादिज्ञाने मानसत्वजातिसाधकमानान्तरानिरूपणात् । न च मनःकरणकत्वादेव तत्र मानसत्वसिद्धिरिति वाच्यम्। हेतोरसिद्धत्वादन्योन्याश्रयात् । ननु सुखादिज्ञाने मनःकरणकज्ञानत्वान्मानसत्वं सिद्धं ततश्च क्लृप्तत्वान्मनसो रूपादिज्ञानेपि करणत्वं तथा च मनःकरणकज्ञानत्वान्मानसत्वसिद्धिरिति चेन्न । सुखादिज्ञानेऽपि मनःकरणकत्वस्य मानसत्वस्य च निराकरिष्यमाणत्वात् ।

भूयमानजातिविकल्पने किञ्चिन्मानमस्ति मनःप्रमाणत्वा-
भावस्याबाधितानुमानेन निश्चितत्वात् । मनसः सर्वज्ञा-
नकरणत्वे तदेव सर्वत्र प्रमाणम् चक्षुरादित्वालोकादि-
वत्सहकारिमात्रमित्येककरणतापत्तिः । ननु सुखादिप्रत्य-
क्षस्य परिशेषान्मन एव करणं एवं मनसा इदं पश्यामीत्य-

प्रत्युत वैपरीत्ये प्रमाणस्य निरूपितत्वादित्याह * मनः प्रमाणत्वेति *
विपक्षे बाधकान्तरमाह * मनस इति * सर्वत्रान्तर्बहिर्विषयेषु
मनस एव प्रमाणत्वे बहिर्विषयप्रमायामपि तदेव करणं स्यादिति ।
ननु चक्षुरादेः किं प्रयोजनं रूपादिज्ञाने चाक्षुषत्वादिजातिर्वा कथं
स्यादित्याशङ्क्याह * चक्षुरादि त्विति * रसनादिव्यञ्जकलालादिरा-
लोकादीत्यादिपदार्थः । रूपादिज्ञाने क्रियात्वप्रयुक्तकरणाकाङ्क्षाया
मनसैव शान्तत्वात् चक्षुरादेरालोकादिवन्मनःसहकारित्वमात्रत्वं
यद्यसाधारणकारणप्रयोज्यैव जातिर्ज्ञाने तर्हि ज्ञाने चाक्षुषत्वादिजा-
त्यभाव इष्ट एव । न च तदभावे चक्षुरादिजन्यत्वमालोकादिजन्यत्वं
वा तत्र दुर्ग्रहमिति वाच्यम् । रूपादिविषयसाक्षात्कारत्वादिना
तद्ग्रहोपपत्तेर्गौरवस्य प्रामाणिकतया अदोषत्वात् । न च ज्ञानाकरणत्वे
चक्षुरादेरिन्द्रियत्वानुपपत्तिरितिवाच्यम् । शरीरसंयुक्तत्वेन ज्ञान-
करणत्वादिना स्मृत्यजनकज्ञानजनकमनःसंयोगाश्रयत्वादिना वा तदु-
पपत्तेः । अत एव मनसो बाह्यप्रमाजनकत्वे यदेवासाधारणकारणं स-
हकारि तत्प्रमाणान्तरमिति निरस्तम् । आलोकादौ व्यभिचारादिति
भावः । सुखादिसाक्षात्कार इन्द्रियजन्यः जन्यसाक्षात्कारत्वात् रू-
पादिसाक्षात्कारवत् ततश्चक्षुरादीनां व्यवस्थितरूपादिविषयत्वादे-
कैकाभावेऽप्यन्धादिषु सुखाद्युपलब्धिदर्शनाच्च परिशेषात्तदतिरिक्त-
मनःप्रमाणसिद्धिरिति शङ्कामनुवदति * ननु सुखादीति * न के-
वलं सुखाद्युपलब्धावेव मनः करणं किन्तु रूपादिज्ञाने (१)ऽप्यनुभवो-
पपत्तिभ्यां मनसः करणत्वमुपेयमित्याह * एवं मनसेति * व्यास-
ङ्गो हीन्द्रियसन्निकर्षादौ सत्यपि सन्निकृष्टविषयज्ञानानुदयः सर्वस-

(१) रूपादिज्ञानव्यासङ्गानुपपत्तिभ्यामिति (ख०) पु० पा०।

नुभवात् व्यासङ्गानुपपत्तेश्च बहिरपि मनःकरणमिति चेन्न। सुखादिव्यवहारः स्वविषयज्ञानजन्यः व्यवहारत्वात्सम्म-

म्मतः तस्य चेन्द्रियेण सह संयोगरूपमनोव्यापाराभावमात्रप्रयोज्यत्वान्मनसो बाह्यज्ञानकरणत्वमणुत्वं चोपेयम । न च ज्ञानान्तरसामग्रीप्रतिबन्धादेव तदुपपत्तिरिति वाच्यम । विनिगमकाभावात् । करणव्यापाराभावादेव तदुपपत्तौ प्रतिबन्धकल्पनायोगाच्चेति भावः । सुखादिप्रत्यक्षस्य मनः करणमिति एतत्तावदयुक्तमिति दूषयति * नेति * सुखादिसाक्षात्कारस्येन्द्रियजन्यत्वे सिद्धे हि परिशेषान्मनस्तत्करणतया सिद्ध्येत् न चोक्तानुमानात्तत्सिद्धिः शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानजनकमनःसंयोगाश्रयत्वमिन्द्रियत्वमिति परेषामभ्युपगमान्मनसः सिद्धेः पूर्वमिन्द्रियत्वासिद्धौ इन्द्रियजन्यत्वानुमानायोगात् । न च शरीरयुक्तं ज्ञानकरणमतीन्द्रियमिन्द्रियमिति नोक्तदोष इति वाच्यम । चक्षुरादेस्तेन रूपेण रूपादिसाक्षात्कारजनकत्वस्याक्लृप्तत्वेन सुखादिसाक्षात्कारकरणस्य तेनाकारेणानुमानायोगात् परमते शरीरगतशैत्याभिव्यञ्जकव्यजनपवनादावीन्द्रियलक्षणस्यातिव्याप्तेर्वक्ष्यमाणविधया मनसो ज्ञानकरणत्वासम्भवेनाव्याप्तेश्च । नापीन्द्रियत्वं जातिस्तेजस्त्वादिना साङ्कर्यात् । न च तत्तद्व्याप्यमिन्द्रियत्वं नाना, इन्द्रियपदस्यानेकार्थत्वप्रसङ्गात् जन्यसाक्षात्कारमात्रेऽनुगतव्यापकाभावेन व्याप्तिग्रहायोगाच्च । ननु सुखाद्युपलब्धेः करणजन्यत्वमात्रं साध्यं ततो नोक्तदोष इति चेत् न, तथासति धर्मकल्पनालाघवेन देहादेरेव कस्य चित्करणत्वकल्पनोपपत्तेरर्थान्तरत्वात्करणव्यापारस्य करणान्तराजन्यतया कार्यमात्रस्य करणजन्यत्वानियमेनाप्रयोजकत्वाच्चेति भावः । किञ्च सुखादिसाक्षात्कारे जन्यत्वासम्प्रतिपत्तेर्विशेषणासिद्धो हेतुः तदुत्पत्त्याद्यनुभवस्यान्यथासिद्धेरनुपदमेव वक्ष्यमाणत्वात् प्रत्युत सुखादिसाक्षात्कारस्यानुमानादिनैकत्वसिद्धौ तदजन्यत्वमेव प्रामाणिकमित्याह * सुखादिव्यवहार इति * स्वविषयस्य ज्ञानं स्वविषयज्ञानं तज्जन्य इत्यर्थः । * व्यवहारत्वादिति * अर्थज्ञापनेच्छाधीनजडव्यवहारत्वादित्यर्थः तथा च सुप्तप्रलापादिव्यवहारे सुखादिसाक्षात्कारव्यवहारे च न व्यभिचारः । ननूक्तहेतोर्जन्यज्ञानैकत्वेन व्याप्त्यभावात् कथं

तद्वदित्यनुमानाल्लाघवाच्च तदेकं सिद्धं । न च दुःखादिप्रत्यक्षस्योत्पादविनाशानुभवविरोधः, दुःखादौ पृथक् तदुत्पत्तिविनाशानुभवयोरभावेन दुःखज्ञानं नष्टमित्याद्यनुभवस्य विषयविनाशादिमात्रविषयत्वात् । न च विनिगमकाभावः, सुखाद्यनुभवदशायां दुःखाद्ययोगात्प्रमाणा-

तदेकत्वसिद्धिरित्यत आह * लाघवादिति * क्षितिकर्त्रनुमानाल्लाघवानुगृहीताद्यथा तदेकत्वसिद्धिस्तथा व्यवहारलिङ्गादपि लाघवानुगृहीतात् तज्जनकज्ञानैक्यं तव कथं न सिद्ध्येदिति भावः।सुखादिसाक्षात्कारानुगतबुद्धिरपि स्वतो व्यक्तिभेदानिश्चयाल्लाघवात्तदेकत्वे प्रमाणमिति चार्थः।ननु दुःखप्रत्यक्षसमये सुखप्रत्यक्षनाशानुभवाद्यथार्थस्तत्प्रत्यक्षभेदासिद्धेरनुमानादेरनुभवबाध इति नेत्याह * नचदुःखादीति * किं दुःखाद्युत्पत्त्याद्यनुभवसमय एव तत्साक्षात्कारोत्पत्त्याद्यनुभूयत उत समयान्तरे, न द्वितीय इत्याह * दुःखादौ सतीति * यथा घटे सत्येवानन्तरं तज्ज्ञानस्योत्पत्त्याद्यनुभूयते नैवं दुःखादौ सति तत्साक्षात्कारोत्पत्त्याद्यनुभूयत इत्यर्थः । प्रथमे तूत्पादविनाशानुभवस्य दुःखाद्युपहितप्रत्यक्षगोचरतया तद्विशेषणीभूतदुःखादेरेव स्वाभाविकनाशादिविषयत्वेनापि तदुपपत्तेर्न तद्विरोध इत्याह * दुःखज्ञानमिति * दुःखादिदशायामिदानीं साक्षात्कारो नेति स्वरूपेण तन्नाशाननुभवात् परैर्विशिष्टनाशानभ्युपगमाच्च विशेषणीभूतदुःखादिनाशादेरेव रूपसम्बन्धो नष्ट इत्यादौ श्यामतादिनाशादिवदनुभूयत इत्यर्थः । ननु दुःखाद्यनुभव एव स्वत उत्पत्त्यादिमाननुभूयते दुःखादौ तु तदुपाधिकोत्पत्त्याद्यनुभव इति वैपरीत्यं किं न स्यादिति तटस्थशङ्कां निराकरोति * न चेति * स्यादेतदेवं यद्यनुभवस्वरूपवत्सुखाद्यनुभवसमयं दुःखाद्यनुवर्त्तेत न त्वेतदस्ति तदा तदननुभवात् दुःखादितारतम्यस्य साधनतारतम्याधीनतया स्वत एव तदुत्पत्त्यावश्यकत्वाच्चेत्याह * सुखाद्यनुभवेति * ननु सिद्धान्ते सुखस्य नित्यत्वेऽपि साधनतारतम्यादिना तदभिव्यक्तिमात्रस्य तारतम्यमाश्रीयते तथा दुःखादावपि किं न स्यादित्याशङ्क्या'नन्दाद्ध्येव खल्विमा-

भावाच्च, बुद्ध्यादिगोचरनित्यसाक्षात्कारस्यैकस्यानभ्युपगमे बुद्ध्यादेर्नियमेन मनसा ग्रहासंभवेन तद्दशायां मयेदमनुभूयते न वा इदानीं इदं इच्छामि न वेत्यादिसंशयः स्यात् ग्राह्यानिश्चयव्यतिरिक्तसंशयसामग्रीसत्वात्

नि भूतानि जायन्ते' 'यदेष आकाश आनन्दो न स्यात्' 'विज्ञानमानन्दं ब्रह्मे'त्यादिश्रुतिभिः परमप्रेमास्पदत्वलिङ्गेन सौषुप्तिकसुखानुभवेन च नित्यात्मन एव सुखत्वावधारणात्सुखस्य नित्यत्वे न तदभिव्यञ्जकबुद्धेरेव साधनपारतन्त्र्यादि युक्तं दुःखादेस्तु नित्यत्वे न किञ्चिन्मानमस्तीति स्वत एव तदुत्पत्त्यादिमदिति वैषम्यमभिप्रेत्याह * प्रमाणाभावाच्चेति * एवं तावज्जडात्मकबुद्धीच्छादिगोचरसाक्षात्कारनित्यत्वे बाधकाभावमुपपाद्य तदुत्पत्त्याद्यभ्युपगमे बाध(१)माह*बुद्ध्यादिगोचरेति * बुद्ध्याद्युत्पत्तिसमनन्तरमेव किं त्वयेदानीमिदं बुद्धं तवेदमिष्टं वेत्यादि परेण पृष्टस्य स्वबोधादौ न संशय इति सर्वजनीनः स च नियमेन संशयाभावो ग्राह्यनिश्चयनिर्वाह्यः इतरथा ग्राह्यानिश्चयादिसंशयसामग्रीसत्वेन तदभावानुपपत्तेः बुद्ध्याद्युत्पत्त्यनन्तरं च नियमेन मानसतन्निश्चयोपगमे मानसज्ञानानवस्था स्यात् न स्याच्चेष्टानिष्टज्ञानादिना सुखदुःखाद्युत्पत्तिः, अत एव बुद्ध्यादीनां स्वप्रकाशत्वं कल्प्यते इति चन्न। लाघवेन तद्गोचरचिदात्मन एकस्यैव स्वप्रकाशत्वे (२) तदुपपत्तौ बुद्ध्याद्यनन्तकार्यस्वप्रकाशत्वकल्पने गौरवात् इच्छादेरपि सविषयस्यार्थप्रकाशत्वप्रसङ्गेन बुद्धिवैजात्यायोगाच्च तस्माद्बुद्ध्यादिगोचरनित्यसाक्षात्कार एकोऽभ्युपेय इति भावः। किं च स्वप्ने बाह्येन्द्रियाणामुपरतत्वान्मनसश्च बहिरस्वातन्त्र्यात्तदा गजरथादेरपरोक्षतया सर्वानुभवसिद्धत्वात्तत्साधकनित्यानुभवोऽभ्युपेयः तथा सुप्तोत्थितस्य सुखमहमस्वाप्समिति परामर्शदर्शनात्स्वापे तन्मूलानुभवो नित्योऽभ्युपेयः तत्र सर्वेन्द्रियाणामुपरतत्वेन सुषुप्तिभङ्गप्रसङ्गेन 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति श्रुत्या चा-

---

(१) बाधकमिति ख० पु० पा०।

(२) स्वप्रकाशत्वेनेति ख० पु० पा०।

ततश्चावस्थात्रयानुयायिदुःखादिसाक्षात्कारस्य नित्यत्वान्न तत्र मनः करणं, मनसेदं पश्यामीत्यनुभवोपि तदावयो-र्मनो जानातीत्यनुभवात् 'कामः सङ्कल्पः' इत्यादिश्रुत्या च दर्शनाद्युपादानस्यापि मनस आत्मनि दर्शनाद्यारोपनि-मित्तत्वान्न विरुद्ध्यते, व्यासङ्गस्त्वात्मनि परस्य क्रमज्ञा-

नित्यज्ञानायोगात् ततश्च मनोग्राह्यतया शङ्क्यमानसमस्तभावाभावसा-क्षिणोऽवस्थात्रयानपायिनो नित्यानुभवादेव सर्वव्यवहारसिद्धेर्न क्वा-पि मनः प्रमाणमित्युपसंहरति * ततश्चेति * मनसोऽकरणत्वे म-नसेदं पश्यामीत्यनुभवो ' मनसा ह्येव पश्यतीति ' श्रुतिश्च विरुद्ध्ये-यातामित्याशङ्क्याह * मनसेदमिति * मनसेदं पश्यामीत्यनुभवोऽ-पिशब्दोपात्तोक्तश्रुतिश्च न विरुद्ध्यत इत्यन्वयः । तत्र हेतुः * म-नस इति * अयसि दग्धृत्वारोपे यथाऽग्निर्निमित्तं तथाऽऽत्मनि प्र-मातृत्वारोपे तदुपादानस्यापि मनसो निमित्तत्वान्मनसा पश्यामी-त्यादिव्यवहार इत्यर्थः । नन्वनुभवाद्यनुरोधाद्बुद्ध्यादौ मनसः क-रणत्वमेव किं न स्यादित्याशङ्क्य तस्य ज्ञानाद्याश्रयत्वस्यानन्यथासि-द्धानुभवागमाभ्यामवसितत्वान्मनसः प्रमातृत्वमेवोपेयमित्याह * तदावयोरिति * तदिति ज्ञेयमुच्यते आवयोर्मन इति प्रत्येकं मनः परं त्वन्मनो मन्मनश्च जानातीत्यर्थः । यदप्यचादि व्यासङ्गानुपप-त्त्या बाह्यविषयज्ञानकरणं मन इति तत्परमतेऽन्यथैवोपपत्त्या निराक-रोति * व्यासङ्गस्त्विति * चोऽवधारणे, परमते हि प्रथमज्ञानसमये धारावाहिकद्वितीयादिसमस्तज्ञानसामग्र्यां सत्यामप्यात्मनि क्र-मजननशक्त्यैव ज्ञानोत्पादक्रमस्य निर्वाह्यत्वादन्यथा धर्मधर्मिकल्प-नागौरवात् ततश्च तयैव व्यासङ्गोपपत्तौ न क्रमजननशक्तिमन्मनः करणं कल्प्यमित्यर्थः । सिद्धान्ते तु बुभुत्साघटितज्ञानान्तरसामग्री-प्राबल्येन तत्प्रतिबन्धादेव युगपच्छ्रोत्रसमवेतानेकशब्दाग्रहणवत् क्वचिन्मनःसङ्कोचादिन्द्रियसंयोगाभावाद्वा व्यासङ्गोपपत्तिरिति भा-वः । किं च यद्यहमनुभवगोचरोऽहङ्कार एवात्मा स्यात्तर्हि तदतिरिक्तं पराभिमतज्ञानकरणं मनः सिद्ध्येदपि नत्वेतदस्ति श्रुतिस्मृतिन्यायैरह-

नजननशक्त्याऽन्यथा चोपपद्यते इति न ततोऽपि मनः करणं। किं चाहमित्यनुभवस्यान्तःकरणविषयत्वं वक्ष्यते ततश्चाहं जानामीत्यहङ्कारधर्मतयाऽनुभूयमानं ज्ञानादि तद्धर्मएवेति न तत्र मनः करणमिति तन्न भेदे प्रमाणम् ॥ ७ ॥

किं च मनो न भेदे प्रमाणं तदसन्निकृष्टत्वात्सम्मतवत्, न चासिद्धिः।

संयोगादेरयुक्तत्वात्तदन्यस्याप्रसिद्धितः।
सन्निकर्षस्य तेनेदं भेदासङ्ग्येव मानसम् ॥८॥

मनसो भेदेन संयोगसमवायतादात्म्यानामन्यतमो नेति

ङ्कारानात्मताया वक्ष्यमाणत्वात्तस्यैव ज्ञानाद्याश्रयतयाऽनुभूयमानस्यात्मनि स्वधर्मारोपनिमित्तत्वेनान्तःकरणपदाभिलप्यस्य ज्ञानाद्युपादानत्वे (१) तत्करणत्वायोगान्न क्वापि प्रमाणत्वं तस्येत्याह * किं चाहमितीति * ॥ ७ ॥

एवमप्रमाणं मन इत्येतदुपपाद्यासक्तमित्येतत्प्रपञ्चयति * किञ्च मन इति * भेदे न प्रत्यक्षप्रमाणमित्यर्थः ततो नानुमानादौ हेतोर्व्यभिचारः। तत्रापि व्याप्त्यादिसन्निकर्षसत्त्वाद्यथाश्रुतं वा साध्यमस्तु। आत्मगतभेदे मनः प्रमाणमिति वदन्तं प्रति तेनासन्निकृष्टत्वादितिहेतुरसिद्ध इत्याशङ्क्य सन्निकर्षस्य निरूपयितुमशक्यत्वान्नैवमित्याह * न चेति * किं मनोभेदयोः संयोगसमवायतादात्म्यानामन्यतमः सन्निकर्षः तदन्यो वा, नाद्यः वक्ष्यमाणाबाधया तदसम्भवात्। न द्वितीयः तदन्यसन्निकर्षस्य क्वाप्यसिद्धेस्तेन नासिद्धो हेतुरित्यर्थः। श्लोकं विवृणोति * मनस इति * तदसन्नि-

(१) दानत्वेनेति ख० पु० पा०

सुप्रसिद्धं न चान्य इन्द्रियसन्निकर्षोऽस्ति, न चासन्निकृष्टमिन्द्रियमर्थं गृह्णाति विशेषणविशेष्येन्द्रियसन्निकर्षस्य जन्यप्रत्यक्षमात्रहेतुत्वात् । न च भेदस्य विशेषणता सन्निकर्ष इति वाच्यम् । व्यवहितप्रदेशेऽप्यभावग्रहणप्रसङ्गात् । न चाधिकरणेन्द्रियसन्निकर्षोपि कारणमिति वाच्यं । परमते शब्दाभावस्याप्रत्यक्षत्वप्रसङ्गात् । न च यत्र प्रति-

कृष्टत्वादिति हेतोरप्रयोजकत्वं निराकरोति * न चासन्निकृष्टमिति * हेतुत्वादित्यत्र सन्निकर्षाभावे मनसस्तज्जनकत्वानुपपत्तेरिति शेषः । ननु विशेष्यसन्निकर्षो विशेषणासंसर्गाग्रहश्च विशिष्टप्रत्यक्षहेतुर्न विशेषणसन्निकर्षः भेदश्चायमस्माद्भिन्न इति विशेषणतयैव भातीति चेन्न । लाघवेन यावद्विषयसन्निकर्षस्य तद्धेतुत्वेन विशेष्यसन्निकर्षत्वेनाहेतुत्वात् । किञ्च पर्वतादावसत्यपि वन्ह्यादिसन्निकर्षे वन्हिमानयं पर्वत इत्यादिप्रत्यक्षप्रसङ्गः । न च विशेषणोपस्थितिरपि विशिष्टबोधहेतुरिति वाच्यम् । एवमपि परमते गृहीतव्याप्तिकस्य वन्ह्यादावपि तत्सत्त्वाद्धेरे च निर्विकल्पकरूपायाः सविकल्पकरूपाया वा विशेषणोपस्थितेरनुपपत्तेः सन्निकर्षं विना तद्योगात्तत्रानुमानादेर्निराकरिष्यमाणत्वात्परोक्षोपस्थितेरप्यसम्भवादिति भावः । ननु भेदस्यान्योन्याभावात्मत्वादभावे च विशेषणतायाः सन्निकर्षत्वादसन्निकर्षासिद्धिरिति तत्राह * न च भेदस्येति * किमभावस्य विशेषणतामात्रं सन्निकर्षः इन्द्रियसन्निकृष्टाधिकरणविशेषणता वा किं वा यत्राधिकरणे प्रतियोगिसत्त्वमनुपलब्धिविरोधि स्यात्तद्विशेषणता, न तावदाद्यः कल्पोऽवकल्पते. कुड्यादिव्यवहितभूतलादिनिष्टघटाद्यभावेपि विशेषणतामात्रस्य सत्त्वेन प्रत्यक्षत्वप्रसङ्गादित्याह * व्यवहितेति * न द्वितीय इत्याह * न चाधिकरणेति * परमते कर्णावलयावच्छिन्ननभस एव श्रोत्रेन्द्रियत्वात्तस्यैव स्वग्राह्यशब्दाभावाधिकरणत्वात्तथेन स्वस्यासन्निकर्षादधिकरणेन्द्रियसन्निकर्षाभावेन शब्दाभावे प्रत्यक्षत्वं न स्या-

योगिनः सत्वमनुपलब्धिविरुद्धं तद्विशेषणाभावस्येन्द्रियप्रत्यासत्तिरितिवाच्यम् । कदा चिदुपलम्भस्य व्यवहितदेशस्थघटादेरपि सत्वात् नियमेनोपलम्भस्य शब्दादेरप्यभावात्; विशेषणताया इन्द्रियप्रत्यासत्तित्वे प्रमाणाभावाच्च, अनुपलब्धिमात्रादप्यभावज्ञानोपपत्तेः ज्ञानाकरणक-

दित्यर्थः । तृतीयं निराकरोति * नच यत्रेति * प्रतियोगिसत्वस्यानुपलब्धिविरोधित्वं नाम उपलभ्यमानत्वं तस्य किं यदा कदाचिज्ज्ञानोऽपेक्षित उत नियमेन, आद्य व्यवहितेऽप्यभावाधिकरणे कदाचिदुपलम्भसम्भवात् प्रतियोगिनस्तत्र व्यवधानसमयेऽप्यभावः प्रत्यक्षः स्यादित्याह * कदाचिदिति * द्वितीयस्त्वयुक्त इत्याह *नियमेनेति* श्रोत्रदेशे भूतलादौ वा शब्दस्य घटादेर्वा सत्वेऽपि सामग्र्यभावादिनाऽनुपलम्भसम्भवेन (१)नियमेन तदुपलम्भायोगात्तत्र तदभावो न प्रत्यक्षः स्यादित्यर्थः । विशेषणतायाः क्वचिदिन्द्रियप्रत्यासत्तित्वमुपेत्यैतदुक्तं, सम्प्रति अङ्गीकृतं परित्यजति * विशेषणताया इति * ननु कादाचित्काभावानुभवस्य करणसापेक्षत्वात्तत्र चेन्द्रियातिरिक्तकरणासम्भवात्तस्य च प्रत्यासत्तिं विना करणत्वायोगात् परिशेषाद्विशेषणता तत्र प्रत्यासत्तिरित्याशङ्क्य तत्र करणान्तराभावोऽसिद्ध इत्याह * अनुपलब्धिमात्रादिति * मात्रचा करणान्तरं व्यावर्त्यते । नचैवं भेदस्याप्यनुपलब्धिप्रमाणकत्वे षट्प्रमाणवादिनामिष्टमेव सिद्धमितिवाच्यम् । तत्र योग्यानुपलब्धेरप्यनन्तरमेव निराकरिष्यमाणत्वादिति भावः । नन्वभावज्ञानस्य ज्ञानाकरणकज्ञानत्वेन प्रत्यक्षत्वानुमानादिन्द्रियजन्यत्वं दुर्वारमित्याशङ्क्याह * ज्ञानाकरणकस्येति* परमते स्मृतिरूपपरामर्शजन्यानुमितौ ज्ञानस्य करणत्वासम्भवान्मन एव वा परामर्शप्रागभावो वा ऽनुमितौ ज्ञानद्वारा करणमिति कैश्चिदभ्युपगमात् ज्ञानाकरणिकाया अप्यनुमितेः परोक्षत्ववत्सिद्धान्तेऽपि संस्कारकरणिकायाः स्मृतेः परोक्ष-

(१) नियमेनेति ख० पु० नास्ति ।

स्यापि मनःकरणकानुमितिवदप्रत्यक्षत्वसम्भवात् क्वचिदिन्द्रियव्यापारस्याधिकरणग्रह एवोपक्षयात् । न च प्रमाणान्तरकल्पनागौरवं, त्वया ऽपि तस्या अभावज्ञाने निमित्ततायां अभ्युपेतत्वात् विशेषणताया अपीन्द्रियप्रत्या-

त्त्ववच्चाभावज्ञानस्यापि परोक्षत्वोपपत्तेर्नेन्द्रियजन्यतेत्यर्थः । घटाद्यभावानुभवस्य चक्षुराद्यजन्यत्वे तदन्वयव्यतिरेकानुविधानविरोधमाशङ्क्य शब्देतरेन्द्रियग्राह्यप्रतियोगिकाभावस्येन्द्रियेणाधिकरणग्रहणे सत्येवानुपलम्भेन ग्रहणात्तदन्वयव्यतिरेकयोरन्यथासिद्ध्या न विरोध इत्याह * क्वचिदिन्द्रियेति * शब्दाभावस्तु सति प्रतियोगिज्ञाने योग्यानुपलब्धित एव गृह्यत इति न तद्ग्रहे श्रोत्रं हेतुः साक्षिमात्रग्राह्यप्रतियोगिकाभावस्तु तत्प्रतियोगिविरोधिसत्त्वलिङ्गेन वा साक्षिणैव वा गृह्यते अभावस्यापि साक्षिमात्रभास्यत्वमुक्तमाचार्यैः 'स्वप्ने जागरिते सुप्तौ भावाभावौ धियां तथा । यो वेत्त्यविक्रियः साक्षी सोऽहमित्यवधारयेत्' ततश्च क्वचिदपीन्द्रियस्याभावधीहेतुतैव नेति भावः। नन्विन्द्रियस्यान्यथासिद्ध्यापादनेनानुपलब्धेरेवाभावानुभवकरणत्वाभिधानेऽनुपलब्ध्याख्यप्रमा(१)णान्तरकल्पनागौरवप्रसङ्ग इति नेत्याह * न च प्रमाणान्तरेति * हेतुमाह * त्वयाऽपीति * अभावस्येन्द्रियग्राह्यत्ववादिनाऽप्यनुपलब्धेस्तद्ग्रहे निमित्तत्वोपगमात् तस्यास्तत्रासाधारणनिमित्ततया करणत्वमप्यनुक्तसिद्धमेवेति नास्माकमधिकं कल्पनीयमस्ति । न च व्यापाररहिताया अनुपलब्धेरभावग्रहे करणत्वमनुपपन्नमिति वाच्यम् । परमतेऽपि शब्दप्रागभावादिग्रहे श्रोत्रस्य व्यापाराभावेनाकरणत्वप्रसङ्गात् व्यापाराभावेऽपि केनचिदतिशयेन साधकतमत्वात्करणत्वमनुपलब्धावपि तुल्यमिति भावः । स्वमते कल्पनागौरवं परिहृत्य परमते तत्प्रसङ्गो दुर्वार इत्याह * विशेषणताया इति * ननु समवायस्याद्रव्यस्येन्द्रियेण संयोगायोगात्स्ववृत्तित्वविरोधेन समवायासम्भवाच्च विशेषणताया एव तत्र प्रत्यासत्तित्वं कल्प्यमित्यभावेऽपि तस्यास्तदुपपत्तौ नापूर्वाधिककल्प-

(१) प्रमाणं तदूक इति क पु० पा० ।

सत्तित्वज्ञानहेतुत्वयोः कल्प्यत्वात् । न च समवायप्र-
तीतौ तत्क्लृप्तमिति वाच्यम् । तदसम्प्रतिपत्तेः. तादा-

नेत्याशङ्क्य प्रमाणाभावात्समवाय एव तावदसिद्धः तत्र विशेषणतादेः प्रत्यासत्तित्वं सुतरामसिद्धमित्यभिप्रेत्याह * न च समवायेत्यादिना * ननु रूपी घट इत्यादिविशिष्टप्रत्ययस्य दण्ड्यादिप्रत्ययवत्सम्बन्धिद्वयातिरिक्तवैशिष्ट्यविषयत्वावधारणाद्गुणादौ च संयोगासम्भवात्परिशेषात्समवायसिद्धिरिति चेन्न । गुणगुणिनोरवयवावयविनोश्चात्यन्तभेदे तत्सम्बन्धस्य च ताभ्यामत्यन्तभेदे दण्डपुरुषादाविव शुक्लः पटः सुवर्णं कुण्डलमित्यादिसमानाधिकरणप्रत्ययानुपपत्तेः । किं च समवायस्य सम्बन्धिभ्यामसम्बद्धस्यैव विशिष्टप्रत्ययनियामकत्वेऽतिप्रसङ्गात्तत्रापि सम्बन्धान्तरोपगमेऽनवस्थाप्रसङ्गात्स्वरूपसम्बन्धस्य च निरसिष्यमाणत्वात् तस्य च क्वचिद्विशिष्टधीनियामकत्वे गुणगुण्यादावपि तस्यैव नियामकत्वोपपत्तौ समवायकल्पनायोगाच्च । किं च समवायस्यैकत्वे रूपज्ञानादिसमवायस्य वायुघटादिवृत्तिसमवायादभेदाद्रूपी वायुः घटो जानातीत्यादिधीप्रसङ्गः । न च वाय्वादौ रूपादिसमवाये सत्यपि रूपादेरभावान्न तद्विशिष्टधीरिति वाच्यम् । तद्वृत्तित्वप्रयोजकसम्बन्धे सति तदभावव्यवहारस्य व्याहतत्वात् समवायनानात्वकल्पनं त्वतिजघन्यत्वादुपेक्ष्यं । एवं मृद्घटादेरत्यन्ताभेदेऽप्यपुनरुक्तशब्दद्वयावगाहिसमानाधिकरणप्रत्ययानुपपत्तिः कार्यकारणभावाद्यनुपपत्तिश्च तस्मात्तादात्म्यमेवावयव्यादीनां सम्बन्धः तच्च न भिन्नाभिन्नत्वं विरुद्धयोर्भेदाभेदयोरेकत्रासम्भवात् अविरोधे च भेदाविरुद्धेऽभेदसंज्ञायाः पारिभाषिकत्वेनात्यन्तभेदवादिमताद्विशेषायोगात् किं तु भिन्नत्वे सत्यभिन्नसत्ताकत्वं तादात्म्यं तच्चानिर्वचनीयं स एव च समानाधिकरणप्रत्ययगोचर इति न समवायः प्रामाणिक इति भावः । ननु शुक्लो घट इत्यादिरूपेण तादात्म्यस्यापीन्द्रियग्राह्यत्वात्तत्र प्रत्यासत्त्यन्तराभावाद्विशेषणतायाः प्रत्यासत्तित्वं दुर्निवारमिति नेत्याह * तादात्म्ये चेति * अभिन्नसत्ताकसम्बन्धिद्वयाभिव्यक्तसाक्षिमात्रभास्यत्वस्य शुक्तिरजततादात्म्यादौ क्लृप्तत्वात् गुणगुण्यादितादात्म्यस्यापि साक्षिमात्रभास्यत्वसम्भवात् इन्द्रियस्य च सम्बन्धिग्रह एवान्यथासिद्ध-

त्म्ये च न प्रत्यासत्त्यन्तरमपेक्ष्यते तस्य साक्षिभास्यत्वात्, निरवयवात्मनि संयोगासम्भवाच्च न भेदस्येन्द्रियसन्निकृष्टत्वं, एकत्र संयोगतदभावायोगात् वृक्षादावपि औपाधिकभेदवत्त्येव तदुभयप्रतीतेः अग्रे वृक्षः कपिसंयोगवान्मूले नेत्यनुभवात् । न च परमते तदभिन्ने तद्भेदः स-

त्वाच्च सम्बन्धिप्रत्यासत्त्यतिरिक्तप्रत्यासत्तेस्तादात्म्ये ऽनपेक्षणाद्विशेषणता न तत्रापि प्रत्यासत्तिरिति भावः । किञ्च विशेषणतामात्रस्यातिप्रसक्तत्वेनेन्द्रियप्रत्यासत्तित्वायोगादिन्द्रियसंयुक्तत्वादिघटितायास्तस्याः प्रत्यासत्तित्वं वाच्यम् संयोगस्य च प्रदेशवृत्तित्वनियमान्निष्प्रपञ्चात्मनि च मनः संयुक्तत्वासम्भवात्तद्गते च भेदे मनः सन्निकर्षाभावान्न तद्ग्राह्यतेत्याह * निरवयवात्मनीति * निरवयवे संयोगः किमव्याप्य वर्त्तते उत व्याप्य, नाद्यः निरवयवे संयोगस्य स्वात्यन्ताभावसमानाधिकरणत्वातिरिक्ताव्याप्यवृत्तित्वस्यानिरूपणात्तस्य च भावाभावयोरेकत्राविरोधेनासम्भवात् विरोधे वा विरोधवार्त्तायाः सर्वत्रोच्छेदप्रसङ्गात् तयोरविरोधे नियामकाभावेन व्याप्यवृत्तित्वापाताच्चेत्यभिप्रेत्याह * एकत्रेति * ननु भावान्तराणां स्वाभावसामानाधिकरण्यविरोधेपि संयोगादीनां तदविरोधः एकस्मिन्नेव वृक्षादौ कपिसंयोगतदभावयोः सर्वानुभवसिद्धत्वादिति नेत्याह * वृक्षादाविति * वृक्षस्य स्वत एकत्वेऽप्यग्रमूलाद्यवयवभेदाधीनभेदवत्त्वादौपाधिकभेदवतोरेव वृक्षयोः संयोगतदभावाधिकरणत्वं (१) भावाभावयोः सर्वत्र विरुद्धमेवेत्यर्थः । एकस्मिन्नौपाधिकभेदं साधयति * अग्रे वृक्ष इति * न च मूले कपिसंयोगवानित्यनुभवात्संयोगात्यन्ताभाव एव प्रतीयते न तु संयोगवद्वृक्षभेद इति वाच्यम् । संयोगिनः प्रतियोगित्वानुभवाविरोधात् विशिष्टप्रतियोगिकभेदप्रतीतेर्विशेषणाभावविषयत्वे घटः पटो नेत्यादिभेदप्रतीतेरपि घटादौ पटत्वाद्यभावविषयत्वोपपत्तेर्भेदो दत्तजलाञ्जलिः स्यात् । तर्ह्येकस्मिन्नात्मनि औपाधिकभेदेन मनःसंयोगतदभावौ स्तामित्याशङ्का-

(१) धिकरणत्वा देकाधिकरणत्वमिति क० पु० अधिकं वर्त्तते।

म्भवति सिद्धान्ते च कल्पितप्रदेशवृत्तिसंयोगस्य प्रमा-
हेतुत्वं न सम्भवति। नचैकस्मिन्नप्यवच्छेदकभेदादेव भा-
वाभाववृत्तिरिति वाच्यम्। अधिकरणभेदाभावे तदभा-
ववदवृत्तित्वघटितावच्छेदकत्वस्याग्रत्वादेरयोगात्। तद-
धिकरणवृत्तित्वस्य प्रमेयत्वादिसाधारण्यात् संयोगस्य

ह * न च परमते इति * भेदादिकं वास्तवमिति मते तदभिन्ने त-
स्मिन्वास्तवभेदायोगात् अत्यन्तभेदवादिभिरव्याप्यवृत्तिभेदानङ्गी-
काराच्चेति भावः। ननु परमते निरवयवात्मनि संयोगासम्भवेपि
सिद्धान्ते तत्तदुपाधिपरिकल्पितात्मप्रदेशभेदेन मनःसंयोगसम्भवा-
त्तन्निमित्तो जीवपरभेदः प्रमा स्यादित्याशङ्क्याह * सिद्धान्ते चेति *
मिथ्याभूतप्रदेशभेदसापेक्षस्य मनःसंयोगस्यापि मिथ्यात्वात्तस्य बा-
ष्पधूमादिवत्प्रमापकत्वं न सम्भवति। नचैवं वेदान्तानां प्रमापक-
त्वानुपपत्तिरिति वाच्यम्। तेषां स्वरूपेण कल्पितत्वेऽप्यर्थक्रियास-
मर्थत्वादपौरुषेयतया निरस्तसमस्तकलङ्काशङ्कानां स्वार्थे बाधकाभावे-
न यादृच्छिकसंवादिलिङ्गविभ्रमवत् प्रमापकत्वोपपत्तेः भेदज्ञानस्य
तु कल्पितसामग्रीप्रसूतत्वाच्छ्रुतिन्यायापहृतविषयत्वाच्चेति प्रमात्व-
मनुपपन्नमिति भावः। ननु संयोगतदभावयोर्नाधिकरणभेदनियम-
स्तयोरवच्छेदकभेदेनैकत्राप्यविरोधादेकस्मिन्नपि वृक्षादावग्रत्वमूल-
त्वाद्यवच्छेदकभेदात्कपिसंयोगादिदर्शनादात्मन्यपि शरीराद्यवच्छे-
दकभेदान्मनःसंयोगाद्युपपत्तिरिति नेत्याह * नचैकस्मिन्निति * अ-
ग्रत्वादेः संयोगाधिकरणतावच्छेदकत्वं नाम किं तदभाववदवृ-
त्तित्वे सति तदाश्रयवृत्तित्वमुत तदाश्रयवृत्तित्वमात्रं, नाद्यः सं-
योगतदभावयोरधिकरणभेदाभावे संयोगाधिकरणस्यैव तदभावा-
धिकरणत्वाश्रयत्वात् संयोगाधिकरणत्वाश्रयवृत्त्यग्रत्वादेस्तदभाव-
वदवृत्तित्वायोगादित्याह * अधिकरणेति * न द्वितीयः अति-
व्याप्तेरित्याह * तदधिकरणेति * एवं निरवयवे संयोगस्या-
व्याप्यवृत्तित्वं निराकृत्याधुना व्याप्यवृत्तित्वकल्पं निराकरोति *
संयोगस्येति * किं सर्वस्य संयोगस्य व्याप्यवृत्तित्वमभिमतं उत

व्याप्यवृत्तित्वमनुभवपराहतमसम्भवि च, तथात्वे शब्दादेः सर्वत्र प्रतीतिप्रसङ्गाच्च । तस्मान्न मनसो भेदेन सम्बन्धः नापि मनसः सहकारी योग्यानुपलम्भोऽस्ति ईश्वरस्य प्रत्यक्षायोग्यत्वात् प्रत्यक्षयोग्यस्यानुपलब्धिर्हि योग्यानुप-

निरवयववृत्तेः, नाद्यः अणुद्वयेनादिसंयोगानां व्याप्यवृत्तित्वस्यानुपलब्धिपराहतत्वादसम्भवाच्च, न द्वितीयः परमते परमाणुसंयोगस्य परमाण्वन्तरव्यापित्वे द्व्यणुके प्रथिमानुपपत्तेः । किञ्च परिच्छिन्नापरिच्छिन्नद्रव्यसंयोगस्य परिच्छिन्नव्यापित्वे ऽप्यपरिच्छिन्नव्यापित्वादर्शनादन्यथा नीरक्षीरवदुभयोरपि समा व्याप्तिः स्यादिति भावः । संयोगस्य व्याप्यवृत्तित्वे बाधकान्तरमाह * तथात्वे इति * कर्णशष्कुलीसंयोगावच्छिन्ननभस एव परमते श्रोत्रेन्द्रियतया शब्दग्राहकत्वाङ्गीकारात्तत्संयोगस्य च नभोमात्रव्यापित्वे कृत्स्नस्य नभसः श्रोत्रत्वापातेन तन्निष्ठानां सर्वेषां शब्दतद्भावानां उपलम्भप्रसङ्गः निमि(१)तत्संयोगावच्छेदेनोत्पद्यमानशब्दस्याव्याप्यवृत्तित्वं च न स्यात्, अत एव कर्णगोलकस्य सर्वत्राभावान्न सर्वशब्दोपलब्धिरितिनिरस्तम् । तथापि व्यापिसर्वशब्दोपलम्भस्य दुर्वारत्वात् गोलकसंयोगस्य रूपज्ञाने व्यभिचारेण सतीन्द्रियसन्निकर्षे केवलव्यतिरेकाभावेन हेतुत्वायोगा दिति भावः । मनो न भेदे प्रमाणं तदसन्निकृष्टत्वादित्येतदुपसंहरति *तस्मादिति * अयोग्यानुपलब्धिकामित्येतद्विवृणोति * नापि मनस इति * उपलब्धुं प्रत्यक्षेणावगन्तुं योग्यस्य प्रतियोगिनोऽनुपलम्भो योग्यानुपलम्भः सोऽभावरूपभेदग्राहकेन्द्रियस्य सहकारी वक्तव्यः स मनसेश्वरभेदग्रहे न सम्भवति तत्प्रतियोगिन ईश्वरस्य प्रत्यक्षायोग्यत्वादित्यर्थः । ननु-योग्यत्वमनुपलब्धेरेव विशेषणं तच्चानुपलब्धेस्तद्ग्राह्याभावप्रतियोगितद्व्याप्येतरसकलतदुपलम्भककालीनत्वमेवेति नवीनोत्प्रेक्षितमाशङ्क्य प्रतियोगिप्रत्यक्षज्ञानजनकस्य तदुपलम्भकपदाभिलप्यत्वात्तत्प्रत्य-

( १ ) निमित्तं भेरी तत्संयोगावच्छेदेन ।

लब्धिः प्रतियोगितद्व्याप्येतरसकलतदुपलम्भककालीनानुपलब्धेश्चात्रासम्भवात् घटे मनस्त्वं नास्तीति ज्ञानं च परमाणुत्वं नास्तीति ज्ञानवन्नप्रत्यक्षं, न हि मनसो घटभेदाप्रतिसन्धानदशायां तदनुभवोऽस्ति, अत एवातीन्द्रिये

स्त्वमभावप्रत्यक्षत्वे तन्नं स्यादित्युक्तदोषानिस्तार इत्याह * प्रतियोगीति * प्रतियोगिनोऽप्रत्यक्षत्वे ऽप्यभावप्रत्यक्षत्वदर्शनात् प्रतियोगिप्रत्यक्षत्वं तत्र न तन्त्रमिति प्रागुक्तं निराकरोति * घटे मनस्त्वमिति * यद्यपि पराभिमतपरमाणुत्वोपाधेर्धर्मिप्रत्यक्षत्वेन प्रत्यक्षत्वमापादयितुमशक्यं मनस्त्वस्य तु जातित्वात्तदापादनं सुकरमिति पराभिमानस्तथापि (१) तदुभयाभावेपि साक्षात्करोमीत्यनुभवाभावेन तदप्रत्यक्षत्वमेव युक्तं न हि परोत्प्रेक्षितसामग्रीमात्रान्मनस्त्वाभाव एव प्रत्यक्ष इति स्वीकारो युक्तोऽनुपलब्धिविरोधादिति भावः। घटे मनस्त्वाभावस्याप्रत्यक्षत्वे हेत्वन्तरमाह * न हि मनस इति * घटस्य मनसः सकाशाद्भेदाप्रतिसन्धानदशायां घटे मनस्त्वसंशयविपर्यययोरन्यतरापातेन घटे तदभावनिश्चयायोगात् घटमनसोर्भेदनिश्चयदशायामेव घटे मनस्त्वाभावानुभवो वाच्यः तदा(२) च भेदप्रतियोगितावच्छेदकमनस्त्वाभावस्य तद्धर्मिण्यार्थिकत्वान्न प्रत्यक्षत्वं कल्प्यमिति भावः। भेदप्रतिसन्धानदशायां भेदप्रतियोगितावच्छेदकधर्माभावस्य भेदधर्मिण्यार्थिकत्वे गमकमाह * अत एवेति * परमते परमाण्वादौ घटत्वाद्यभावस्य प्रतियोगिव्याप्येतरसकलतदुपलम्भकसमवधाने ऽपि प्रत्यक्षत्वं नोपेयते तत्कस्य हेतोः तथा ऽनुभवाभावात् घटपरमाण्वादीनां भेदप्रतिसन्धानदशायामेव परमाण्वादौ घटत्वाभावानुभवेन तत्र तस्यार्थिकत्वोपपत्तेश्च, एवं प्रत्यक्षेपि धर्मिण्यतीन्द्रियधर्माभावः परोक्ष एवेत्यर्थः। एवमतीन्द्रियप्रतियोगिकात्यन्ताभावग्रहे योग्यानुपलम्भं निरस्य (३) तदन्योन्याभावरूपेश्वरभे-

---

(१) परमाणुत्वमनस्त्वयोरुभयोरभावमध्ये एकस्यापीत्यर्थः।
(२) तथाच इति ख० पु० पा०। (३) अतीन्द्रियेत्यर्थः।

घटत्वाद्यभावो न प्रत्यक्षः, न च नाहमीश्वर इति भेदप्रतीतिदशायामीश्वरोपलम्भकसमवधानमस्ति तत्कालीनमनआदेस्तदयोग्यत्वात् । यत्तु यत्र यत्सत्त्वमनुपलब्धिविरोधीत्यादि योग्यानुपलब्धिनिर्वचनं, तदसत् । यत्र कुत्र चित्प्रतियोगिसत्त्वस्यान्यत्रोपलम्भाव्याप्तत्वेनाभावदेशीयं तत्सत्वं तद्व्याप्यं वक्तव्यं तच्च न सम्भवति अभावाधिकरणे प्रतियोगिवैशिष्ट्यसत्वेऽभावप्रमानुपपत्तेः। तर्कितं तत्र तद्विरोधीति चेत्तर्कितस्यापि सत्त्वासत्त्वान्यतरत्वात्। तत्रासदप्यन्यत्र सदिति चेत्तर्हि तत्रैव तद-

दग्रहेपि स नास्तीत्याह * न च नाहमीश्वर इति * तत्र हेतुः * तत्कालीनेति * भेदधीपूर्वक्षणे सतोऽपि मनश्चक्षुरादेरतीन्द्रियेश्वरग्रहायोग्यतया प्रतियोग्युपलम्भकाभावान्न तत्र विवक्षितयोग्यानुपलम्भ इत्यर्थः । इदानीं नवीनतरोत्प्रेक्षितमनूद्य दूषयति * यत्त्वित्यादिना * साक्षादभावविरोधित्वं प्रतियोगिन एव अन्यस्य तु तत्प्रतियोगिव्याप्यत्वेनेति सर्वत्र स्थितिः तथाच प्रतियोगिसत्त्वस्यानुपलब्धिविरोधित्वं तत्प्रतियोग्युपलब्धिव्याप्यत्वेनैवेति वक्तव्यं एवं चान्यत्र प्रतियोगिसत्त्वस्याभावस्थलीयोपलम्भाव्याप्तत्वेन तत्रत्यानुपलम्भविरोधित्वायोगात् यत्र यत्सत्त्वमित्यादि वदताऽभावाधिकरण एव प्रतियोगिसत्त्वं तदुपलम्भश्च वाच्यः ततश्च नाभावधीसम्भव इति वरघातायकन्यावरणमिति न्यायापात इति भावः । ननु यत्र यत्सत्त्वमित्यत्र तर्कितमिति विवक्षितत्वादभावाधिकरणे न प्रतियोगिसत्त्वापात इति शङ्कते *तर्कितमिति* तर्कितप्रतियोगिसत्त्वस्यापि तत्र सत्त्वमसत्त्वं वा वक्तव्यं परमते प्रकारान्तराभावात्, तत्राद्ये पूर्वोक्तदोषानिस्तारः, द्वितीये त्वसतोऽनुपलब्धिविरोधित्वमसम्भवीत्यभिप्रेत्य दूषयति * तर्कितस्यापीति * ननु प्रतियोगिवैशिष्ट्यस्यान्यत्र सत्त्वादनुपलब्धिविरोधित्वमभावाधिकरणे चासत्त्वादनुपलम्भश्च त-

नुपलब्धि(१)विरुद्धं नाभावाधिकरणे, क्वचिदनुपलम्भविरो(२)धेनान्यत्राभावानिरूपणेऽतीन्द्रिये घटत्वाद्यभावः प्रत्यक्षः स्यात् अभावाधिकरणे प्रतियोगिवैशिष्ट्यं असत्वादेव नानुपलम्भविरोधि, न वाऽसता किञ्चिन्निरूप्यते। न च यत्र यत्सत्वापादनेनानुपलम्भाभाव आपादयितुं शक्यते तत्र तदभावः प्रत्यक्ष इति वाच्यम्। असताऽऽ-

तश्चाभावधीरिति शङ्कते * तत्रासदपीति * किमभावाधिकरणे प्रतियोगिवैशिष्ट्यस्यानुपलब्धिविरोधित्वमभावप्रत्यक्षत्वे प्रयोजकमुत यत्र कुत्र चित् तत्राद्यमसम्भवेन निराकरोति * तर्हीति * द्वितीयमतिप्रसङ्गेन दूषयति * क्वचिदनुपलम्भेति * किं चास्मिन्पक्षेऽतीन्द्रियेश्वरादितादात्म्यस्य कुत्रापि अनुपलम्भविरोधित्वाभावात्तदभावरूपो भेदो न प्रत्यक्षः स्यादिति द्रष्टव्यं। अभावाधिकरणे प्रतियोगिवैशिष्ट्यस्यासत्वेऽपि तदुपलम्भकस्य सत्वादनुपलब्धिविरोधित्वमित्याशङ्क्यासतः समस्तसामर्थ्यविकलतया तदधीनं किमपि न सम्भवतीत्याह * अभावाधिकरण इति * किञ्चिन्नयाप्त्यादि, ततश्चाव्याप्त्येन तेन न किञ्चिदापादनीयमितिभावः। नन्वभावाधिकरणे प्रतियोगिवैशिष्ट्यस्यासतः स्वरूपेणानुपलब्धिविरोधित्वं न ब्रूमो येनोक्तदोषः स्यात् किं तु तत्र तस्यारोपितस्य प्रतियोग्यनुपलम्भाभावरूपोपलम्भापादकत्वेन, ततश्च तत्र तर्कितप्रतियोगिसत्वेनापादनयोग्योपलम्भाभाव एव योग्यानुपलम्भ इति नवीनतमानां कल्पनां निराकरोति *न च यत्रेति* आपादनेन आरोपेणाभावाधिकरणे प्रतियोगिसत्वस्यापादितस्याऽऽप्यसत्वाविशेषान्न तदुपलभापादकं क्वचिदपि सम्भवति अतस्तच्छक्तिरपि नेत्याह * असतेति * न चैवं सति वन्ह्यभावेनापादितेन पर्वतादौ धूमाभावापादनमपि न स्यादिति वाच्यम्। तत्रापि वन्ह्यभावविकल्पे सति धूमाभावविकल्पमात्रोदयो न क-

(१) पलब्धिविरुद्धतां इति ख० पु० पा०।
(२) विरोधिना इति ख० पु० पा०।

पादितेन वैशिष्ट्येनान्यापादनायोगात् प्रतियोगिवैशिष्ट्यमात्रेणाभावाधिकरणे तदुपलम्भप्रसञ्जनायोगात् अभावग्राहकेण पुंसाऽन्यदेशीयप्रतियोगिवैशिष्ट्यस्याग्रहणेन तस्यानुपलब्धिविरोधाभावाच्च । किं चापादनशक्तिः प्रमेयगता व्याप्तिः तज्ज्ञानं वा नान्यत्, न चासद्वैशिष्ट्य-

स्य चिदापादकत्वाद्यस्ति, नचानिर्वचनीयवादिना तदुपपादनीयमिति भावः । किञ्चाभावाधिकरणे प्रतियोगितद्व्याप्येतरसकलतदुपलम्भकसामग्र्यां सत्यामेव किं तत्र तत्सत्त्वमापादितं तदुपलम्भापादकमित्यभिमतं, किं वा तद्वैशिष्ट्यमात्रं तत्रापादितं तदुपलम्भापादकमिति, नाद्यः दृष्टादृष्टसमुदायात्मकसामग्र्याः कार्यैकगम्यतया तदभावे दुर्ग्रहत्वात्तद्ग्रहाभावे चान्धकारावृतदेश इव सहकारिवैकल्यादनुपलम्भोपपत्तिशङ्कया तर्कितस्यापि प्रतियोगिनः स्वोपलम्भापादकत्वायोगादनीन्द्रियोपलम्भकाभावेन तदभावस्य प्रत्यक्षत्वायोगाच्चेत्येतद्‌निरूपणमित्यभिप्रेत्य द्वितीयं दूषयति * प्रतियोगिवैशिष्ट्यमात्रेणेति * आरोपितेनेति शेषः । घटवति देशेपि तत्सत्तामात्रेण तदुपलम्भाभावादन्यत्रापि तन्मात्रमारोपितं न तदुपलम्भापादकमित्यर्थः । किं च देशविशेषे प्रतियोगिसत्त्वस्यानुलब्धिविरोधित्वानुसन्धानपतैवान्यत्रापि तन् ( १ ) तदा ( २ ) पादनीयमिति वाच्यं । न चाभावोपलम्भसमये नियमेन देशविशेषे प्रतियोगिसत्त्वानुसन्धानमस्ति न चोक्तापादनरूपयोग्यानुपलम्भं विनाऽभावधीस्सम्भवतीति न त्वदुक्तरीत्या ऽभावप्रत्यक्षत्वसिद्धिरित्याशयेनाह * अभावग्राहकेणेति * नन्वभावाधिकरणेऽसतः प्रतियोगिवैशिष्ट्यस्य तदुपलम्भाद्यनापादकत्वेपि तच्छक्तिरस्ति ततश्च सैवाभावप्रत्यक्षत्वप्रयोजिकेत्याशङ्क्याह * किं चेति * नान्यदिति * असतोऽतीन्द्रियधर्मभूतायाः स्वरूपभूताया वा शक्तेरसम्भावितत्वादिति भावः । व्याप्तेरपि सामानाधि-

---

( १ ) प्रतियोगिसत्त्वेन । ( २ ) अनुपलब्धिविरोधित्वम् ।

निरूपिता व्याप्तिरस्तीति तज्ज्ञानं वाच्यं, ततश्चाभाव-धीपूर्वं नियमेन व्यतिरेकव्याप्तिज्ञाने वन्ह्यादाविवाभावे-ऽनुमितिरेव स्यान्न प्रत्यक्षं, एवमपि प्रत्यक्षयोग्यशब्दादे-रभावः प्रत्यक्षः स्यान्न त्वतीन्द्रियाभावः मनस्त्वादेर्घटे

करण्यरूपायाः समानकालीनत्वरूपाया वा स्वरूपेणासत्त्वसम्भवात्त-ज्ज्ञानं शक्तिरित्यभ्युपेयमिति शिक्षयति * न चासद्वैशिष्ट्येति * भवतु व्याप्तिज्ञानमेव शक्तिः सैवाभावप्रत्यक्षत्वप्रयोजिकेति मन्वानं प्रत्याह * ततश्चेति * प्रतियोगिसत्त्वस्य तदुपलम्भेन सह व्याप्तौ गृहीता-यामेव व्यापकाभावानुभवेन व्याप्यप्रमेयाभावानुभवाभ्युपगमे नि-यमेन व्यतिरेक्यनुमानसामग्रीसत्त्वेनाभावस्यानुमेयत्वमेवं स्यात् न प्रत्यक्षत्वमित्यर्थः। न चानुमितिसामग्र्यां सत्यामपि(१)संशयोत्तरप्र-त्यक्षवत्प्रत्यक्षसामग्रीप्राबल्यादपरोक्षैवाभावधीः स्यादिति वाच्यम्। अनुपलम्भस्य क्वचिदपि प्रत्यक्षसामग्रीत्वेनाक्लृप्तत्वात्तत्प्राबल्यस्य दूरापतत्वादितिभावः। प्रत्यक्षप्रतियोगिसत्त्वस्य तदुपलम्भव्याप्य-त्वग्रहाधीनाभावप्रत्यक्षत्वप्रयोजकत्वमङ्गीकृत्याप्यतीन्द्रियेश्वरादिप्र-तियोगिकभेदस्य प्रतियोगिन्युक्तप्रकारासम्भवात्प्रत्यक्षत्वं न स्यादि-त्याह * एवमपीति * यदप्युक्तमतीन्द्रियस्यापि प्रतियोगिनः प्र-त्यक्षधर्मिमयापादितस्य प्रत्यक्षत्वयोग्यताघटकतया स्वोपलम्भापाद-कत्वेनानुपलम्भविरोधित्वमस्तीति तदप्यसाधु। तस्य धर्मिप्रत्यक्षत्व-स्याप्यपलापकत्वापातेन स्वोपलम्भापादकत्वस्य दूरापेतत्वादित्यभि-प्रेत्याह * मनस्त्वादेरिति * यत्र मनस्त्वं तत्राणुत्वमिति नियमेन तद्वत्तया तर्कितघटस्याप्यणुत्वापातेन तद्धर्ममनस्त्वस्यानुपलम्भ एव न्याय्य इति न त्वदुक्तयोग्यानुपलम्भसम्भव इत्यर्थः। न च कुम्भे

---

(१) स्थाणुर्वा पुरुषो वेत्यत्र संशयोत्तरं पुरुषत्वव्याप्यकरा-दिमानयमिति परामर्शज्ञानस्यानुमितिसामग्रीरूपस्य सत्त्वेऽपि प्रत्य-क्षसामग्र्या बलवत्त्वात्पुरुषोऽयमिति यथा प्रत्यक्षमेव भवति तद्व-दित्यर्थः।

तर्कितसत्त्वस्य तद्व्यापकाणुत्वापादनेनानुपलम्भाविरोधित्वात्। किं च सहकार्य्यभावेन ब्राह्मणत्वाद्यनुपलम्भवज्जीवे ब्रह्माभेदानुपलम्भोऽप्यभावं विनोपपद्यते तत्र लौकिकोपदेशवदत्रापि 'आचार्यवान्पुरुषो वेद' 'श्रोतव्य'

महत्त्वोद्भूतरूपवत्त्वयोर्निश्चितत्वेन तत्र मनस्त्वारोपे तस्यापि प्रत्यक्षयोग्यवृत्तित्वापत्त्या तदुपलम्भ एव कुम्भे प्रसञ्जनीयो नाणुत्वादिरिति वाच्यम। अणुत्वादेरपि मनस्त्वव्यापकत्वेन निश्चयात्तदारोपे तत्रारोपस्याप्यनिवार्यत्वात्। यदि तु कुम्भे मनस्त्वोपलम्भापादनसम्भवमात्रेण तत्र तदभावः प्रत्यक्षः स्यात्तर्हि मनस्यपि कुम्भत्वारोपे तद्व्यापकमहत्त्वाद्यापत्त्या तत्रापि कुम्भत्वोपलम्भापादनसम्भवात्तदभावोपि मनसि प्रत्यक्षः स्यात्तच्च तव नेष्टमिति भावः। एवं तावदभावग्राहकप्रत्यक्षसहकारिणी योग्यानुपलब्धिः सर्वत्र दुर्निरूपेत्युक्तं सम्प्रत्यन्यत्र या का चित् साऽस्तु जीवेश्वरभेदग्रहे तत्सम्भव एव नास्ति- जीवे पराभेदस्य सतस्तर्कितस्य वा मानसप्रत्यक्षयोग्यत्वेऽपि श्रुत्यादिसिद्धसहकार्य्यभावेन ततस्तदुपलम्भाभावसम्भवादित्याह * किं च सहकारीति * पूर्वपरिचयरहितसाधारणवेषादिमद्देहवृत्तिब्राह्मणत्वक्षत्रियत्वादिकं चक्षुरादिसन्निकृष्टमपि तन्मात्रेण न निश्चीयते तत्कस्यहेतोः, तद्व्यञ्जकविशिष्टमातापितृजत्वाद्युपस्थापकाप्तोपदेशरूपसहकार्य्यभावात् न च तावता तत्र ब्राह्मण्याद्यभावनिश्चयः एवं जीवब्रह्माभेदे तद्ग्रहणयोग्यान्तःकरणे च सत्यपि सहकार्य्यभावात्तदनुपलम्भोपपत्तौ कुतो योग्यानुपलम्भः कुतस्तरां च तद्भेदसिद्धिरित्यर्थः। ननु दृष्टान्ते सहकारित्वमाप्तोपदेशस्यान्वयव्यतिरेकसिद्धं ब्रह्माभेदानुभवे तु सहकार्य्यन्तरसत्त्वे मानाभावात्तद(१)भावप्रयुक्तत्वमनुपलब्धेरसिद्धमिति ग्राह्याभाव(२)प्रयुक्तत्वमेव वाच्यमित्याशङ्क्याह * तत्र लौकिकेति * 'तस्य यथा अभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति स ग्रामाद्ग्रामं पृच्छन् पण्डितो मेधावी गन्धारानेवोपसम्पद्येतैव मेवाचार्य्यवान्पुरु-

(१) सहकारीत्यर्थः। (२) अभेदाभावेत्यर्थः।

इत्यादिना सहकार्य्यन्तरस्य प्रमितत्वात् । न च जीवाभेद इव तस्मिन्विद्यमानब्रह्माभेदेऽपि सहकार्य्यन्तरापेक्षा मनसो न स्यादिति वाच्यम् । जीवत्वादेर्मनोमात्रयोग्यतया तद्विशिष्टाभेदस्य तावन्मात्रयोग्यत्वेपि सर्वात्मत्वयोग्यत्वादेस्तदयोग्यतया तदात्मब्रह्माभेदे सहकार्यन्तरापेक्षोपपत्तेः अन्यथा जीवेऽदृष्टवदभेदानुपलम्भात्सोऽपि न

षांवेदेति'। यथा कश्चिद्भिनद्धाक्ष एव गन्धारदेशेभ्योऽपकृष्यारण्यानीं प्रापितस्तत्र तथैव बद्ध्वा त्यक्तः (१) परिभ्रमन् केन चिद्दयालुना पान्थेनाक्षाभिनहनं प्रमुच्य स गन्धारदेशमार्गमुपदिष्टस्तदनुगुणयुक्तीरनुसन्दधानो गन्धारानेव प्राप्नोति एवं स्वयंप्रकाशब्रह्मात्मापि जीवोऽनाद्यविद्याकामकर्मादिभिः प्रमुष्टविवेकः संसाराटवीं प्रापितो नानायोनिषु परिभ्रमन् आत्मतत्त्वनिश्चयवदाचार्योपदेशादिनाऽऽत्मतत्त्वं साक्षात्करोतीति श्रवणादीनां ज्ञानाङ्गतां दर्शयति, तथा 'श्रोतव्यो मन्तव्य' इत्यादिना ज्ञानोद्देशेन श्रवणादिविधानात्तेषां तादर्थ्यमवगतम्। तथा 'नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठे'ति गुरूपदेशस्यावश्यकत्वं श्रावयति ततश्च तदभावदशायां सतोऽपि ब्रह्मात्मैक्यस्य श्रुत्युक्तस्य तदुक्तसहकारिविरहादेवानुपलम्भसम्भवात् न परोक्तयोग्यानुपलम्भसम्भव इत्यर्थः । नन्वात्मन्यनुभूयमानजीवाभेदवद्ब्रह्माभेदेऽपि सहकार्यपेक्षाभावात्तदभावादेव तदनुपलम्भसम्भव इत्युदाहृतश्रुतीनामन्यपरत्वमित्याशङ्क्य कर्तृत्वादिरूपजीवत्वस्य मनोमात्रग्राह्यत्वेनात्मनि तद्विशिष्टाभेदोपलम्भेपि तदुपलक्षितसर्वोपप्लवरहितसच्चिदानन्दघनप्रत्यग्ब्रह्माभेदस्य वेदान्ततात्पर्यगोचरस्याध्यवसायरूपानुभवविशेषे मनोमात्रस्य सामर्थ्याभावाच्छ्रवणाद्यपेक्षा युक्तेत्याह * न च जीवाभेद इत्यादिना * अन्याकारेणाभेदानुभवेऽप्यन्याकाराभेदोपलम्भाभावमात्रात्तस्य ततो भेदे परमते बाधकमाह * अन्यथेति * मनोमात्रेणात्मनि

(१) बद्धाक्षः इति ख० पु० पा० ।

स्यात् । अपि च तमसा घटस्येव 'माययाऽपहृतज्ञाना' 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' 'भवत्य-

जीवाभेदानुभवेऽप्यहमेव सुकृती दुष्कृती वत्येवमाकारानुभवाभावात्तद्भेदानुभवप्रसङ्गेनात्मनः पापाद्याश्रयाभिन्नत्वेन नित्यमुक्तता स्यादित्यर्थः । ननु सहकार्य्यभावादागन्तुकोपलम्भाभावेऽपि स्वप्रकाशाभेदवादे स्वत एवोपलम्भः कथं न भवेदित्याशङ्क्याह * अपि चेति * इन्द्रियसन्निकर्षे सत्यपि तमसा घटस्येवाभेदस्यापि तत्संशयादिप्रयोजकानाद्यनिर्वचनीयाज्ञानेनावृतत्वात्स्वप्रकाशचिद्रूपेऽपि तस्मिन् तत्संशयादिविरोध्युपलम्भाभावरूपानुपलम्भसम्भवान्नाभेदसत्वस्य तद्विरोधितेत्यर्थः । उक्तावरणे किं प्रमाणमिति वीक्षायामाह *मायेत्यादिना* अनिर्वचनीयाज्ञानमेव माया न वस्त्वन्तरमित्याशयेन भगवद्वचनान्तरमुदाहरति * अज्ञानेनेति* विष्णुपुराणे तद्भावभावनापन्नस्तदाऽसौ परमात्मना । भवत्यभेदीति ज्ञानदशायां परमात्माभेदप्राप्तिमभिधाय तर्हि ज्ञानात् प्राग्भेद एवेति शङ्कां निराकर्तुं भेदश्च तस्याज्ञानकृत इत्युक्तं न हि वस्तुत अन्यस्यान्यात्मत्वं ज्ञानसहस्रेणापि भवति ततश्च भेदप्रतिभासः प्रागविद्याविलासितोऽभेदश्च तिरोहित इति गम्यते, अनन्तरं च तर्हि ज्ञाने नष्टे पुनरपि भेदोन्मज्जनमाशङ्क्य भेदनिदानाज्ञानस्य निर्लेपं नष्टत्वान्न पुनस्तत्प्रसक्तिरित्युक्तं 'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यतीति' तथा 'ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि । तद्विद्यादात्मनो मायां यथा भासो यथा तम' इत्यादिनाऽऽवरणविक्षेपहेतुमायाविषया स्मृतिरादिपदार्थः, प्रसिद्धनीहारस्य स्वाविरोधिस्वावभासकसूर्यमण्डलाच्छादकत्वदर्शनेन श्रुतौ नीहारपदेन स्वविरोधिस्वावभासकचैतन्यात्मब्रह्मावरकमज्ञानं विवक्षितं मुख्यनीहारस्यात्मस्वरूपावरकत्वादेरसम्भवात् तत्कृतावरणविक्षेपौ प्रावृता जल्प्या चेत्युक्तौ, अहरहः सुषुप्तिसमये ब्रह्मस्वरूपविरुद्धरूपादर्शनेन प्रत्यगभिन्नस्वप्रकाशब्रह्मसम्पत्तौ सत्यामपि तदलाभे हेतुरुच्यते अनृतेन हि प्रत्यूढा' इति, अनृतमनिर्वचनीयमज्ञानं तेन स्वरूपभूतब्रह्मणस्तदाऽप्यावृतत्वाद्विक्षेपाभावेऽपि न तत्प्राप्तिरित्यर्थः । एवं तावन्मनसः प्रत्यग्ब्रह्माभेदग्रहणयोग्यत्वं

भेदी भेदश्च तस्याज्ञानकृतो भवे 'दित्यादिस्मृत्या ' नीहारेण प्रावृता जल्प्या च ' ' अनृतेन हि प्रत्यूढा' इत्यादिश्रुत्या चाज्ञानेनावृतत्वप्रतीतेर्जीवब्रह्माभेदस्य नानुपलम्भः सत्वविरोधी, किं च मनो न जीवब्रह्माभेदयोग्यं ' यन्मनसा न मनुत ' इत्यादिश्रुतेः, किं तु 'तन्त्वौपनिषदं पुरुषं' 'सर्वे वेदा यत्पदमामनन्ती'त्यादिश्रुत्या वेदैकगम्यं ब्रह्मेति न मनसोऽनुपलम्भाद्धर्मादिवत्तदभावसिद्धिः । किं च किमिदमीश्वरत्त्वं यद्विशिष्टाभेदाद्यनुपल-

स्वीकृत्य सत्यपि तस्मिन् सहकारिविरहात्तत्सत्वं नानुपलम्भविरोधीत्युक्तं, सम्प्रति स्वीकृतं परित्यजन् वेदान्तारम्भात् प्राक्तद्ग्राहकाभावेनैव तदनुपलम्भसम्भवान्न योग्यानुपलम्भो ऽस्तीत्याह * किं च मन इति * न मनुत इत्यादिश्रुतेरित्यत्रादिपदेन 'नावेदविन्मनुते तं बृहन्त' मित्यादि गृह्यते, यत्पदमामनन्तीत्यादिश्रुत्येत्यत्रादिपदेन 'वेदान्तविज्ञानसुनिश्चितार्थाः' 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादिर्गृह्यते । मनसा इति पञ्चमी, अयोग्यान्मनसोऽनुपलम्भमात्रेण आत्मनि परगते धर्माद्यदृष्टस्येव तस्य ब्रह्माभेदस्याभावो नेत्यर्थः । न च ' यन्मनसा न मनुत ' इत्येतदशुद्धमनोविषयमिति वाच्यम् । तथाऽप्यस्मदादेस्तदनुपलम्भसम्भवादिति भावः । पुनरपि जीवेश्वराभेदग्रहयोग्यत्वं मनसोऽभ्युपेत्य योग्यानुपलब्धिमेव निराकरोति * किं चेति * किमात्मनीश्वरत्वविशिष्टाभेदानुपलम्भस्तद्भेदसाधक उतात्ममात्राभेदानुपलम्भ, आद्ये ऽपि किमीश्वरत्वं जातिरुत द्व्यणुकादिकर्तृत्वं नित्यज्ञानवत्वं वा सर्वज्ञत्वं वा नित्यसर्वज्ञानवत्वं वेति विकल्पमभिप्रेत्याह *किमिदमिति* आद्यं निराकरोति *न तावज्जातिरिति* न च ब्रह्मविष्ण्वादिभेदेनेश्वरनानात्वाद्व्यक्त्यभेदो ऽसिद्ध इति वाच्यं । नानात्वे सति तेषामीश्वरत्वायोगात् ' यतो वा इमानि भूतानि जायन्ते' इत्यादिनैकस्यैव सृष्ट्यादिकर्तृत्वाभिधानात्तत्कर्तृब्रह्मादिभेदानुपपत्तेः 'स ब्रह्मा स शिव' इत्यादिश्रुतिविरोधाच्च न वास्तवस्त-

म्भाद्भेद इत्युच्यते न तावज्जातिः एकव्यक्तौ तदभावात् । न च लौकिकेश्वरसाधारणेश्वरत्वं जातिरिति वाच्यम् । समयभेदेन चेतनमात्रे तदस्तीत्यात्मत्वाद्भेदानुपपत्तेः लौकिकेश्वराणां तद्भेदाननुभवप्रसङ्गाच्च । नापि द्व्यणुकादिकर्तृत्वं तद्विशिष्टस्यातीन्द्रियतया तदभेदस्य सतोऽप्यनुपलम्भोपपत्तेः, नापि नित्यज्ञानवत्त्वं स्वनित्यताया इव ज्ञाननित्यताया अपि प्रत्यक्षायोग्यत्वात् । नापि सर्वज्ञत्वं सर्वविषयज्ञानवत्त्वमात्रस्य जीवेऽप्यनुभवात् । नित्यसर्वज्ञ-

द्भेदः औपाधिकस्तु व्यक्तिभेदो न जात्युपपादकः गगनादावदर्शनादिति भावः । तथा ऽपि देवमनुष्यादीश्वराणामिन्द्रययातिप्रभृतीनां परमेश्वरस्य च परस्परभेदात्कथमीश्वरत्वं न जातिरित्याशङ्क्य तेषामैश्वर्यस्यागन्तुकत्वादागन्तुकस्य च जातित्वायोगात् सर्वजीवेषु पर्यायेणापेक्षिकैश्वर्यसम्भवेनात्मत्वेन तुल्यव्यक्तिकत्वाच्च नेश्वरत्वं जातिरित्याह * न च लौकिकेश्वरेत्यादिना * लौकिकेश्वरसाधारणेश्वरत्वजातिस्वीकारे च लौकिकेश्वराणां तद्विशिष्टात्माभेदानुपलम्भाभावात्तेषामीश्वराद्भेदो न सिद्ध्येदित्याह * लौकिकेश्वराणामिति * द्वितीयमपवदति * नापि द्व्यणुकादीति * जीवं प्रति द्व्यणुकादेरतीन्द्रियतया तत्कर्तृत्वस्य तदभिन्नेश्वरे सत्त्वेऽपि अतीन्द्रियत्वात्तद्विशिष्टाभेदस्य सतोऽपि धर्मादिविशिष्टाभेदवदनुपलम्भोपपत्तेर्न ततस्तद्भावसिद्धिरित्यर्थः । तृतीयं निराकरोति * नापीति * परमते जीवे सत्यपि नित्यत्वे तस्य प्रत्यक्षत्वायोग्यत्वात्तद्विशिष्टाभेदाननुभववत्तदभिन्नेश्वरे सत्यपि नित्यज्ञाने तन्नित्यत्वस्यानुभवायोग्यत्वान्नित्यज्ञानवदभेदस्य सतोऽप्यनुपलम्भोपपत्तिरित्यर्थः । चतुर्थमपाकरोति * नापि सर्वज्ञत्वमिति * सर्वं वेद्यमित्यादिरूपस्य शब्दादिजनितसर्वविषयज्ञानमात्रस्य जीवे दर्शनान्न तद्वदभेदानुपलम्भोऽस्तीत्यर्थः । न च सर्वविषयप्रत्यक्षज्ञानवत्त्वं तदिति वाच्यम् । यो-

त्वं नानुभूयते इति चेन्न, जीवज्ञाने नित्यताभ्रमदशायां तद्वैशिष्ट्यस्याप्यात्मन्यनुभूयमानत्वात् । ज्ञानार्थयोः स्वरूपमात्रं सम्बन्धश्चेत्सर्वं ज्ञानं सर्वविषयमेवेति निश्चयदशायां तदनुपलम्भाभावेन भेदग्रहो न स्यात् अस्ति च तदाऽपि सः । किं च ज्ञानस्याव्याप्यवृत्तित्वात्सर्वज्ञत्वादेर्जीवात्मप्रदेशावृत्तित्वेनाप्यनुपलम्भोपपत्तेर्न तदधिकरणे भेदग्रहः सम्भवति, न हि मूलावच्छेदेनाग्रत्वं नानुभूय-

गिषु तस्याऽप्यनुभवादिति भावः। पक्षममुत्थापयति *नित्यसर्वज्ञत्वमिति * जीवज्ञानस्योक्तविधया सर्वविषयत्वे सति परमते 'अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा' इत्यादिवचनात्तस्य नित्यत्वभ्रमसम्भवान्नित्यसर्वज्ञत्वमात्मन्यनुभवतस्तद्वद्भेदानुपलम्भोऽसिद्ध इत्यर्थः । ननु नित्यसर्वविषयापरोक्षज्ञानवत्त्वमीश्वरत्वमित्याशङ्क्य परमते ज्ञानस्य स्वरूपातिरिक्तविषयसम्बन्धाभावान्नियामकाभावेन सर्वस्य सर्वविषयत्वापत्त्योक्तरीत्या ज्ञाने नित्यत्वभ्रमवतां घटादिज्ञानदशायां नित्यसर्वविषयापरोक्षज्ञानवत्त्वस्याप्यनुभवात्तदनुपलम्भासिद्धेर्न जीवेशभेदग्रहसिद्धिरित्याह *ज्ञानार्थयोरिति *माऽस्तु तदा भेदग्रह इत्याशङ्क्याह * अस्ति चेति * अपि च सर्वगतात्मवादे शरीराद्यवच्छिन्नात्मप्रदेशतद्धर्मयोरेव प्रत्यक्षयोग्यत्वान्नित्यसर्वज्ञत्वादिरूपेश्वरत्वस्य तदवच्छिन्नात्मप्रदेशावृत्तित्वेनाप्यनुपलम्भोऽपपत्तिः । न चानित्यात्मविशेषधर्माणामेव प्रदेशवृत्तित्वं लाघवेन विभुविशेषगुणमात्रस्यैव तथात्वात्ततश्चात्मनि तदधिकरणाभेदस्य सतोऽप्यनुपलम्भसम्भवान्न ततस्तद्भेदसिद्धिरित्याह * किं च ज्ञानस्येति * अत्र दृष्टान्तमाह * न हि मूलेति * मूलप्रदेशे चक्षुः सन्निकर्षात्तदवच्छेदेन वृक्षानुभवेऽपि तत्राग्रत्वस्याभावादेवानुपलम्भोपपत्तौ तद्विशिष्टवृक्षाभेदानुपलम्भसम्भवान्न ततो मूलाग्रयोर्वृक्षभेदसिद्धिः एवमत्रापि इतरथा तत्रापि भेदः स्यादित्यर्थः । ननु मूलावच्छेदेन वृक्षेऽग्रत्वावच्छिन्नवृक्षाभेदानुपलम्भेपि वृक्षमात्राभेदोपलम्भात्तेन

त इति तदुभयाधिकरणभेदप्रमा सम्भवति वृक्षाभेदवदात्माभेदमात्रस्यानुपलम्भाभावात्। तत्रैकवृत्तित्वमनुभूयते यथा न तथाऽत्रेति चेत्तत्संशयदशायामपि योग्यानुपलम्भासम्भवेन स्वस्य विभुत्वविशिष्टभेदवत्तद्भेदस्य ग्रहासम्भवात्। किं चाहमिहेति परिच्छिन्नतयाऽनुभूयमाने जीवे भेदोऽनुभूयते नाहमीश्वर इति, न च निरुपाध्या-

रूपेण न भेद इत्याशङ्क्य जीवेऽपि चिदात्माभेदानुपलम्भाभावान्न तद्रूपेश्वरभेदसिद्धिरित्याह *वृक्षाभेदवदिति* एतेनात्ममात्राभेदानुपलम्भो जीवे परभेदसाधक इति कल्पोऽप्यपास्तो वेदितव्यः। नन्वामूलाग्रमेको वृक्ष इति मूलाग्रयोरेकवृक्षसम्बन्धावगमान्मूलावच्छेदेनाग्रत्वानुपलम्भमात्रान्न वृक्षभेदसिद्धिः जीवत्वेश्वरत्वयोस्तु नैकधर्मिसम्बन्धोऽवभासते ततश्च जीवत्वावच्छेदेन सर्वज्ञत्वाद्यनुपलम्भो बाधकाभावाद्धर्मिभेदसाधक इत्याशङ्कते * तत्रैकवृत्तित्वमिति * आत्मनो वियदादिवद्विभुत्वाद्द्रव्यत्वापरजातिरहितत्वे सति वस्तुतो जीवात्मपरात्मभेदायोगेन जीवत्वेश्वरत्वाधिकरणाभेदनिश्चयोऽस्त्येव उक्तयुक्त्यनवतारदशायामपीश्वरत्वस्य जीवे विभुत्वादिवदयोग्यत्वादनुपलम्भः। किं वाऽन्यधर्मत्वादिति साधकबाधकाभावेन संशयस्यैवावसरो न तद्धर्मिभेदनिश्चयस्य इतरथाऽऽत्मनि विभुत्वादिवैशिष्ट्यस्य सर्वमूर्त्तद्रव्यसंयोगसमवायादिरूपस्यानवगमादात्मनि तद्विशिष्टाभेदानुपलम्भात्तद्भेदापात इत्याशयेनाह * तत्संशयदशायामपीति * तस्माज्जीवेश्वराभेदे योग्यानुपलम्भाभावात्तदभावरूपतद्भेदे न प्रत्यक्षप्रमाणसम्भव इति भावः। एवमयोग्यानुपलब्धिकमित्येतत्प्रपञ्च्य सोपाधिकस्थो भेदोऽयमित्येतत्प्रपञ्चयितुमापाततो भेदप्रतिभासं स्वीकरोति *किं चाहमिति* जीवात्मा किं स्वरूपेण विभुरुताणुर्मध्यमपरिमाणो वा आद्येऽहमिहैवास्मि सदने इति प्रतिभासमानपरिच्छेदस्य तस्मिन्स्वाभाविकत्वायोगात्परिच्छिन्नाहङ्कारशबलात्मन एवाहंप्रत्ययालम्बनतया तत्र परिच्छेदप्रतिभासः औपाधिक उपपादनीयः एवं चाहमीश्वरो नेत्यहम्प्रत्ययावसेयभेदस्योपाधिशबलात्मनिष्ठतया

त्मनः परिच्छेदः सम्भवति अणुत्वे आत्मनः सर्वशरीरव्यापिसुखाद्यनुपलम्भप्रसङ्गात् विरुद्धदेशद्वये युगपत्प्रयत्नाद्यनुपलम्भप्रसङ्गाच्च, स्वाभाविकमध्यमपरिमाणे चानित्यत्वाद्यापत्तिः अनन्तरपरिमाणे च गगनवन्न सजातीयभेद इत्यात्मैक एव ततो घटाकाशवदौपाधिक एव परिच्छेद इति तद्गतो भेदोऽप्यौपाधिक इति न तस्य सत्यत्वं न वा निरुपाधिकता। अपि चाहङ्कारोऽनात्मा दृ-

तत्प्रतिभासो रक्तोऽयं स्फटिको न शुक्ल इति प्रतिभासवदाभास इत्यर्थः। द्वितीयस्त्वनुपपन्न इत्याह *अणुत्व इति* नन्वयमात्मन एकदेशस्थत्वेऽपि तद्गुणानां गन्धादिवच्छरीरादिव्यापितोपपन्नेति चेन्न, गुणानां गुणिव्यतिरेकेण रूपादिवद्देशान्तरव्यापित्वायोगात् जलादावयवत्साश्रयस्यैव गन्धादेर्देशान्तरव्याप्तिकल्पनादन्यथैकशरीरसम्बन्धिकरद्वयेऽप्येकैकाङ्गुलिमात्रे युगपत् प्रयत्नद्वयस्यैकस्मिन्नात्मन्यसम्भवात्, न चैकशरीरेऽनेक आत्मानो युगपत् भोक्तारो भवन्ति ततश्च तत्र युगपत् चलनद्वयमनुभूयमानमनुपपन्नं स्यादित्याह * विरुद्धदेशेति * तृतीयोऽप्यनुपपन्न इत्याह *स्वाभाविकेति* अनित्यत्वमुत्पत्त्यादिमत्त्वं ततश्च कृतहानादिरादिपदार्थः। आत्मनः स्वतोऽणुत्वमध्यमपरिमाणत्वनिरासफलमाह * ततो घटाकाशवदिति * औपाधिकस्यापि सत्यत्वं मन्वानं प्रत्याह * न तस्येति * शङ्खायःपिण्डादौ पीतदग्धृत्वादेर्यावद्द्रव्यभाविशुक्लत्वानुष्णत्वादिविरोधेन सत्यत्वानुपपत्तेः प्रतिबिम्बादिष्वौपाधिकस्य मिथ्यात्वदर्शनाच्चौपाधिकभेदस्य न सत्यतेत्यर्थः। तर्ह्यनौपाधिक एवात्मभेदोऽस्त्वित्याशङ्क्य तस्य परिच्छिन्नोपाधिपरामर्शे सत्येव प्रतिभासान्नास्य स्वाभाविकतेत्याह * न वा निरुपाधिकतेति * एवं तावत्परिच्छिन्नाहङ्कारशबलात्मन एवाहम्प्रत्यये प्रतिभासात्तत्प्रत्याय्यपरभेद आत्मनि परिच्छेदवत्तदुपाधिक एव न स्वाभाविक इत्युक्तम्। ननु दुःखादिधर्म्यहङ्कार एवाहमनुभवालम्बनं स एवात्मा तदनालम्बनस्य घटादेर-

श्यत्वाद्घटवत् । न चाप्रयोजकत्वं, लाघवेन दृश्यत्वस्यैवानात्मत्वेन व्याप्तत्वादिति पक्षधर्मताबलादतिरिक्तात्मसिद्धिः । स च सुखादिसाधकः स्वप्रकाशो नित्या-

नात्मत्वनियमात् तस्मिंश्च स्वतः सर्वगते प्रतिभासमानः परिच्छेद एव शरीरतादात्म्यारोपनिबन्धनस्तदुपाधिकः परभेदस्तु तत्र प्रतिभासमानः तस्य परस्माद्भेदस्यासम्भवात् स्वाभाविक एवेत्याशङ्क्याहङ्कारस्यानात्मत्वं साधयति * अपि चेति * दुःखादिसमसत्ताकस्तद्धर्मी प्रतियोगिसमसत्ताकात्मत्वप्रतियोगिकात्यन्ताभाववान् चैतन्यविषयत्वात् घटवदिति प्रयोगो विवक्षितः तथा च किमहङ्कारोऽन्तःकरणं तदतिरिक्तो वा, आद्ये सिद्धसाधनं द्वितीये बाध (१) इत्यादेर्दोषस्यानवकाशः । सिद्धान्ते चिदात्मनि कल्पितात्मत्वप्रतियोगिकवास्तवाभावसत्त्वेऽपि तत्प्रतियोगिकतत्समसत्ताकाभावस्य घटादाविवाभावादनात्मत्वाभावः सिद्धः तद्वदहङ्कारेऽप्यर्थान्तरत्ववारणाय प्रतियोगिसमसत्ताकेत्यभावविशेषणम । नन्वनात्मत्वे न दृश्यत्वं प्रयोजकं किन्तु दर्शनाना(२)श्रयत्वं घटादावनात्मनि नियमेन दर्शनादतोऽप्रयोजको हेतुरित्याशङ्क्य तस्याभावघटिततया गुरुत्वाल्लाघवेन दृश्यत्वमेव तद्व्याप्यत्वेन प्रयोजकमित्याह * न चाप्रयोजकत्वमिति * अहङ्कारस्यानात्मत्वेऽपि कथं तदतिरिक्तात्मसिद्धिरित्याशङ्क्यानात्मनि पक्षे दृश्यत्वहेतोरतिरिक्तद्रष्टारं विनाऽनुपपत्तेरर्थात्तत्सिद्धिरित्याह * इति पक्षधर्मतेति * नन्वहङ्कारातिरिक्तात्मकल्पने गौरवात्तस्यैव स्वद्रष्टृत्वकल्पने लाघवं तदतिरिक्तात्मनि दृश्यत्वे हेतोर्व्यभिचारश्च अदृश्यत्वे वा तदसिद्धिरित्याशङ्क्याह * स चेति * परेषामपि तावदन्तःकरणातिरिक्तात्मा सम्मतः ततो नालौकिकात्मकल्पनागौरवं प्रत्युत तस्य मनसः प्रमाणत्वभङ्गसमये दुःखादेः स्वप्नादेश्च साक्षित्वेन प्रमाणयुक्तिभ्यां साधितैकनित्यस्वप्रकाशानुभवमात्रत्वकल्पनादात्मनानात्वस्याभावाल्लाघवं परमते तु त(३)

(१) प्रमाणान्तरेण यस्य साध्याभावो निश्चितः स बाधः ।
(२) दर्शनाभावाश्रयत्वम् ।
(३) आत्मनोनित्यत्वैकत्वस्वप्रकाशत्वनानात्वादि ।

नुभवः प्रागुक्तः स एवेति न दृश्यः तथा चानात्माहङ्कारविशिष्ट एव भिन्नतया प्रतीयत इति नाहमीश्वर इति प्रत्यक्षं न निरुपाधिकजीवभेदे प्रमाणम् ॥ ८ ॥

अनुमानमपि न जीवपरभेदे प्रमाणम् ।
सिद्धसाध्यत्वतो भेदो व्याप्यत्वासिद्धतोऽथवा ।
बाधाज्जडत्वोपाधित्वान्नानुमानस्य गोचरः ॥ ९ ॥

तत्र न तावज्जीवो ब्रह्मधर्मिकभेदप्रतियोगी ब्रह्मप्रति-

त्कल्पनीयमिति गौरवं स्वप्रकाशानुभवात्मनि स्वतः सिद्धे तद्विषयत्वरूपदृश्यत्वाभावान्न व्यभिचारो न वा तदसिद्धिरिति भावः। यच्चोक्तमहङ्कारे परिच्छिन्नदेहतादात्म्यारोपादेव परिच्छेदावभास इति तदप्ययुक्त, उक्तविधयाऽनात्मनोन्तःकरणरूपाहङ्कारस्योत्पत्त्यादिमतः सर्वगतत्वे प्रमाणाभावात्तत्र प्रतिभासमानपरिच्छेदस्य स्वाभाविकत्वोपपत्तेस्तस्य स स्वाभाविको न त्वौपाधिकः आत्मनि तु तदुपाधिक एव स प्रतिभासते एवं भेदोऽपि तदुपाधिक एवात्मनि प्रतिभासते न स्वाभाविक इत्युपसंहरति * तथाचेति * ॥ ८ ॥

एवं तावन्मानाभावादयुक्तश्चेति जीवेशभेदे सामान्येन सर्वप्रमाणाभावं प्रतिज्ञाय तत्र प्रत्यक्षाभाव आक्षेपसमाधानाभ्यामुपपादितः इदानीमनुमानाभावं प्रपञ्चयितुं वक्ष्यमाणानुमाने दूषणगणं सङ्गृह्णाति *सिद्धसाध्यत्वत इत्यादिना* भेदो जीवेशभेदो नानुमानस्य गोचर इत्युक्तेऽर्थेऽर्थादनुमानं तत्र न प्रमाणमित्युक्तं तत्र हेतवः सिद्धसाध्यत्वादयः तेचानन्तरमेव स्पष्टीकरिष्यन्ते। भेदो नानुमानस्य गोचर इत्येतद्विवृणोति*अनुमानमपीति*जीवपरभेदसत्यत्वे किं जीवधर्मिकानुमानं प्रमाणं, ब्रह्मधर्मिकानुमानं वा, आद्येऽपि किं जीवे ब्रह्मभेदमात्रं साध्यं ज्ञानाबाध्यत्वविशिष्टो वा पारमार्थिको वाऽनौपाधिको वा तद्भेदः साध्य इति विकल्पानभिप्रेत्याद्यमनूद्य सिद्धसाध्यत्वेन निराकरोति * तत्र न तावदित्यादिना * पद्यत इतिपदं ब्रह्म तदर्थत्वात्तच्छेषत्वात्तन्नियम्यत्वादिति यावत, ततश्च जीवस्य ब्रह्माभिन्नत्वे त-

यौगिकं भेदवान्वा पदार्थत्वादसर्वज्ञत्वादघटवदित्यनुमानं प्रमाणं सिद्धसाधनत्वात् । न च स्वज्ञानाबाध्यभेदवानिति साध्यं ज्ञानाबाध्यभेदश्च परमार्थ इति न सिद्धसाधनमिति वाच्यम् । असत्यस्यापि भेदस्य घटादिज्ञानेनेव जीवज्ञानेनाप्यबाध्यत्वात् । न चात्मज्ञानाबाध्यत्वं तेन विवक्षितमिति वाच्यम् । दृष्टान्ते साध्याप्रसिद्धेर्व्याप्यत्वासिद्धेश्च । अत एव पारमार्थिकभेदवानिति साध्यं निरस्तम् । न

दनुपपत्तिर्बाधिका पदार्थत्वादित्यस्य ब्रह्मणि न व्यभिचारश्च । अत्र यद्यपि नियम्यत्वमात्रमव्यभिचारि तथापि तन्नियामकसापेक्षं तेन विना न पर्यवस्यतीति ब्रह्मनियम्यत्वादित्युक्तमिति द्रष्टव्यम् *सिद्धसाधनत्वादिति* जीवब्रह्मणोः परस्परप्रतियोगिकाविद्यकव्यावहारिकभेदस्य सिद्धान्तिनाऽपि स्वीकारादित्यर्थः । एतेन जीवस्य ब्रह्मणो भेदाभावे तन्नियम्यत्वानुपपत्तिरपि प्रत्युक्ता, नियम्यत्वादेः स्वसमानसत्ताकनियन्त्रादिभेदसापेक्षत्वात्तस्य च स्वीकारादिति द्वितीयं निराकरोति * न चेति * अस्य वाच्यमित्यनेनान्वयः । स्वज्ञानाबाध्यभेदस्य साध्यत्वेऽपि कथं सिद्धसाधनतापरिहार इत्याशङ्क्य शङ्कितैवाह * ज्ञानाबाध्येति * तत्र किं स्वपदोक्तजीवपदवाच्यकर्त्रादिरूपात्मज्ञानाबाध्यत्वं भेदस्य साध्यमुत तदुपलक्षिताखण्डचिदात्मज्ञानाबाध्यत्वं ज्ञानमात्राबाध्यत्वं वा आद्ये व्यावहारिकानिर्वचनीयभेदस्यापि संसारिजीवज्ञानाबाध्यत्वेनेष्टतया सिद्धसाधनमित्याह * असत्यस्यापीति * द्वितीयतृतीयौ तु श्लोकोक्तव्याप्यत्वासिद्धिमवतारयन्निराकरोति * नचात्मज्ञानेति * अत्र चेन तृतीयकल्पनिरासः समुच्चीयते, सर्वस्य द्वैतस्य जडतया शुद्धचिदात्मनि अविद्याविलसितत्वेन तज्ज्ञानबाध्यत्वस्वीकारात्तज्ज्ञानाबाध्यस्य ज्ञानमात्राबाध्यस्य वा भेदस्य क्वाप्यनभ्युपगमात् घटादावपि व्याप्त्यभावेन व्याप्यत्वासिद्धिरित्यर्थः । पारमार्थिकभेदः साध्य इति तृतीयोऽपि व्याप्यत्वासिद्धत्वादेवायुक्त इत्याह * अतएवेति * चतुर्थमपवदति * म

चानौपाधिकभेदः साध्यते दृष्टान्तेऽपि तत्सत्वात् जीवे चानौपाधिकभेदसिद्धौ केवलस्यैव भेदः सिध्यतीति सत्यभेद इति वाच्यम् । नाहमीश्वर इति भेदस्यौपाधिकत्वेनानहङ्कारजीवभेदाननुभवेन च बाधितत्वात् । ननु ब्रह्म जीवप्रतियोगिकधर्मिज्ञानाबाध्यभेदवत् पदार्थत्वादसंसारित्वात् घटवत्, ततश्च भेदस्य ब्रह्मज्ञानाबाध्यत्वे स-

चाऽनौपाधिकेति * अत्रापि न चेत्यस्य वाच्यमित्युत्तरेण सम्बन्धः। यत्राभेदः प्रामाणिकस्तत्र भेद औपाधिक इति हि स्थितिः ततश्च घटादिभेदे निरुपाधिकत्वस्योभयसम्मतत्वादत्र न साध्याप्रसिद्धिरिति शङ्कितुरेवाशयमाह * दृष्टान्तेऽपीति * जीवेशभेदस्य निरुपाधिकत्वेऽपि घटादिभेदवन्मिथ्यात्वोपपत्तेः सिद्धसाधनतात्राऽपि तदवस्थेत्याशङ्क्य तस्यैवाशयमाह * जीवे चेति * अनादेर्जीवेशभेदस्याविद्याद्युपाधिकत्वाभावे सिद्धे तत्वज्ञानादविद्यादेर्निवृत्तावपि तत्कार्यघटादिभेदवत्ततस्तन्निवृत्तेरयोगात्तत्सत्यत्वसिद्धिरित्याशयः । अस्यापि बाध्यत्वे हेतुमाह * नाहमीश्वर इति * अत्र किं नाहमीश्वर इत्यनुभूयमानस्य भेदस्य निरुपाधिकत्वं साध्यते उत तदतिरिक्तस्य, नाद्यः अहम्प्रत्ययस्यानात्माहङ्कारशबलात्मविषयत्वोपपादनात्तत्प्रत्याय्यभेदस्य तदुपाधिकत्वनिश्चयेन तन्निरुपाधित्वस्य बाधितत्वात्। न द्वितीयः तस्योपलब्धुं योग्यत्वेऽनुपलम्भविरोधात् तस्य तदयोग्यत्वे च हेतोरप्रयोजकत्वं संसारित्वासंसारित्वादिव्यवस्थाया औपाधिकदृष्टभेदादप्युपपत्तेरिति भावः। इदानीं ब्रह्मपक्षकानुमानं प्रयुञ्जन्सिद्धसाध्यत्वादिपरिहारं शङ्कते * ननु ब्रह्मेति * अत्र पदार्थत्वादिति यथाश्रुत एव हेतुः । न च जीवेन व्यभिचारः तस्यापि जीवान्तरप्रतियोगिकभेदोपगमेन पक्षसमत्वात् । ननु रूपादिधर्मिघटादिज्ञानाबाध्यजीवप्रतियोगिकभेदस्य ब्रह्मणि सिद्धान्तिनापि स्वीकारात् सिद्धसाधनमित्याशङ्क्याह * ततश्चेति * धर्मिपदेन समभिव्याहृतभेदधर्मिण एव विवक्षितत्वात् प्रतिज्ञावचने ब्रह्म-

त्यत्वमिति चेन्न । जीवप्रतियोगिकभेदस्य ब्रह्मणि घटादौ चैकत्वेन स्वधर्मिघटज्ञानाबाध्यतया सिद्धसाधनात् । न च यावद्धर्मिज्ञानाबाध्यत्वं भेदविशेषणमितिवाच्यम् । दृष्टान्ते तदभावात् । न च स्वज्ञानाबाध्येति विशेषणान्नोक्तदोष इति वाच्यम् । ब्रह्मादिपदवाच्यस्य ब्रह्मणो यत्किञ्चिद्धर्मविशिष्टत्वेन तज्ज्ञानाबाध्यत्वेऽपि भेदे सत्य-

णस्तद्धर्मित्वावगमात् तद्धर्मिकभेदस्य तज्ज्ञानाबाध्यत्वे तद्वदेव सत्यत्वासिद्धिरिति भावः । धर्मिपदेन जीवप्रतियोगिकभेदधर्मिविवक्षायामपि किं यत्किञ्चित्तद्धर्मिज्ञानाबाध्यत्वं तत्र सिषाधयिषितं यावत्तद्धर्मिज्ञानाबाध्यत्वं वा ब्रह्मज्ञानाबाध्यत्वं वा, नाद्यः स्वरूपातिरिक्तभेदवादिमते ब्रह्मणि घटादौ च जीवभेदस्यैकत्वात्तद्धर्मिघटज्ञानाबाध्यजीवभेदस्य ब्रह्मणि सिद्धान्तिनाऽपि स्वीकारेणात्रापिसिद्धसाध्यत्वादिति दूषयति * न जीवप्रतियोगिकेति * द्वितीयं निराकरोति * न च यावदिति * दृष्टान्ते तदभावादिति घटगतजीवभेदस्यापि स्वधर्मिब्रह्मज्ञानबाध्यत्वस्वीकारेण यावद्धर्मिज्ञानबाध्यत्वस्यासम्प्रतिपत्तेरत्रापि व्याप्यत्वासिद्धिरित्यर्थः, अतएव न तृतीयोपीति भावः । ननु ब्रह्म जीवप्रतियोगिकधर्मिज्ञानाबाध्यभेदवदिति प्रतिज्ञायां धर्मिपदं त्यक्त्वा तत्स्थाने स्वपदं प्रयुज्यते तस्य च समभिव्याहृतपरत्वस्य व्युत्पत्तिसिद्धत्वात्प्रतिज्ञायां पक्षपरत्वमुदाहरणे तु घटादिपरत्वमिति न सिद्धसाधनं न वा व्याप्यत्वासिद्धिरिति नेत्याह * न च स्वज्ञानेति * प्रतिज्ञायां ब्रह्मपदसमभिव्याहृतस्वपदेन किं ब्रह्मेशादिपदवाच्यमनवच्छिन्नत्वसर्वज्ञत्वादिविशिष्टं विवक्षितत्वात्तज्ज्ञानाबाध्यत्वं भेदे साध्यते उतात्र ब्रह्मपदेन वेदान्ततात्पर्यगोचरं निर्विशेषं सत्यज्ञानादिरूपं वस्तु लक्षयित्वा तत्समभिव्याहृतस्वपदेनापि तत्परामृश्य तज्ज्ञानाबाध्यत्वं साध्यते, आद्ये सिद्धसाध्यत्वं तदवस्थं तद्भेदे विशिष्टब्रह्मज्ञानाबाध्यत्वस्य सिद्धान्तिनापि स्वीकारादित्याह * ब्रह्मादिपदेति * यत्किञ्चिद्धर्मविशिष्टत्वेन अपरिच्छिन्नत्वादिविशिष्टत्वेन हेतुना तद्विशि-

त्वासिद्धेः। वेदान्ततात्पर्यगोचरब्रह्मपरत्वे च ब्रह्मशब्दस्य धर्मिग्राहकमानबाधो हेतोरसिद्धिश्च, जडत्वं चोपाधिः तच्चास्वप्रकाशत्वं स्वप्रकाशत्वं चात्मनः श्रुतिन्यायसिद्धमिति न तदसिद्धिर्न वा साधनव्यापकता। सर्वेषां चोक्तहेतूनामप्रयोजकत्वं, कल्पितभेदेनापि

ष्टज्ञानाबाध्यत्वेऽपीत्यर्थः। द्वितीये तत्त्वमस्यादिवेदान्तानां ब्रह्मादिपदलक्ष्यस्याद्वयानन्दस्य प्रत्यग्बोधात्मजीवाभेदे तात्पर्यस्य समन्वयादिसूत्रैर्निर्द्धारितत्वादत्राप्यनन्तरं वक्ष्यमाणत्वाद्धर्मिग्राहकवेदान्तबाधितविषयं जीवाद्ब्रह्मणो भेदानुमानमाभास इति सङ्ग्रहश्लोकोक्तं बाधमवतारयति * वेदान्ततात्पर्येति * किं च पक्षीकृतस्य वेदान्ततात्पर्यगोचरब्रह्मणो निर्विशेषत्वेन तत्र धर्ममात्राभावात् पदार्थत्वादिहेतोरसिद्धिरित्याह * हेतोरिति * किं च घटादेर्जडतया दृश्यत्वेन मिथ्यात्वात्तद्विषयज्ञानस्य घटतद्भेदहेत्वविद्यानिवृत्त्ययोग्यत्वात्तत्र स्वज्ञानाबाध्यभेदवत्वं जाड्यप्रयुक्तमिति जडत्वमुक्तसाध्यव्यापकं साधनवति स्वप्रकाशात्मनि अभावात्साधनाव्यापकं च ततश्च सोपाधिकत्वादयं हेत्वाभास इत्याशयेन जडत्वोपाधित्वादित्यतदवतारयति * जडत्वं चेति * ननु प्रमेयत्वातिरिक्तजडत्वाभावात्तस्य च केवलान्वयित्वात्साधनव्यापकत्वादिना नोपाधित्वमित्याशङ्क्याह * तच्चास्वप्रकाशत्वमिति * ननु स्वप्रकाशत्वस्य गगनकमलिनीकल्पत्वात्तदभावात्मकास्वप्रकाशत्वमपि तादृशमेवेति नेत्याह * स्वप्रकाशत्वं चेति * स्वप्रकाशत्वं हि विनैव प्रकाशाविषयत्वं स्वमहिम्नैव स्वसत्ताप्रकारकसंशयाद्यगोचरत्वं 'अत्रायं पुरुषः स्वयं ज्योतिरात्मैवास्य ज्योति' 'रन्यदेव तद्विदिता' दित्यादिश्रुत्या सुखमहमस्वाप्समिति परामर्शानुपपत्त्याऽऽत्मन्यत्रस्थाश्रयेऽपि सत्ताप्रकारकसंशयाभावानुपपत्त्या च मनसः प्रमाकरणत्वनिरासार्थमुक्तन्यायेन च सिद्धं, घटादौ तु तदभावरूपं जडत्वं सिद्धमित्यनवद्योऽयमुपाधिरित्यर्थः। जीवगतो ब्रह्मभेदः स्वप्रतियोगिज्ञानाबाध्यः अज्ञातसत्ताकत्वे सति भेदत्वात् सप्रतियोगिकत्वाद्वा

निखिललौकिकवैदिकव्यवस्थितव्यवहारोपपत्तेर्वक्ष्यमाण-
श्रुतिर्बाधश्च(१) तस्मान्नानुमानं भेदे प्रमाणम् ॥ ९ ॥
एवं श्रुतिरपि न भेदे प्रमाणम् ।

घटे पटप्रतियोगिकभेदवदित्यादिहेतूनां पूर्वोक्तानां च विपक्षे बाधकाभावात्सन्दिग्धानैकान्तिकतामप्याह * सर्वेषां चेति * चकारोऽनुक्तसमुच्चयार्थः । जीवानां परस्परमीश्वराच्च भेदाभावे स्वर्गनरकसंसारित्वादिव्यवस्थानुपपत्तिर्बाधिकेत्याशङ्क्याह * कल्पितेति * अस्या व्यवस्थाया व्यावहारिकत्वात्तादृशभेदं विनाऽनुपपत्तावपि न भेदसत्यत्वं विना काचिदनुपपत्तिरस्ति केवलव्यतिरेकाभावादिति भावः । शुद्धब्रह्मपक्षकानुमानविशेषस्योपजीव्यश्रुतिविरोधः प्रागुक्तः सम्प्रति 'नान्योऽतो द्रष्टा' 'एष त आत्मान्तर्याम्यमृतः' 'तत्त्वमेव तत्' 'अयमात्मा ब्रह्म' 'तत्त्वमसीत्यादिभि' र्निरपेक्षाभिरुत्तरभावितया प्रबलाभिः श्रुतिभिर्विरोधात्सर्वे हेतवो बाधितविषया इत्याह * वक्ष्यमाणेति * जीवेशभेदविषयानुमाननिराकरणमुपसंहरति * तस्मादिति * एवं मानाभावादित्यत्र सङ्गृहीतमनुमानप्रमाणाभावं प्रपञ्च्यागमप्रमाणाभावं प्रपञ्चयितुं जीवपरभेदस्यागमाप्रतिपाद्यत्वे हेतून्सङ्गृह्णाति * मानान्तरेति * अत्र भेदग्राहिप्रत्यक्षस्य प्रमाणत्वं परमतेनानूदितं न तु वस्तुवृत्तेन तत्प्रमाणत्वस्य प्राङ्निरासात् तथा चानुभवसिद्धत्वादिति तदर्थः । अतएव नाहमीश्वर इति भेदप्रतीतिरस्तीति तद्विवरणसमये वक्ष्यति 'ऋतं पिबन्तौ' 'द्वा सुपर्णे'त्यादिश्रुतिर्न जीवेशभेदे प्रमाणं अनुपलब्धेऽर्थे तत्प्रमाणमित्यज्ञातेऽर्थे जैमिन्यादिभिः श्रुतिप्रामाण्यस्य न्यायतो निर्धारितत्वेनान्यतोऽवगते भेदे तत्प्रामाण्यायोगात् श्रुत्यापि दुःखादिधर्मी संसारीश्वरो नेत्यादिरूपेणैव भेदप्रतीतेस्तस्य चौपाधिकत्वेन मिथ्यात्वोपपादनादहङ्कारातिरिक्तात्मभेदस्य परेषामपि श्रुत्यर्थत्वेनानभ्युपगमात् श्रुतिजन्यभेदज्ञानस्य स्वर्गापवर्गाख्यप्रयोजनानङ्गतया श्रुतेरध्ययनविधिप्रापितप्रयोजनवत्त्वव्याघातात् 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती' त्यादिना भेदज्ञानाज्जन्ममरणाद्यनर्थस्यैव श्रवणाद्वक्ष्यमाणविधया

(१) श्रुतिर्बाधका चेति क० पु० पा० ।

मानान्तरप्रसिद्धत्वान्मिथ्यात्वादप्रयोजनात् ।
श्रुत्यन्तरविरोधाच्च न श्रुतिर्भेदगोचरा ॥ १० ॥

अस्ति हि श्रुतिप्रतिसन्धानविरहिणामपि नाहमीश्वर इति भेदप्रतीतिः परं तु स वर्णितरीत्या योग्यानुपलब्धेरभावाद्बिम्बप्रतिबिम्बभेदवन्मायिकः साक्षिमात्रसिद्ध इति (१) ब्रूमः ततश्चानुभवसिद्धे न श्रुतितात्पर्य्यं, विनाऽपि प्रमाणाभावप्रयुक्ततदसत्वशङ्काया(२)व्यावर्त्तितत्वात् । न च श्रुतिजन्यज्ञानमात्रेण तत्तात्पर्य्यमिति नियमः, तात्पर्य्याभावेपि शब्दशक्त्यादिभिरर्थ-

भेदपरानेकश्रुतिविरोधाच्चेति श्लोकार्थः । मानान्तरप्रसित्वादित्येतद्विवृणोति * अस्तिहीति * तर्हि तत एव भेदः सिद्ध इति मदिष्टसिद्धिरित्याशङ्क्याह * परन्तु स इति * भेदे प्रत्यक्षप्रतिपन्नत्वमात्रं स्वीक्रियते तत्र श्रुतिप्रामाण्यवारणाय न तु तत् प्रमाणं तदसम्भवस्योक्तत्वादनुभवमात्रस्य शुक्तिरजतादिसाधारणत्वात्तन्मात्रात्तस्य न सत्वसिद्धिरित्यर्थः । भेदस्यान्यतः सिद्धावपूर्वत्वाभावान्न श्रुतितात्पर्य्यगोचरत्वमित्याह * ततश्चेति * अपूर्वत्वरहिते शब्दतात्पर्य्यं नेत्यत्र न्यायमाह * श्रुतितात्पर्य्यमिति * येन वाक्येन यत्र प्रतीत्युत्पादनेन मानाभावप्रयुक्तासत्वशङ्का निवर्त्त्यते तस्य तत्र तात्पर्य्यमन्यथा तस्य तदर्थत्वायोगात् यत्परः शब्दः स शब्दार्थ इति न्यायात् । यथा ज्योतिष्टोमादिवाक्यस्य यागादिगतस्वर्गसाधनत्वादौ भेदे त्वन्यतो निश्चितेऽसत्वशङ्काया एवाभावाच्छ्रुतितात्पर्य्यकल्पनं विफलमित्यर्थः । अर्थप्रतीतिमात्रमेव वाक्यतात्पर्य्यनियामकं किं न स्यादित्याशङ्क्य तस्यान्यथाप्युपपत्तेर्न तत्कल्पकतेत्याह * न च श्रुतीति * प्रतीतिमात्रस्यार्थे तात्पर्य्यकल्पकत्वेऽतिप्रसङ्गमप्याह * अन्यथेति * ग्रहं सम्मार्ष्टीत्यत्रोद्देश्यग्रहविशेष-

(१) वयं इति ख० पु० पा० (२)व्यावृत्तत्वादिति ख० पु० पा० ।

प्रतीत्युपपत्तेः अन्यथा ग्रहैकत्वादावपि तात्पर्यप्रसङ्गः । श्रुतिसिद्धमेव भेदं प्रत्यक्षादिरनुवदतीति विपरीतमेवा-स्तीति( १ )चेन्न । यस्य यत्प्रमाणाधीनासत्त्वशङ्काव्या-वृत्तिस्तत्तत्प्रमेयं भेदश्च निरपेक्षानुभवव्याप्तिबलप्रवृ-त्तानुमानाभ्यामेवासद्व्यावृत्ततया सिद्धो न बहुसापे-क्षविलम्बितश्रुत्येति श्रुतिरनुवादः । न चानुभवाद्यगो-

चरतया प्रतिपन्नैकत्वेपि तात्पर्य्ये तत्र ग्रहमात्रस्योद्देश्यत्त्वसम्भवेपि तद्विशिष्टस्योद्देश्यत्वकल्पनायां गौरवात्तस्य पृथगुद्देश्यता स्यात् ग्रहं संमार्ष्टि तच्चैकमिति, ततश्च प्रत्युद्देश्यं वाक्यपरिसमाप्तेर्विध्यावृत्ति-रूपवाक्यभेदः स्यादिति शब्दावगते तत्र तत्तात्पर्य्यकल्पनमयुक्तं त-थापतेदित्यर्थः । नन्वेवमपि भेदस्य प्रत्यक्षादिप्रवृत्तेः प्रागपूर्वतया निरपेक्षश्रुतिप्रमेयत्वाच्छ्रुतेस्तत्र तात्पर्य्योपपत्तिरिति शङ्कते * श्रु-तिसिद्धमेवेति * प्रत्यक्षादेरपि निरपेक्षतया प्रथमप्रवृत्तिसम्भवा-च्छ्रुतिसिद्धभेदानुवादित्वनियमस्तावदयुक्त इत्याह * नेति * तर्हि कस्य चित्प्रथमप्रवृत्ता श्रुतिर्भेदे प्रमाणमित्याशङ्क्य तस्या नियमेनोत्तरभावित्वेन भेदस्य तत्प्रमेयत्वं निराकर्त्तुं प्रमेयत्वनियामकं तावदाह * यस्येति * प्रमाणाभावादिदमसदिति शङ्का यस्य येन प्र-माणेन व्यावर्त्त्यते तत्तत्प्रमेयमित्यर्थः । श्रुतेर्वाक्यार्थविषये मानान्त-रानपेक्षत्वेपि पदपदार्थव्युत्पत्तिसापेक्षत्वात्तस्याश्च प्रत्यक्षानुमानसा-पेक्षत्वात्तयोः पूर्वं प्रवृत्तिरवश्यमभ्युपेया ततश्चात्मभेदविषययोरपि प्रत्यक्षानुमानयोर्निरूपितरूपयोः स्वसामग्रीतः प्रथमप्रवृत्तेः श्रुत्यनभि-प्रेष्विव तदभिप्रेष्वप्यावश्यकत्वात्तत एवात्मभेदासत्त्वशङ्कानिवृत्ते-स्तत्सिद्धभेदानुवादिनी श्रुतिरतत्परेत्याह * भेदश्चेत्यादिना * ननु प्रत्यक्षसिद्ध आत्मभेदो व्यावहारिकोऽस्तु, वास्तवस्तु तद्भेदोऽपूर्वः श्रुतिगम्यो भवत्वित्याशङ्क्य श्रुतेरनुवादत्वनिराकरणायैवमपूर्वार्थ-कल्पने वेदे सर्वत्र मानान्तरासिद्धविशिष्टार्थानुवादभङ्गप्रसङ्गेन भे-

( १ ) वास्तिवति ख० पु० पा० ।

चंरतात्विकभेदः श्रुतिगोचर इति वाच्यम् । जीवे भे-
दद्वयस्य बाधितत्वात् । नचास्यैव तात्विकत्त्वं श्रुत्यर्थ
इति वाच्यम् । पामराणामपि तत्तात्विकबुद्धेः सत्वात्
परं तु साऽधिष्ठानचैतन्यनिष्टेत्यस्माभिरुच्यते त्वया तु भे-
दस्यैवेति किं श्रुत्या । न च श्रुतिबलाद(१)स्माभिर्भेदप्रत्य-
क्षस्य तात्विकविषयत्त्वं कल्पितमिति न श्रुतिवैयर्थ्यमिति

दान्तरस्य बाधितत्वान्मैवमित्याशयेनाह * न चानुभवाद्यगोचर इ-
त्यादिना * तर्हि प्रत्यक्षादिसिद्धभेदानुवादेन तस्य तदसिद्धं वास्तवत्वं
श्रुत्या प्रतिपाद्यत इत्याशङ्क्यातिप्राकृतानामपि बाधानुदयेनोत्सर्गतस्त-
स्सत्यत्वस्यापि सिद्धेर्मैवमित्याह * न चास्यैवेति * भेदे पामराणा-
मपि तात्विकत्वबुद्धिस्वीकारे परस्येष्टापत्तिमाशङ्क्याह * परन्त्वि-
ति * सा तात्विकबुद्धिः अधिष्ठानचैतन्यनिष्ठा वस्तुनस्तात्विक-
त्वविषयेत्यर्थः । अनिर्दाम रजतादाविदन्ताप्रतिभासवद्वस्तुतः स-
द्विलक्षणेऽपि भेदे सदधिष्ठानतादात्म्यादेव घटादाविव सत्वबुद्धिः
स्वतो भेदादिसत्तायाः श्रुत्यादिबाधितत्वादिति सिद्धान्तिभिः स्वी-
क्रियते परन्तु सा स्वत एव तत्सत्तागोचरेति, नचैतावता तस्य
तात्विकत्वसिद्धिः न वा तस्यापूर्वत्वं येन श्रुतिप्रमेयता स्यादिति
भावः । ननु भेदप्रत्यक्षस्य तात्विकातात्विकसाधारणविषयस्य स्मृ-
तिवाक्यस्येव श्रुतिमुपजीव्य तात्विकविषयत्वरूपं प्रामाण्यं परैः क-
ल्प्यते ततश्च स्मृतिसमानविषयश्रुतेरिव प्रत्यक्षसिद्धभेदविषयश्रुते-
रपि नानुवादित्वेनाप्रामाण्यमित्याशङ्क्याह * न च श्रुतिबलादित्या-
दिना * स्मृतिवाक्यस्य हि पौरुषेयतया मूलप्रमाणापेक्षत्वात्तदर्थ-
स्यालौकिकतया श्रुतिरेव तन्मूलमिति तदपेक्षं तत्प्रामाण्यमिति यु-
क्तं, प्रत्यक्षादेस्तु श्रुतेरिव स्वार्थप्रवृत्तमानान्तरानपेक्षत्वान्न त-
दपेक्षं तत्वावेदनप्रामाण्यं किन्तु स्वतोऽर्थक्रियाकारित्वाद्वेदव-
दिति परेषामभ्युपगमात्ताद्विरुद्धं भेदप्रत्यक्षस्य श्रुत्यपेक्षया तत्वा-

(१) बलादेवा इति ख० पु० पा० ।

वाच्यम् । श्रुतेरिव प्रत्यक्षादीनामपि परस्य स्वतः प्रमाणत्वात् यावद्व्यवहारं घटादिवद्बाधाभावाच्च । अत एव सिद्धान्त्यभिमतस्य(१) मिथ्यात्वं श्रुतिर्बाधत इति निरस्तम् । परस्य श्रुति(२)प्रामाण्यप्रत्यक्षेणैवतत्सिद्धेः अन्यथाऽद्वैतवाक्यानां प्रत्यक्षादिबाधोपन्यासस्तवासङ्गत एव स्यात् तस्मान्न प्रत्यक्षादिसिद्धे श्रुतेस्तात्पर्य्यम् । किं चाहमर्थे प्रतीयमानभेदस्योक्तरीत्या सोपाधिकतया मिथ्यात्वेन न तत्र तत्वावेदकश्रुतितात्पर्यम् । न च सो-

वेदकत्वाभिधानमिति भेदश्रुतेः स्मृतिमूलश्रुतिवन्न प्रामाण्यसिद्धिरित्यर्थः । भेदसत्यत्वस्य प्रत्यक्षादिसिद्धत्वेऽपि तस्यानादिवादिपरम्परापरिकल्पितस्य प्रतिपन्नोपाधौ बाध्यत्वरूपमिथ्यात्वस्यासद्वादिप्रासासत्त्वस्यैवाभावोऽपूर्वः श्रुतितात्पर्यगम्य इति कस्य चित्कल्पनामपवदति * अत एवेति * एतद्विवृणोति * परस्येति * भेदस्य तात्त्विकत्वं नाम बाधायोग्यत्वं तथा च तद्ग्राहकत्वेनाभ्युपेतप्रत्यक्षादिनैव बाध्यत्वरूपमिथ्यात्वस्य निषेधसिद्धेः परमते श्रुतेरिव प्रत्यक्षादेरपि तत्वावेदकत्वात्ततश्च न तस्याप्यपूर्वतेत्यर्थः । परस्य प्रत्यक्षादिना द्वैतसत्यत्वासिद्ध्यनभ्युपगमे बाधकमाह * अन्यथेति * भेदस्यापूर्वत्वाभावाच्छ्रुतिर्न तत्परेत्युपसंहरति * तस्मादिति * सिद्धे भेदे इति शेषः । इदानीं मिथ्यात्वादिति श्लोकोक्तहेतुं प्रपञ्चयति * किं चाहमर्थे इति * उक्तरीत्येति * परिच्छिन्नाहङ्कारपरामर्शे सत्येवात्मनि भेदप्रतीतेस्तत्परिच्छेदवद्भेदोऽप्यौपाधिकत्वान्मिथ्येत्युक्तयुक्त्येत्यर्थः । सोपाधिकस्याप्यात्मभेदस्य वास्तवत्वमङ्गीकुर्वाणमेकदेशिनं प्रत्याह * न च सोपाधिकमपीति * घटाकाशादिगतभेदचलनादेर्दर्पणमुखादिगतश्यामत्वादे-

(१) भिमतमिथ्यात्त्व मिति ख० पु० पा० ।

(२) श्रुतिसमानप्रामाण्येति ख० पु० पा० ।

पाधिकमपि किं चित्सत्यं, अर्थक्रियाप्रयोजकत्वलक्षण-
सत्यत्वस्य मिथ्यात्वाविरोधिनः श्रुत्यर्थत्वायोगात् ।
अनुपहिताभिन्ने तस्मिन्नबाध्यतद्भेदासम्भवात् भेदज्ञा-
नादनवद्यपुमर्थाभावेन तस्य तत्परश्रुतिजन्यत्वायोगाच्च,
प्रत्युतो 'दरमन्तरं कुरुतेऽथ तस्य भयं भवति' 'मृत्योः
समृत्युमाप्नोति य इह नानेव पश्यतीति' भेदज्ञानस्या-

रौपाधिकस्य नियमेन मिथ्यात्वस्य सर्वजनीनत्वात्क चिदपि तस्य सत्यता न घटत इत्यर्थः । नन्वात्मभेदस्य लौकिकवैदिकव्यवस्थितव्यवहारप्रयोजकतयाऽर्थक्रियाहेतुत्वात्तल्लक्षणत्वाच्च सत्यस्य कथं मिथ्यात्वमित्याशङ्क्याह * अर्थक्रियेति * न तावदर्थक्रियाकारित्वमेव सत्त्वं चरमकार्यस्य तदभावेनासत्वापत्त्या पूर्वपूर्वस्याप्यसत्वेन सर्वशून्यत्वापातादर्थक्रियातोऽप्यवच्छिन्नार्थक्रियाऽभावेन तस्या अप्यसत्वापातात्, नाप्यर्थक्रियायोग्यत्वं सत्त्वं परमते नित्यपरिमाणे तस्याऽप्यभावेनासत्वापातात् । नापि तत्सत्वव्याप्तं स्वप्नादाविव मायिकत्वेपि मायामयार्थक्रियाहेतुत्वोपपत्तौ व्याप्त्यभावात् स्वप्नादिवैधर्म्यं च जाग्रद्दशायां मायिकत्वेऽप्यविद्यातिरिक्तदोषाजन्यतया सति प्रमातर्य्यबाध्यत्वादेवोपपद्यते ततश्च नैतावता सर्वाबाध्यत्वरूपसत्वसिद्धिरिति भावः । किं चोपहितोऽनुपहितादीश्वरादत्यन्तभिन्नः भिन्नाभिन्नो वा, आद्ये भेदस्यौपाधिकत्वकल्पनावैयर्थ्यं, द्वितीयस्त्वसम्भवादयुक्त इति तस्य ततोऽत्यन्ताभेद एव वाच्य इति कथं तद्भेदस्य वास्तवत्वमित्याह * अनुपहितेति * अप्रयोजनादित्येतद्विवृणोति * भेदज्ञानादिति * अध्ययनविध्युपात्तवेदान्तानां फलपर्यवसायित्वमावश्यकं ततश्च स्वर्गादेः क्षयादिदोषग्रस्ततया मुमुक्ष्वभिलषितत्वायोगात् प्रत्यक्षादिजन्यभेदज्ञानादपि तदुपपत्तेश्च नौपनिषदाभेदज्ञानस्य तत्प्रयोजनं, मोक्षस्य तु 'तमेव विदित्वाऽतिमृत्युमेती'त्यात्ममात्रज्ञानाधीनत्वश्रवणात्सोऽपि न तत्फलमित्यभिप्रेत्य भेदज्ञानादनवद्येत्युक्तम् । न केवलं भेदज्ञानादर्थाभावः अनर्थश्च ततः श्रूयते ततोपि श्रुतिर्न तत्परेत्याह * प्रत्युतेति * एतस्मिन्ना-

नर्थहेतुत्वं श्रूयते ‘ अथ येऽन्यथाऽतोविदुरन्यराजानस्तेऽक्षय्यलोका भवन्ति ’ ‘अथ योन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशु’रित्यादिना भेदस्य निन्दितत्वाच्च न तत्र श्रुतितात्पर्य्यम् । ‘ नान्योऽतोस्ति द्रष्टा नान्योऽतोस्ति श्रोता नात्र का चन भिदाऽस्तीत्यादिना’ वाक्येनानधिगताबाधितप्रयोजनवद्भेदाभावस्य

त्मनि उत् अपि अरं अल्पं अन्तरं ईषदपि भेदं यः कुरुते भेदाभेदमपि जानाति तस्य जन्मादि भयं भवति इह आत्मनि नानेव मिथ्याभूतं नाना वस्तु सत्यत्वेन यः पश्यति स मृत्योर्मरणानन्तरं पुनः पुनः जन्ममरणं प्राप्नोतीत्यर्थः । भेददर्शिनिन्दया भेदस्य श्रुत्या निन्दितत्वादपि न तस्यास्तत्र तात्पर्य्यमित्याह * अथ इति * ‘ आत्मैवेदं सर्वं ’ मित्यद्वैतात्मानमुपसंहृत्य ‘ स वा एष एवं पश्य ’ न्नित्यादिना तज्ज्ञानान्निरतिशयानन्दाद्याप्तिरूपममृतत्वमुक्त्वा ‘अथ येऽन्यथाऽतो विदु’ रित्यादिना भेददर्शिनो निन्दति अत उक्तरूपाद्वैतादन्यथा भेदेन भूमानं ये विदुस्तेऽन्यराजानः अन्यो राजा स्वामी येषां तेऽन्यराजानोऽस्वतन्त्राइति यावत् ते भिन्नदेवतोपासनादिना क्षयिष्णुलोका भवन्ति इत्यर्थः । ‘तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथे’ त्यनात्मज्ञाननिषेधश्च शब्दार्थः । एवं मानान्तरप्रसिद्धत्वादित्यादिहेतूनामसिद्धिं युक्तिभो निरस्य श्रुतार्थापत्त्यापि तां निराकुर्वन् श्रुत्यन्तरविरोधादित्येतद्विवृणोति * नान्योऽतोऽस्तीति * अतोऽन्तर्य्यामिणोऽन्यो द्रष्टा नास्तीत्यादिनिषेधानां पारमार्थिकद्रष्टृस्वरूपविषयत्वायोगात्तद्विशेषणान्यत्वनिषेधपरत्वं तद्वाक्यानां गम्यते तस्याज्ञातत्वे सत्यत्वे वा प्रयोजनवत्त्वे वा निषेधायोगादर्थात्तस्य ज्ञातत्वमिथ्यात्वाप्रयोजनत्वानि सिद्धानीति तदुपोद्बलितनिषेधश्रुतिविरोधाद्भेदश्रुतिरन्यपरतया नेतव्या इति भावः । ननु ‘नान्योऽतोस्ति द्रष्टेति ’ श्रुतिर्द्रष्टृपदेनेश्वरं परामृश्य तस्यैवान्तर्य्यामिणः सकाशाद्भेदं प्रतिषेधतीति न तस्या जीवेशभेदश्रुतिविरोधित्वेत्या-

प्रतिपादितत्वाच्च न भेदः सत्यो न वा श्रुत्यर्थः। न चेदं वाक्यमीश्वरस्यैव भेदं प्रतिषेधतीति वाच्यम्। द्रष्टृसामान्यभेदस्यैव प्रतिषिद्धत्वात् श्रोत्रादिभेदनिषेधस्य प्रसिद्धजीवं विहायान्यत्रासम्भवाच्च, भेदं प्रतिषिध्यै'ष त आत्मान्तर्याम्यमृत' इत्यभेदप्रतिपादनाच्च, ईश्वरनानात्वस्याप्रसक्तत्वाच्च न निषेधः। किं च 'द्वा सुपर्णेति' न जीवेश्वरभेदपरम्। तथा हि तद्धि 'तयोरन्यः पिप्पलं स्वाद्वत्ती' त्यहङ्कारतादात्म्यविशि(१)ष्टजीवमनूद्य 'नश्नन्नन्यो अ-

शङ्क्य द्रष्टृपदेन चेतनसामान्यवाचिना जीवस्याप्युपात्तत्वेनावधारणायोगाच्चेतनमात्रभेदनिषेधपरेयमिति तावदाह * न चेदमिति * वस्तुतस्तु 'नान्योतोऽस्ति श्रोता नान्योतोऽस्ति मन्तेत्यादिना श्रोत्रादिजन्यज्ञानवत एव ततो भेदप्रतिषेधादीश्वरस्य शरीरेन्द्रियादिरहितस्य तद्वत्तायोगाज्जीवस्यैवान्तर्यामिणः ईश्वराद्भेदनिषेधपरोऽयं सन्दर्भ इत्याह * श्रोत्रादीति * अपि चानन्तरवाक्ये प्रष्टुरुद्दालकस्य जीवस्यान्तर्याम्यात्मा स्वरूपमिति जीवेश्वराभेदमभिधायातोऽन्यदार्त्तमित्यन्तर्याम्यतिरिक्तस्य नश्वरत्वाभिधानाज्जीवेशभेद एव तत्र निषेध्य इत्याह * भेदं प्रतिषिध्येति * किं चात्मैकत्वाभाववादिमतेऽपि धर्मिग्राहकमानेनेश्वरस्यान्तर्यामिरूपेणैकत्वसिद्धत्वात्तद्भेदस्याप्रसक्तस्य निषेधोऽनुपपन्न इत्याह * ईश्वरनानात्वस्येति * एवं पूर्वोक्तहेतुभ्यः सर्वासां भेदश्रुतीनां सामान्यतस्तत्परत्वं निरस्य प्रत्येकमपि तन्निराकरोति * किं च द्वासुपर्णेति * वाक्यमिति शेषः। अस्यान्यपरतां दर्शयन् भेदे तात्पर्याभावमुपपादयति * तथा हीत्यादिना * अहङ्कारेण तादात्म्यं यस्य स चासौ जीवश्चेति तथोक्तः। अयं हि मन्त्रो जीवस्य पराभिन्नस्यैव बुद्धिविशिष्टरूपेण क-

(१) विशिष्टेति ख० पु० नास्ति।

भि चाकशीतीति' तमेव ततो निष्कृष्याभोक्तृतया दर्शयति विशिष्टानुवादश्च निष्कृष्टाहङ्कारस्य तस्याप्यभोक्तृत्वं प्रतिपादयितुमेव, तथासत्यनुभवविरोधः परिहृतः स्यादन्यथा 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञात' मित्युपक्रमस्य 'अन्या वाचो विमुञ्चथेति' भेदवाङ्निषेधस्य 'ब्रह्मैवेदमिति' पूर्ववाक्यस्य 'ब्रह्म वेद ब्रह्मै-

ल्पितभेदस्य भोक्तृत्वमनूद्य तस्यैव तद्विशिष्टरूपेणान्यस्य सतस्तदभावं प्रतिपादयति इतरथा'ऽनीशया शोचति मुह्यमानः' 'निरञ्जनः परमं साम्यमुपैती' त्यादिवाक्यशेषविरोधापातात् । न च साम्यमुपैतीति मुक्तौ भेदस्य सूचितत्वात्तस्य सत्यत्वमिति वाच्यम् । परमसाम्यस्याभेद एव पर्यवसानादन्यथा 'न तत्समश्चाभ्यधिकश्च दृश्यते' 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य' इत्यादिवचनविरोधात् । अपि चायं मन्त्रः पैङ्गिरहस्यब्राह्मणेन 'तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वं अनश्नन्नन्योऽभि चाकशीतीत्यनश्नन्नन्योऽभि पश्यति ज्ञस्तावेतौ सत्वक्षेत्रज्ञौ तदेतत्सत्वं येन स्वप्नं पश्यति अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञ' इत्यादिना चित्स्वभावो जीवो जडस्वभावबुद्धितादात्म्यापन्नः सत्वशब्दवाच्य स्तदुपाधिकभेदेन शुद्धचिदात्मनो भिन्नो भोक्तृत्वादिविकारमनुभवति केवलजडस्य भोक्तृत्वायोगात केवलस्तु तद्रहितः शुद्धबोधात्मनाऽभितः प्रकाशत इति बुद्धिकृतभेदाद्यनुवादेन शुद्धजीवस्वरूपपरतया व्याख्यात इति नास्य जीवेशभेदपरतेति भावः । शुद्धजीवस्वरूपे प्रतिपादयिषिते तयोरन्य इति विशिष्टे भोक्तृत्वानुवादः किमर्थ इति वीक्षायामाह * विशिष्टानुवादश्चेति * अनुभूयमानभोक्तृत्वस्य शवलात्मधर्मत्वेऽवगते केवले तन्निषेधः शक्यो वक्तुमनश्नन्नन्य इति, इतरथाऽनन्यथासिद्धानुभवविरोधेन तन्निषेधायोगात् तदर्थमेव तदनुवाद इत्यर्थः । आथर्वणगतस्यास्य मन्त्रस्य जीवेशभेदपरत्वे-तद्गतोपक्रमादिविरोधश्च स्यादित्याह *अन्यथेति * कस्मिन् हि भग-

व भवति ' इत्युपसंहारस्य च बाधः स्यात्, 'तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्वं अनश्नन्नन्योऽभि चाकशीतीत्यनश्नन्नन्यो अभि पश्यति ज्ञ ' इत्यादिवाक्यविरोधश्च स्यात्। नापि 'सो ऽश्नुते सर्वान्कामान्त्सहेति' मुक्तौ भेदश्रवणात्तस्य तात्विकत्वम्। ब्रह्मरूपेण युगपत्सर्वानन्दानुभवस्यैव तदर्थत्वान्मुक्तौ तदितरभोगस्यासम्भवात्

व इति' वाक्यमात्मैव सर्वस्य स्वरूपमित्येतत्परं अन्यथा तज्ज्ञानात्सर्वैकत्वज्ञानोपन्यासायोगात्ततश्चेदं भेदविरोध्येव अन्येषां तद्विरोधित्वं स्पष्टमेव *भेदवाङ्निषेधस्येति* तमेवैकं जानथ आत्मानमित्यद्वितीयात्मन एव ज्ञातव्यत्वाभिधानात् ततोऽन्या भेदविषया वाचो हेया इति प्रतीतेः भेदे विवक्षिते तद्विरोधः स्यादित्यर्थः। पूर्ववाक्यस्य-द्वा सुपर्णेत्यस्मात्पूर्ववाक्यस्येत्यर्थः। श्रुत्यन्तरगतस्याप्यस्य भेदपरत्वे पूर्वोक्तपैङ्गिब्राह्मणविरोधो दुष्परिहर इत्याह * तयोरन्य इत्यादिना * एवं ऋतं पिबन्ता ' वित्यत्रापि पिबदपिबतोरौपाधिक एव भेदोऽनूद्यत 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण ' इति तत्रैवोपाधिशबलस्य भोक्तृत्वाभिधानानात् 'एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बभूवेति ' प्रतिबिम्बादिभावेन भेदस्याप्यौपाधिकत्वाभिधानादिति द्रष्टव्यम। ननु तैत्तिरीयकश्रुतौ विदुषो मुक्तौ ब्रह्मणा सहभावश्रवणात्तस्य भेदं विनाऽनुपपत्तेस्तस्य च सत्यत्वं विना मुक्तिकालीनत्वानुपपत्तेः सत्यभेदसिद्धिरिति नेत्याह * नापि सोऽश्नुत इति * अत्र स विद्वान् ब्रह्मणा सह सर्वान्विषयानाप्नोतीत्यर्थो न सम्भवति ' ब्रह्म वेद ब्रह्मैव भवति ' ' यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्ये ' दित्यादिबहुश्रुतिविरोधात्, सहयोगे ब्रह्मणेति तृतीयास्वीकारे ' सहयुक्तेऽप्रधाने ' इति पाणिनीयवचनाद्योगे तत्साहित्यस्वीकारप्रसङ्गाच्च ब्रह्मणो भोगाप्राधान्ययोरापत्तेश्च तस्माद्ब्रह्मणेति तृतीयेत्थम्भावे ततश्च तदावरकाविद्यानिवृत्तौ तद्भावं गतो

अन्यथा 'सह युक्ते ऽप्रधान' इति ब्रह्मणो गुणत्वभोगयोः प्रसङ्गात् तदुक्तं स्कान्दे 'सोऽश्नुते सकलान्कामानक्रमेण सुरर्षभाः । विदितब्रह्मरूपेण जीवन्मुक्तो न संशय' इति । नापि जीवब्रह्मणोर्द्रष्टृद्रष्टव्यभावादिश्रुतिर्भेदविषया तस्याः कल्पितभेदेनैवोपपत्तेः तत्तात्पर्य्यगोचरब्रह्मणः सत्यत्वेन तत्प्रामाण्योपपत्तेः । नचाभेदश्रुतिरेव कल्पिताभेदविषयेति वाच्यम् । अनुभूयमानभेदवि-

विद्वांस्तदन्तर्भूतान् सर्वान्कामान् मानुषानन्दादारभ्योत्तरोत्तरशतगुणितान् ब्रह्मानन्दावसानान्सह युगपदनुभवतीत्येवैतदर्थो ग्राह्य इत्याह * ब्रह्मरूपेणेत्यादिना * किं चोक्तार्थपरतया श्रुतिरियं ब्रह्मगीतायां ब्रह्मणा देवान्प्रति व्याख्याता ततो नात्र विवदितव्यमित्याह * तदुक्तमिति * नन्वात्मा द्रष्टव्यः' 'य आत्मानमन्तरो यमयती'त्यादिश्रुतिभिर्जीवपरयोर्दर्शनादौ कर्तृकर्मभावस्य, नियमनादौ तु कर्मकर्तृभावस्य चाभिधानात्तस्य च तात्त्विकभेदं विनाऽनुपपत्तेस्तत्सिद्धिरित्याशङ्क्य न तत्पराभेदश्रुतिविरोधाद्भेदस्य वास्तवत्वानुपपत्तेरतत्परश्रुतिप्रतीतकर्मकर्त्तृत्वादिभावस्य च व्यावहारिकभेदेनैवोपपत्तेरित्याह * नापि जीवेति * कर्त्तृकर्मभावादिपरत्वाभावेऽन्यस्याप्यर्थस्याभावाच्छ्रुतेरप्रामाण्यापात इत्याशङ्क्य ब्रह्मप्रतिपादकवाक्यैकवाक्यतया तत्परत्वात् प्रामाण्योपपत्तिरित्याह * तत्तात्पर्य्येति * नन्वभेदश्रुतिविरोधाद्भेदश्रुतिः कल्पितविषयेति कथं वैपरीत्यमेव किं न स्यादिति नेत्याह * न चाभेदेति * कल्पितत्वं ह्यभेदस्यानिर्वचनीयत्वं तच्च तस्य प्रातिभासिकत्वेन व्यावहारिकत्वेन वा स्यात्तत्र नोभयमपि घटते भेदप्रतिभासविरोधेनाभेदप्रतिभासासम्भवात् तदधीनव्यवहाराभावाच्चेत्याह * अनुभूयमानेति * श्रुत्यनभिज्ञानामभेदप्रतिभासाभावेपि तदभिज्ञानां तत्प्रातिभासात्तत्प्रा-

(१) तत्रतत्रभो भयमपीति खपु० पा० ।

रोधेन प्रातीतिकस्य व्यावहारिकस्यवाऽभेदस्यासम्भवात्, श्रुतिपरिचयहीनानामभेदज्ञानाभावेन तदेकवेद्यस्य मिथ्यात्वे तदप्रामाण्यप्रसङ्गात्। श्रुतेस्तत्र न तात्पर्य्यमिति चेत्। न अज्ञाते पुमर्थसाधने तस्मिन्तात्पर्य्यस्यावश्यकत्वात्। न चान्यपराऽभेदश्रुतिरुपासनापरा वा ऽस्त्विति वाच्यम्। श्रुतपरित्यागाश्रुतकल्पनाप्रङ्गात् एकविज्ञानात्सर्वविज्ञान वाचारम्भणमृदादिदृष्टान्तपरमात्मप्रवेशादिभिरभेदोपपादनवैयर्थ्यात् अभेदोपक्रमादिभिस्तत्प्रतिपादनं च न स्यात्, तस्मान्निरवकाशत्वात्तत्परत्वाच्चाद्वैतश्रुतिर्बलवती। अतए-

तिभासिकत्वमित्याशङ्क्य किं श्रुतिस्तत्परा उत नेति विकल्प्याद्ये चैत्यवन्दनादिवाक्यवत्तदप्रामाण्यापात इत्याह * श्रुतिपरिचयेति * ज्ञानाभावेनत्येनदनन्तरं श्रुतिपरिचयवतामपीति शेषः। द्वितीयं शङ्कते * श्रुतेरिति * अभेदे तात्पर्य्यलिङ्गस्यापूर्वत्वादेः सत्वात्तदभावो न युक्त इत्याह * न अज्ञातेति * भेदश्रुतिविरोधादभेदश्रुतिर्जीवे ब्रह्मसादृश्यपरा तदुपास्तिपरा वाऽस्त्वित्याशङ्क्य तस्या व्यावहारिकभेदानुवादित्वेनाविरोधस्योक्तत्वादिच्छामात्रेणाभेदश्रुतेरन्यपरत्वकल्पनायां श्रुतहान्यादिदोषापात इत्यभिप्रेत्याह * न चान्यपरेत्यादिना * न केवलमभेदश्रुतेरन्यपरत्वे श्रुतहान्याद्यापत्तिः किंतु तदर्थवादोपपत्तिश्रुतीनामुपक्रमोपसंहारपरामर्शफलश्रुतीनां च वैयर्थ्यापात इत्याह *एकविज्ञानादित्यादिना* 'येनाश्रुतं श्रुतं भवति' 'वाचारम्भणं विकारो नामधेयं' 'अनेन जीवेनात्मनाऽनुप्रविश्य' त्यादिभिरभेदोपपादनादित्यर्थः। प्रवेशादिभिरित्यादिपदेन प्रविष्टस्य दर्शनश्रवणादिव्यवहारो गृह्यते। अभेदश्रुतेः कल्पिताभेदविषयत्वान्यपरत्वनिरसनफलमाह * तस्मादिति * सत्यमभेदं विनोक्तरीत्यार्थान्तरासम्भवान्निरवकाशत्वं ततश्च भेदश्रुतेर्दुर्बलाया-स्तद्विराधान्न भेदे प्रामाण्यमितिभावः। एवं भेदसत्यत्वे श्रुतिप्रामाण्यं

वार्थापत्तिरपि न भेदे प्रमाणं सत्यभेदं विनाऽनुपपन्नार्थाभावात् भेदे जीवादीश्वरस्यानात्मत्वापत्तिश्च अहमनुभवेऽप्रकाशमानस्य घटादिवदनात्मत्त्वात्। परमतेऽप्यात्मत्वस्य

निरस्यार्थापत्तिमपि निराकरोति * अन एवेति * एतद्विवृणोति * सत्यभेदमिति * 'यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येत्' दित्यादिश्रुतिपर्यालोचनया सत्यपि वास्तवाभेदेऽनिर्वचनीयव्यावहारिकभेदादेव तादृशाखिललौकिकवैदिकव्यवहारोपपत्तेराश्रयणीयत्वादर्थापत्तेरनुत्थानाद्भेदसत्यत्वे न तत्प्रमाणमित्यर्थः । एवं वास्तवभेदाभावेऽनुपपत्त्यभावमुक्त्वा जीवात्परमात्मनः स्वतो भेदे तस्यात्मत्वानुपपत्तिरिति बाधकमाह * भेदे जीवादिति * जीवाद्भेदे सतीत्यर्थः । किं भेदिमते लोकप्रसिद्ध्यनुरोधेनाहमनुभवालम्बनयोग्यत्वमात्मत्वमुत ज्ञानाश्रयत्वं जातिविशेषो वा आद्ये मनोजन्यानुभवे कदापीश्वरस्याप्रकाशमानस्य तदालम्बनत्वयोग्यत्वाभावादनात्मत्वापत्तिरित्याह * अहमनुभव इति * अप्रकाशमानस्येति छेदः । न चेश्वरस्य स्वकीयाहमनुभवे प्रकाशमानत्वसम्भवात्तदभावोऽसिद्ध इति वाच्यं । तस्य दुःखादिधर्म्यहङ्कारगोचरतया क्लृप्तस्य तद्रहिते परमेश्वरेऽसम्भवात् तत्र तत्रेश्वरप्रयुक्ताहंशब्दस्य निरहङ्कारस्वरूपमात्रपरतया वक्ष्यमाणत्वेन तादृशानुभवे प्रमाणाभावादिति भावः । एतेन द्वितीयोऽपि कल्पो निरस्तो वेदितव्यः अहमनुभवागोचरस्य घटादिवत् ज्ञानाश्रयत्वायोगात् । किं च स्वप्रकाशज्ञानस्य तत्स्वरूपत्वेन तदाश्रयत्वाभावाद्वृत्तेश्च तस्मिन्नसम्भवाल्लाघवेन ज्ञानस्यैवात्मपदाभिलप्यत्वेन तत्र तद्व्यवहारोपपत्तेरन्यथा दुःखाद्याश्रयत्वमेवात्मत्वं किं न स्यादिति, तृतीयेऽपीश्वरस्यात्मत्वानुपपत्तिमाह * परमतेपीति * परैर्ह्यनुगतप्रत्ययालम्बनतया कार्य्यतावच्छेदकतया वा कारणतावच्छेदकतया वा जातिः स्वीक्रियत इति आत्मत्वे चाद्यद्वयासम्भवात्तृतीय एव वाच्यः तत्र चात्मत्वस्य दुःखादिसमवायिकारणमात्रवृत्तित्वे सा सम्भवति अवच्छेदकस्यावच्छेद्यानधिकवृत्तित्वनियमात्तस्य तदसमवायिनि तटस्थेश्वरे वृत्त्ययोगा-

सुखसमवायिकारणतावच्छेदकस्य तदनधिकरणे वृत्त्ययोगात्।एवं जीवा अपि न भिद्यन्ते तथाहि ध्वंसाप्रतियोगिदे-

त । न च जीवत्वमेव दुःखादिसमवायितावच्छेदकं तस्य चेश्वरेऽनुपपत्तिरिष्टैव आत्मत्वं तु तत्रापि जीवसाधारणात्मपदप्रवृत्तिनिमित्ततयोपेयमिति वाच्यम् । जीवत्वस्य दुःखादिमत्वरूपोपाधित्वे गौरवादसम्भवाच्च तदवच्छेदकत्वायोगात् जातिविशेषरूपस्य तस्यानुपदमेव जीवभेदनिरासेन निरसिष्यमाणत्वात् अपरिच्छिन्नचिद्रूपत्वस्यैवोभयत्रात्मपदप्रवृत्तिनिमित्तत्वाच्च न जीवेशानुगतात्मत्वजातिसिद्धिरिति भावः । जीवेशभेदे प्राग्योग्यानुपलम्भनिरासादेव षष्ठप्रमाणमपि न तस्य सत्वसाधकमिति सिद्धम् । एवं प्रमाणाभावाज्जीवेशभेदे तात्विकत्वाभावमुपपाद्य जीवानां कथमेकेन ब्रह्मणाऽभेद इत्याशङ्क्य तद्भेदस्याप्यवास्तवत्वं प्राक्प्रतिज्ञातमुपपादयितुमुपक्रमते * एवं जीवा इति * परस्परमिति शेषः । जीवानां परस्परभेदाभावेऽनुभवविरोध इत्याशङ्क्याहमसौ नेत्याद्याकारणाहङ्काराद्युपाधिकानिर्वचनीयो भेदोऽनुभवगोचरो, निरुपाधिकवास्तवस्तुभेदो निरस्यत इत्यभिप्रेत्य निरुपाधिकभेदाभावं तावदनुमानेन साधयति * ध्वंसाप्रतियोगीति * अत्र ध्वंसाप्रतियोगी यो देवदत्ताहमनुभवविषयभूतो विशेष्यः स पक्षः तस्य भौतिकदेहाद्यतिरिक्तो यो यज्ञदत्ताहमनुभवविशेष्यस्तत्प्रतियोगिको निरुपाधिको भेदो घटादौ प्रसिद्धः पक्षेपि परैः स्वीकृतस्तद्राहित्यं साध्यं, सिद्धान्ते देहादेरप्यहमनुभवविशेष्यत्वात्तत्र बाधवारणाय ध्वंसाप्रतियोगीति पक्षविशेषणम् । यज्ञदत्ताहमनुभवविशेष्ये तदीयात्मनि सिद्धसाधनतावारणाय पक्षे देवदत्तपदं प्रयुक्तम् । घटे घटत्वमित्यादिपरोपेनदेवदत्तानुभवविशेष्ये घटत्वादौ बाधवारणायाहमनुभवेत्युक्तम् । तद्विषयमात्रस्य पक्षत्वेऽहन्त्वस्यापि तद्विषयत्वेन तत्र बाधः स्यात्तन्निवारणायाहमनुभवविशेष्य इत्युक्तम् । देवदत्तात्मनि यज्ञदत्ताहमनुभवविशेष्यतदीयदेहेन्द्रियादिप्रतियोगिकनिरुपाधिकभेदस्वीकारात्तद्राहित्यसाधने बाधः स्यात्तद्वारणाय साध्ये भौतिकातिरिक्तेत्युक्तम् । देवदत्ताहमनुभवविशेष्ये तदीयात्मप्रतियोगिकनिरुपाधिकभेदस्य परमतेऽपि

वदत्ताहमनुभविशेष्यो न भौतिकातिरिक्तयज्ञदत्ताहमनुभ-
वविशेष्यप्रतियोगिकानौपाधिकभेदवान् कार्य्यकारणा(१)

तत्राभावातिसिद्धसाधनतावारणाय यज्ञदत्तेति विशेषणम् । यज्ञदत्तानुभवविशेष्यघटत्वादिप्रतियोगिकनिरुपाधिकभेदस्य पक्षे सत्वात्तदभावसाधने बाधः स्यात्तद्वारणाय साद्धेत्यहमनुभवेत्युक्तम् ।(२)आत्मत्वस्यापि तद्विषयत्वात्तत्प्रतियोगिकभेदाभावसाधने बाधः स्यात्तद्वारणायाहमनुभवविशेष्येत्युक्तम् । तद्विशेष्ययज्ञदत्तात्मप्रतियोगिकसोपाधिकभेदस्य पक्षे स्वीकारात्तन्निषेधे बाधः तद्वारणायानौपाधिकेत्युक्तम् । तत्र हेतुद्वयमाह * कार्य्यकारणेति * स्थूलसूक्ष्मशरीरे कार्य्यकारणपदार्थः । सिद्धान्ते शरीरेन्द्रियादिषु व्यभिचारवारणाय तद्व्यतिरिक्तत्वविशेषणम् । घटादावात्मत्वे च तद्वारणायाहमनुभवविशेष्यत्वादित्युक्तम् । द्वितीयहेतौ पक्षदृष्टान्तयोरसिद्धिसाधनवैकल्यपरिहाराय स्वावृत्तीति विशेषणम् । नन्वेवमपि तयोः स्वावृत्तिपरोक्षज्ञानविषयत्वादीश्वरज्ञानविषयत्वाच्च स दोषस्तदवस्थ एव । न च स्वावृत्तिलौकिकप्रत्यक्षाविषयत्वादिति विवक्षितमिति वाच्यम् । तथा सति परमते नित्यातीन्द्रियेषु सिद्धान्ते वाहङ्कारे व्यभिचारापत्तेरिति चेत् न । ज्ञानपदेन प्रकृताहमनुभवस्य विवक्षितत्वात् तथा चाहमाकारानुभवविषयत्वे सति स्वावृत्त्यहमनुभवाविषयत्वादिति हेतुर्विवक्षितः । तत्र धर्मादौ व्यभिचारवारणायाहमाकारानुभवविषयत्वे सतीत्युक्तम् । तत्र यद्यप्यहंधर्मीत्याकारानुभवोऽस्ति तथाप्यहमाकारांशविषयत्वाभावान्न व्यभिचारः । ज्ञाने च विषयभेदप्रयुक्तांशभेदः परैरभ्युपेयते तावन्मात्रस्य भेदादौ व्यभिचारवारणाय स्वावृत्त्यहमनुभवाविषयत्वादित्युक्तम् । तत्रानुभवाविषयत्वस्याहमनुभवाविषयत्वस्य च पक्षदृष्टान्तयोरप्रसिद्धिवारणेन व्याप्तिग्रहोपयोगाय स्वावृत्तीत्युक्तम् । न च सिद्धान्तेऽहङ्कारेण व्यभिचारः तन्मते तस्याहमाकारवृत्तिविषयत्ववत् स्वावृत्त्यहमाकारसाक्षिरूपानुभवविषयत्वस्वीकारेण तत्र हेत्वभावादित्यादि द्रष्टव्यम् । नन्वङ्कुराद्यक-

(१) देहादावितिख पु पा० ।

(२) व्यतिरिक्तेति ख पु० पा० ।

तिरिक्तत्वे सत्यहमनुभवविशेष्यत्वात्स्वावृत्तिज्ञानाविषयत्वाद्वा यज्ञदत्त (१) वत्, व्याप्तिग्रहोपयुक्तत्वाच्च स्वावृत्तीति न व्यर्थम् । सर्वेषामप्यास्तिकानां सङ्घातद्वयातिरिक्त आत्मा सिद्ध इति न पक्षहेत्वसिद्धिः वृत्तिरप्यात्माध्यस्तैवात्मविषयेति न सिद्धान्ते द्वितीयहेत्वसिद्धिरपि । न च यज्ञदत्तसुखाद्यभावानधिकरणत्वं तदी-

तृकं शरीराजन्यत्वादित्यत्र शरीरपदवदत्रापि स्वावृत्तिपदमसिद्धिमात्रवारकत्वाद्व्यर्थमिति नेत्याह * व्याप्तिग्रहेति * हेत्वप्रसिद्धिनिवारणेन यद्विशेषणं व्याप्तिग्रहोपयोगि तद्धेतुविशेषणं परैरप्युपादीयते शरीरपदं तु नैवं यथा चक्षुस्तैजसं रूपादिपञ्चसु रूपस्यैवाभिव्यञ्जकत्वादालोकवदित्यत्र रूपादिष्विति विशेषणं तथेदमपीति न व्यर्थमित्यर्थः। ननु ध्वंसाप्रतियोगित्वं कार्यकारणातिरिक्तत्वं चात्मनः सुगतानां लोकायतानां चासम्मतं ततश्च पक्षहेत्वोरसिद्धिरित्याशङ्क्य तद्व्यतिरिक्तपरीक्षकान् प्रत्येवायं प्रयोग इति नोक्तदोष इत्याह * सर्वेषामिति * ननु सिद्धान्तेऽहमाकारवृत्तेरन्तःकरणपरिणामत्वेन तदेकवृत्तित्वात्तद्विषयस्यात्मनः स्वावृत्त्यहमनुभवविषयत्वात्तदविषयत्वरूपो हेतुरसिद्ध इत्याशङ्क्यान्तःकरणधर्माणां तदवच्छिन्नात्मन्यध्यासात्तदवच्छिन्नात्मनोऽपि वृत्त्यधिष्ठानतया तदाश्रयत्वस्वीकारात्तस्याऽपि स्ववृत्त्यहमनुभवगोचरत्वमेव । न च तस्य स्वावृत्तिस्वरूपानुभवगोचरत्वमिति वाच्यम् । स्वस्य स्वविषयत्वायोगादित्यभिप्रेत्य न स्वमतेऽपि हेत्वसिद्धिरित्याह * वृत्तिरपीति * तथापि यज्ञदत्तसुखाद्यभावानधिकरणत्वादिना सोपाधिकत्वाद्धेतुद्वयं व्याप्यत्वासिद्धमित्याशङ्क्योपाधिं निराकरोति * न च यज्ञदत्तेति * यस्मिन् यज्ञदत्तात्मनि स्वप्रतियोगिकभेदराहित्यं तत्र तत्सुखाद्यभावानधिकरणत्वतत्सुखाद्यधिकरणत्वयोः सत्वात्साध्यव्या-

(१) यज्ञदत्तअनुभवविशेष्यवत् इति गपु०पा० ।

यसुखाद्यधिकरणत्वं वोपाधिः, सुप्तिकालीने तच्छरीरानवच्छिन्ने च तस्मिन्साध्याव्यापकत्वात् यदवच्छेदेन साध्यं तदवच्छेदेनोपाध्यनङ्गीकारे पक्षे साध्यसत्वेऽप्यविविरोधात् । न च देवदत्तसुखाद्यनधिकरणत्वमुपाधिः घटादावपि सत्वात् सुखादेरव्याप्यवृत्तिस्वभावतया पक्षे

पकत्वं साधनवति देवदत्तात्मन्यभावात्साधनाव्यापकतेति तयोस्तत्रोपाधितेति न च वाच्यं । तत्र हेतुमाह *सुषुप्तीति* यज्ञदत्तस्वापकालीने तदात्मन्युक्तसाध्यवत्यपि तदीयसुखप्रागभावाद्यधिकरणत्वोक्तोपाध्योरभावात् साध्याव्यापकत्वं यज्ञदत्तसुखाभावानधिकरणत्वमित्यत्राभावपदेनात्यन्ताभावविवक्षायां यज्ञदत्तशरीरानवच्छिन्ने तदात्मनि तदीयसुखात्यन्ताभावसत्वात्तदनधिकरणत्वसुखाधिकरणत्वयोरभावात्तत्र साध्याव्यापकत्वं दुर्वारमित्यर्थः । ननु साध्यवति यज्ञदत्तात्ममात्रे उक्तोपाध्योरभावेऽपि तच्छरीरावच्छिन्नात्मनि सत्वात्तयोः साध्यव्यापकत्वमित्याशङ्क्याह * यदवच्छेदेनेति * एकावच्छेदेन हि साध्योपाध्योः साहचर्य्यं वाच्यं इतरथा साध्यस्यावच्छेदभेदेनाप्युपाध्यभावेन साहचर्य्यस्वीकारे साध्यवति पक्षेऽवच्छेदभेदेनापि तदभावोपपत्तौ तत्रोपाध्यभावेन साध्याभावानुमानायोगादुपाधेर्दूषकता न स्यादित्यर्थः । तर्हि यज्ञदत्तात्ममात्रे साध्यव्यापकं देवदत्तसुखाद्यनधिकरणत्वं तत्रोपाधिरित्याशङ्क्याह * न च देवदत्तेति * किं साध्यसमव्याप्तिकोऽयमुपाधिः विषमव्याप्तिको वा, नाद्यः साध्याभाववत्यपि घटादावस्य सत्वेन समव्याप्त्यभावादित्युक्त्वा द्वितीये आह *सुखादेरिति* देवदत्तसुखानधिकरणत्वं नाम किं तदधिकरणभिन्नत्वं तदभावाधिकरणत्वं वा, नाद्यः यज्ञदत्तात्मनि तदसम्प्रतिपत्तेः द्वितीये देवदत्तात्मा यज्ञदत्तात्मनो भिद्यते देवदत्तसुखाभावाभाववत्वात् व्यतिरेकेण यज्ञदत्तात्मवदिति प्रतिपक्षोन्नायकत्वं वक्तव्यं तत्रास्य हेतोरवच्छेदभेदेन स्वाभावसामानाधिकरण्यस्य देवदत्तसुखाभाववद्यज्ञदत्तात्माभेदेऽपि सम्भवादप्रयोजकत्वमिति न प्रतिपक्षतेत्यभिप्रेत्याह * सुखादेरिति * पर-

साध्ये सत्यपि तदुपपत्तेश्च । न च ब्रह्मणि विष्णुमित्रादौ च व्यभिचारः पक्षसमत्वात् ब्रह्मणि प्रथमहेतोरभावाच्च अन्वयव्यतिरेकाभ्यामहमित्यनुभवस्याहङ्कारविषयतया क्लृप्तस्यानहङ्कारे तस्मिन्नयोगात् । न च ब्रह्मण्यहङ्कारे किञ्चित्प्रमाणमस्ति क्वचित्तस्मिंस्तच्छब्दप्रयोगस्य लाक्षणिकत्वात्, नापि बाधः प्रत्यक्षतोनौ-

मते ब्रह्मणो जीवान्तरस्य च यज्ञदत्तात्मभिन्नस्य स्वस्वाहमनुभवगोचरत्वात्तत्र हेतुद्वयस्य व्यभिचार इत्याशङ्क्याह * न च ब्रह्मणीति * तत्रापि साध्यस्य सन्दिग्धतया पक्षतुल्यत्वात्ततश्च पक्ष इव पक्षतुल्येऽपि न व्यभिचार इत्यर्थः । एतेनास्य विरुद्धत्वमपि निरस्तं विपक्षावृत्तित्वादेव पक्षविपक्षमात्रवृत्तित्वरूपविरुद्धत्वस्याप्यसम्भवात् । किं च दुःखादिधर्म्यहङ्कारस्य स्वतोऽहमनुभवविषयत्वं तत्तादात्म्यादात्मनस्तद्विषयत्वमिति तद्रहिते ब्रह्मणि तद्विषयत्वरूपहेतोरभावान्न व्यभिचार इत्याह * ब्रह्मणीति * द्वितीयहेतोरपि यथाश्रुतस्य विवक्षितस्य च ब्रह्मण्यभावात्प्रथमेति प्रदर्शनार्थमिति द्रष्टव्यं । ननु लाघवाच्चेतनमात्रस्याहमनुभवविषयत्वाद्ब्रह्मणि तदभावोऽसिद्ध इत्याशङ्क्याह * अन्वयव्यतिरेकाभ्यामिति * जाग्रत्स्वप्नयोरहङ्कारे सत्यहमित्याकारानुभवदर्शनात्सुषुप्तौ तल्लये तददर्शनादहङ्कारस्याहमनुभवविषयत्वमावश्यकं तस्य च परमप्रेमास्पदादिस्वभावप्रत्यगात्मतयाऽनुभवादहङ्कारतादात्म्यापन्नप्रत्यगात्मनोऽपि तद्विषयत्वं तद्द्वारकमित्यहङ्काररहिते ब्रह्मणि तद्विषयत्वं न सम्भवतीत्यर्थः । ब्रह्मण्यनहङ्कारत्वमसिद्धमित्याशङ्क्याह * न च ब्रह्मणीति * न तावज्जीवानां ब्रह्माहङ्कारे किञ्चित्प्रमाणमस्ति परकीयाहङ्कारस्य परं प्रत्यप्रत्यक्षत्वात् ब्रह्मण्यहङ्कारसाधकलिङ्गाद्यभावाच्च, प्रत्युत अनहङ्कर्त्तायितव्यंनैवच्च तस्य लिङ्गं अनामरूपं निरहं प्रपद्यते इत्यादिवचनात्तदभावनिश्चयाद्ब्रह्मण्यहङ्कारो नास्तीत्यर्थः । नापि ‘अहमात्मा गुडाकेश’ ‘अहमादिश्च मध्यं च’ ‘इत्यादौ परमेश्वरप्रयुक्ताहंशब्दानुमिततदीयप्रत्यक्षं तदहङ्कारे प्रमाणमिति युक्तं उ-

पाधिकात्मभेदाप्रतीतेः । नापि तस्मिन्किंचिल्लिङ्गमस्ति, सुखाद्यनुसन्धानानुसन्धानव्यवस्थाया अनुपदमेव वक्ष्यमाणत्वात्।नापिश्रुतिबाधः अन्तःकरणाद्यविशिष्टात्मभेदस्य श्रुतौ क्वाप्यदर्शनाद्बन्धमुक्तव्यवस्था कर्मण्यधिकारानधिकारादिव्यवस्था चान्तःकरणादिविशिष्टभेदेनाप्युपपद्यत इति न बाधिका । ननुदेवदत्तात्मा यज्ञदत्तात्मप्रतियोगिकानौपाधिकभेदवान् तद्दुःखाननुसन्धातृत्वात् सम्मतवत् अन्यथा हेतूच्छित्तिः।न चौपाधिकभेदे(१)प्युपप-

क्तविषया तत्र मुख्यार्थासम्भवान्मायाशबलब्रह्मस्वरूपमेवाहङ्कारकारणं तत्र लक्षणया बोध्यत इत्याशयेनाह * क्वचिदिति * एवमुक्तहेत्वोरनैकान्तिकतां निरस्य कालातीततां निराकरोति *नापीति* किमत्र प्रत्यक्षं बाधकमनुमानं वाऽर्थापत्तिर्वाऽऽगमो वा तदनुपपत्तिर्वेति विकल्प्य क्रमेण निराकरोति * प्रत्यक्षेन इत्यादिना न बाधिकेत्यन्तेन * देवदत्तो यज्ञदत्तो नेत्याद्याकारेण शरीराद्युपाधिकभेदस्यैव प्रतीतेर्न निरुपाधिकस्तद्भेदः प्रत्यक्षगोचर इत्यर्थः । * नापि लिङ्गमिति * निष्कृष्टाहङ्कारे निर्विशेषात्मनि लिङ्गस्यासम्भवात् सम्भावितस्याप्यनन्तरमेव प्रतिपक्षनिरासावसरे निरसिष्यमाणत्वाच्चेति भावः । अर्थापत्तिनिरासाय सुखादीत्याद्युक्तं तत्र प्रथममौपाधिकभेदेनैवेति प्रयोक्तव्यं अस्य सत्प्रतिपक्षतां निराकर्त्तुं प्रथमं प्रतिपक्षानुमानं शङ्कते * नन्विति * तस्य यज्ञदत्तस्य यद्दुःखं तत्स्मरणशून्यत्वादिति हेत्वर्थः। न च यज्ञदत्तदुःखविषयपरोक्षज्ञानवतो देवदत्तस्य तत्स्मरणसम्भवादसिद्धो हेतुरिति वाच्यम्। तद्दुःखविषयपरोक्षज्ञानशून्यस्यैव पक्षत्वेनोक्तदोषाभावादिति भावः। ननु तस्य तदनुभवाभावादेवास्मरणं न भेदादित्यप्रयोजकत्वमित्याश-

(१) भेदादपीति ख० पु० पा० ।

त्तेरप्रयोजकता, उपाधिभेदातिरिक्तौपाधिकभेदस्याननुभवात् असम्भवाच्चेति चेन्नौपाधिकभेदाभावे कस्य तर्ह्यनुस-

न्धाभेदे तदनुभवस्याप्यावश्यकतया तत्स्मरणापत्तिरिति बाधकमाह * अन्यथेति * स्वतोऽभेदेऽप्यन्तःकरणाद्युपाधिकभेदादन्यस्य सतोऽन्यदुःखाननुभवितृत्वोपपत्तेरप्रयोजकता तदवस्थेत्याशङ्क्याह * न चौपाधिकेति * किमुपाधिगतभेद एवान्यत्रात्मनि प्रतीतेरौपाधिक इत्युच्यते तदतिरिक्तभेदो वा, आद्ये तव देवदत्तयज्ञदत्तात्मभेदाभावादनुसन्धानादिव्यवस्थाऽनुपपन्नेत्यभिप्रेत्य द्वितीय आह * उपाधिभेदेति * घटाकाशादौ जलचन्द्रादौ चौपाधिकभेदानुभवस्य 'सविशेषणे हि विधिनिषेधाविति' न्यायेनोपाधिभेदविषयतयाऽन्यथासिद्धेस्तदतिरिक्ताकाशादिभेदे मानाभावादात्मन्यपि तदभावः सिद्ध इति न तदधीनानुसन्धानादिव्यवस्थेत्यर्थः । किं च किं भेदस्यौपाधिकत्वमुपाधिजन्यत्वं तज्ज्ञाप्यत्वं तदधीनसम्बन्धवत्त्वं वा, नाद्यः भेदस्यानादित्वात्तदानीमपि स एवायमिति प्रत्यभिज्ञाप्रमिताभेदे सति तद्भेदासम्भवाच्च, द्वितीये भेदज्ञानस्य प्रमात्वे तद्विषयसत्यभेदस्यात्मन्यावश्यकत्वान्मदिष्टसिद्धिः, तवाप्याकाशादौ तत्प्रसङ्गश्च, तस्य भ्रमत्वे च भ्रमविषयभेदस्याऽऽत्मन्यभावात्तदधीनव्यवस्थाया असम्भवादन्यथा तस्य भ्रान्तित्वायोगात्, न तृतीयः भेदस्वरूपातिरिक्तसम्बन्धासम्भवात्तस्य चानादित्वेनोपाध्यधीनत्वायोगात् तस्मादौपाधिको भेदो न सम्भवतीत्याशयेनाह * असम्भवाच्चेति * एवमनुसन्धानादिव्यवस्थानुपपत्त्या पूर्ववादिना प्रतिपक्षहेतोरप्रयोजकत्वे निरस्ते सिद्धान्ती तावदनुसन्धानादेरात्मधर्मत्वमुपेत्य सोपाधिकभेदेनाप्युक्तव्यवस्थोपपत्तेरप्रयोजकत्वं तदवस्थमिति प्रतिपक्षानुमानं दूषयति * नेति * औपाधिकभेद एवासम्भवीत्युक्तमित्याशङ्क्य तात्त्विकस्य तस्यासम्भवेऽप्यनिरूपितरूपः सोऽभ्युपेयः अन्यथा त्वदीयव्यवस्थाया एवासम्भवात्तदनुपपत्तेर्दूरापेतत्वादित्याह * औपाधिकेति* अनुसन्धातृत्वतदभावयोर्व्यवस्था नाम परस्परभिन्नाधिकरणकत्वं तत्त्वात्मैक्यवादिनोऽसम्प्रतिपन्नमिति देहाद्यतिरिक्तात्ममात्रस्य सर्वदुःखानुसन्धानापादनमिष्टमित्यर्थः । देवदत्तादिशरीरभे-

न्धानमापाद्यते सिद्धान्ते देवदत्तयज्ञदत्तात्माभेदेन यज्ञदत्तानुभवस्यैव तदीयत्वात्, न च देहस्यानुसन्धातृत्वमस्ति। देवदत्तात्मशरीरेणापि तज्ज्ञानात्प्रवर्त्तेतेति चेन्न। तच्छरीरप्रवृत्तौ हि तदवच्छिन्नात्मप्रदेशसमवायि ज्ञानं कारणं मृतशरीरे प्रवृत्त्यदर्शनात्। न च यज्ञदत्तशरीरावच्छिन्नं ज्ञानं देवदत्तशरीरावच्छिन्नात्मप्रदेशवृत्ति, न वा परमते ज्ञानं व्याप्यवृत्ति। न च मृतशरीरे मनःसंयोगविरहान्न प्रयत्नादिकमिति वाच्यम्। प्रेतशरीरावच्छिन्ने तस्मिंस्तस्य

देन व्यवस्था किं न स्यादित्याशङ्क्याचेतनस्य तस्य स्मर्तृत्वाद्यभावात्तदुपाधिकात्मभेदाभावे शिरःपादादिवत्तस्य तद्व्यवस्थायामप्रयोजकत्वेत्याह * न च देहस्येति * ऐकात्म्यमतेऽपि प्रवृत्तिसाङ्कर्य्याभावसिद्ध्यै तद्धेतुप्रयत्नादेरप्यसाङ्कर्य्यरूपा व्यवस्थाऽऽस्थेया ततश्च तदधिकरणात्मभेदसिद्धिरितरथा यज्ञदत्तशरीरोत्पन्नज्ञानादिना देवदत्तशरीरेऽपि प्रवृत्तिः स्यादिति शङ्कते * देवदत्तेति * प्रवर्त्तेतेति * यज्ञदत्तज्ञानगोचर इति शेषः। किं परमते ज्ञानादिकमव्याप्यवृत्ति व्याप्यवृत्ति वा, आद्ये ऐकात्म्येऽपि यज्ञदत्तशरीरावच्छिन्नात्मप्रदेशसमवायिज्ञानस्य परमत इव तत्रैव प्रयत्नजनकत्वात् प्रयत्नवदात्मसंयोगकारणिका क्रिया यज्ञदत्तशरीर एव जायते देवदत्तशरीरावच्छिन्नात्मप्रदेशे तु तज्ज्ञानादेरभावादेव तत्कारणकप्रवृत्तेरप्यभावोपपत्तावात्मभेदो न कल्प्य इत्याह * न तच्छरीरेति * विपक्षे बाधकमाह * मृतशरीर इति * एवं सति मरणानन्तरमेव प्रेतशरीरं प्राप्तस्य तत्रत्यज्ञानादिना मृतशरीरप्रवृत्त्याद्यापत्तिर्न तथा दृश्यत इत्यर्थः। न द्वितीयः अपसिद्धान्तापत्तेरित्याह * न वा परमते इति * ज्ञानस्य व्याप्यवृत्तित्वेऽपि मृतशरीरवदात्मनि मनःसंयोगाख्यकारणाभावादेव तत्र प्रयत्नाद्यभावो न ज्ञानाभावादित्याशङ्क्याह * न च मृतेति * किं मृतशरीरवदात्ममात्रे मनःसंयोगाभावः उत तदव-

सत्वात् यज्ञदत्तज्ञानजनकमनःसंयोगादेर्देवदत्तशरीरेऽप्यभावात्, तस्य च मनःसंयोगस्य स्वजन्यज्ञानगोचर एव प्रवर्त्तकत्वात्, ज्ञानस्य स्वजनकमनसाऽसन्निकृष्टशरीरान्तरावच्छिन्नात्मधर्मागोचरत्वात्। अत एव बालादिशरीरभेदेऽपि यथाऽनुसन्धानं तथा देवदत्तयज्ञदत्तयोरपि स्यादिति प्रत्युक्तम्। येन मनसा यदनुभूतं तेनैव तत्स्मरणमि-

च्छिन्नात्मप्रदेशो नाद्य इत्याह * प्रेतेति * द्वितीये तद्वदेव यज्ञदत्तदेहोपहितात्मवृत्तिज्ञानजनकमनः संयोगस्य देवदत्तदेहोपहितात्मन्यभावात्तत्र यज्ञदत्तस्य न प्रवृत्त्यादिप्राप्तिरित्याह *यज्ञदत्तेति* देवदत्तशरीरावच्छिन्नात्मनि यज्ञदत्तज्ञानजनकमनःसंयोगाभावेऽप्यन्यमनःसंयोगस्य सत्वात्तत एव यज्ञदत्तज्ञानगोचरं देवदत्तस्य प्रवृत्तिःस्यादित्याशङ्क्याह * तस्य चेति * देवदत्तादिदेहावच्छिन्नात्ममनः संयोगस्येत्यर्थः। मनःसंयोगस्य स्वजन्यज्ञानद्वारा तद्गोचर एव प्रवर्त्तकत्वादेतज्जन्यज्ञानस्य यज्ञदत्तज्ञानगोचराविषयत्वाभावेन नायं तत्र प्रवृत्तिहेतुरित्यर्थः। ननु कृतिसाध्यत्वज्ञानस्य प्रवर्त्तकत्वात्त्वमते शरीरान्तरोत्पन्नतज्ज्ञानस्य स्वसमानाधिकरणशरीरान्तरसम्बन्धिकृतिविषयत्वसम्भवात्ततः शरीरान्तरेऽपि प्रवृत्तिः स्यादिति नेत्याह * ज्ञानस्येति* प्रवर्त्तकज्ञानस्येत्यर्थः। असन्निकृष्टो यः शरीरान्तरावच्छिन्न आत्मा तद्धर्मस्तद्गता कृतिस्तदविषयत्वादित्यर्थः। मनःसन्निकर्षस्य ज्ञानद्वारा स्वाश्रयात्मप्रदेशे एव कृतिजनकत्वात् तस्या एव स्वसमानप्रदेशवृत्तिप्रवर्त्तकज्ञानविषयत्वात्प्रदेशान्तरवर्त्तिकृतेः प्रदेशान्तरवर्त्तिज्ञानजन्यत्वायोगात्सा न तद्गोचरेति नोक्तातिप्रसङ्ग इत्यर्थः। एवमेकस्यैवात्मनः स्वरूपेण सर्वसुखाद्यनुसन्धातृत्वेऽप्यवच्छेदभेदेन व्यवस्थिता प्रवृत्तिर्घटत इत्युक्तं सम्प्रत्यैकात्म्ये शरीरभेदेऽपि बालादिशरीरेणानुभूतस्य स्थविरशरीरेऽनुसन्धानवद्देवदत्तादिशरीरेणानुभूतस्य शरीरान्तरेऽप्यनुसन्धानं स्यादित्याशङ्कां निराकरोति *अत एवेति* अतःशब्दार्थमेवाह *येनेति* उभयवा-

ति· स्थितावनतिप्रसङ्गात् । ननु सर्वस्मिञ्जन्मनि मन एकमित्यत्र प्रमाणाभावात्कथं जातमात्रस्य जन्मान्तरानुभूतस्मरणमिति चेत् । न तद्भेदेऽपि प्रमाणाभावात्, संशये तु स्मरणबलादेकमिति कल्प्यतां आत्मभेदकल्पनायां गौरवात् करणगणवेष्टितस्यैवात्मनः परलोकगम-

दिसम्मतान्तःकरणैक्यतदभावाभ्यामेवोभयत्रापि देहभेदेऽपि देहान्तरानुभूतानुसन्धानाननुसन्धानव्यवस्थोपपत्तेर्गौरवादप्रयोजकत्वाच्च नात्मभेदोऽपि कल्प्य इत्यर्थः । येन मनस्युक्तनियमस्य व्यभिचारं शङ्कते * नन्विति * *प्रमाणाभावादिति * मनस आनन्त्येन जन्मान्तरेऽन्यस्य मनसः सम्भवादिति शेषः । जातमात्रस्य गोवत्सादेः स्तन्यपादौ प्रवृत्तिदर्शनात्तद्धेतोरिष्टसाधनताज्ञानस्य जन्मान्तरानुभूतेष्टोपायत्वस्मरणान्यस्यासम्भवात्तत्स्मरणे मनोन्तरजन्यत्वसम्भवात्कथमुक्तनियम इत्यर्थः । परमते बाल्यादिदेहभेदेऽप्यन्तःकरणैक्याभ्युपगमात्तद्वदेव जन्मान्तरेऽपि तदभेदोपपत्तेरुक्तनियमसिद्धिरिति परिहरति * न तद्भेद इति * देवदत्तादिदेहभेदे मनोभेददर्शनाद्भिन्नकालीनदेहभेदेऽपि मनोभेदः सम्भवतीत्याशङ्क्योभयथा सम्भवेपि बाल्याद्यनुभूतस्मरणादाविव जातमात्रस्य स्मरणेऽपि तन्मूलानुभवजनकमनोजन्यत्वमेव युक्तं तस्य क्लृप्तत्वादित्याह * संशय इति * आत्मैक्यादेव स्थविरादौ जन्मान्तरे च देहान्तरानुभूतस्मरणं नान्तःकरणैक्यादिति किं न स्यादित्याशङ्क्य तथा सत्यात्मभेदः स्मरणाभावप्रयोजको वक्तव्यः तथा च गौरवमित्युक्तमित्याह * आत्मभेदेति * जन्मान्तरेऽन्तःकरणभेदाभेदसंशयं स्वीकृत्य लाघवादभेद उक्तः सम्प्रति 'समानः सन्नुभौ लोकावनु सञ्चरति' 'तमुत्क्रामन्तं प्राणोऽनु उत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती'त्यादिना पूर्वलिङ्गपरिवेष्टितस्यैव जीवस्य लिङ्गाश्रितविद्याकर्मादिवशाद्देहान्तरप्राप्तिश्रवणात्तदभेदे न संशय इत्याह * करणगणेति * तस्यान्तःकरणाभेदस्य । नचैवं सिद्धान्ते सुषुप्तौ मनसो नष्टत्वेनाद्य-

नादिप्रतिपादकश्रुत्या तस्य सिद्धत्वाच्च। वस्तुतस्तु न बालादिशरीरं भिद्यते प्रत्यभिज्ञानात् तज्जनकादृष्टे सति तन्नाशायोगात् नाशकान्तराभावाच्च, प्रथमशरीरे क्लृप्तजनकादिव्यापाराभावात् द्वितीयादिशरीरस्य ब्राह्मण्यादेरनुत्पत्तौ जातिकुलगोत्रादिव्यवस्थाऽसम्भवात्परिमाणभेद-

ह्यस्तनवस्तुगोचरस्मरणानुपपत्तिरिति वाक्यम्। 'तदापीतः संसारव्यपदेशा ' दिति न्यायेन स्वापादावनिर्वचनीयसूक्ष्मरूपेणावस्थितस्यैव लिङ्गस्य पुनर्जाग्रदादावुद्भवस्वीकारेण स्मरणाद्यभावप्रयोजकतद्ध्वंसाभावादिति भावः। एवं बाल्याद्यवस्थासु देहभेदमङ्गीकृत्य मनस एकत्वादनुसन्धानादिव्यवस्थोपपत्तिरित्युक्तं इदानीमङ्गीकारं परित्यजति *वस्तुतस्त्विति* स एवाहं चैत्रपुत्रः स एवायं ब्राह्मण इति स्वपरप्रत्यभिज्ञादर्शनादित्यर्थः। उपपत्तितोऽपि बाल्यादिशरीरैक्यमुपपादयति * तज्जनकेति * एकस्य न युगपदनेकदेहयोगः अदर्शनादप्रयोजकत्वादसम्भवाच्च, क्रमेण च देहभेदे पूर्वपूर्वनाशे सत्येवोत्तरोत्तरोत्पत्तिर्वक्तव्या तत्र किं प्रारब्धकर्मनाशः पूर्वनाशे कारणं समवाय्यसमवाय्यन्यतरनाशो वा, नाद्यः तस्य यावज्जीवभोगसुखाद्युत्पादनाय शरीरारम्भकत्वेन तत्पूर्वं तन्नाशायोगादित्यर्थः। द्वितीयस्त्वनुपलब्धिपराहतः। न च बाल्यादिशरीरसंस्थानभेदात्तदारम्भकावयवसंयोगभेदे पूर्वसंयोगनाशः कल्प्य इति वाच्यं। सत्यपि पूर्वसंयोगेऽवयवान्तरसंयोगान्तरादेव संस्थानभेदोपपत्तेरित्याशयेनाह * नाशकान्तरेति * उत्तरदेहस्यापि प्रथमदेहे क्लृप्तकारणादेवोत्पत्तिः कारणान्तरान्न नोभयथापीत्याह * प्रथमशरीर इत्यादिना * द्वितीयादिशरीरस्येत्यस्य काकाक्षिन्यायेन पूर्वोत्तरवाक्याभ्यामन्वयः। अत्र प्रथमेऽनुपलम्भविरोधः द्वितीये विशिष्टपित्रादिजन्यत्वस्य ब्राह्मण्यादिप्रयोजकत्वाद्द्वितीयादिदेहे पित्रादिव्यापाराभावात् ब्राह्मण्यादिव्यवस्थाभावापत्तौ तदधीनव्यवहारनियमो न स्यादित्यर्थः। ननु बाल्याद्यवस्थापन्ना देहाः परस्परं भिद्यन्ते भिन्नपरिमाणत्वात्

स्यानिर्वचनीयस्याङ्गुल्यग्रहृदयाद्यवच्छिन्नशरीरे सङ्कुचितविस्तृतपटादिपरिमाणभेदवदाश्रयभेदानियतत्वाच्च, तस्मात्पररीत्याऽप्यैकात्म्ये नानुसन्धानादिप्रसङ्गः। वस्तुतस्त्ववच्छेदकभेदादवच्छिन्नभेद इति न कोपिदोषः स्थूलसूक्ष्मादिघटाद्यवच्छिन्नस्य दशविंशतिपदार्थाश्रयस्य नभसः स्वरूपकार्यभेदानुभवात् नभोमात्रस्य श्रोत्रत्वे सर्वश-

कुचलामलकबिल्ववदित्याशङ्क्य व्यभिचारेण दूषयति * परिमाणेति * एकस्मिन्नपि शरीरे मूले स्तम्भः स्थूलोऽग्रे सूक्ष्म इति वत्तत्तदवयवावच्छिन्ने युगपन्नानापरिमाणदर्शनादेकत्र जलूकादौ क्रमेण नानापरिमाणदर्शनाच्च न परिमाणभेदो द्रव्यभेदव्याप्तः । न च तत्रावयवपरिमाणानामेव नानात्वं न त्ववयविपरिमाणस्येति वाच्यम्। शरीरत्वसामानाधिकरण्यानुभवविरोधात् शिरःपाणिपादाङ्गुल्याद्यवच्छिन्नावयविन्येकविधपरिमाणान्तराननुभवादसम्भवाच्च वेष्टितप्रसारितकटादावुपविष्टोत्थितदेहादौ च परिमाणभेदानुभवस्य बाधकाभावात्, क्वचित्परिमाणेऽप्ययावद्द्रव्यभावित्वाव्याप्यवृत्तित्वयोः पार्थिवरूपादिविशेषवदुपपत्तेश्च परिमाणभेदो न द्रव्यभेदनियतं इति भावः । पराभिमतात्मन एकत्वेऽप्यन्तःकरणभेदादेवानुसन्धानादिव्यवस्थावत्तदधीनकर्तृत्वभोक्तृत्वव्यवस्थाया अप्युपपत्तेरात्मभेदो न कल्प्य इति उपसंहरति * तस्मादिति * नानुसन्धानादिप्रसङ्गोऽनुभवरहितस्येति शेषः । एवं पररीत्येह परमतेऽप्यात्मभेदं निरस्य वस्तुतत्त्वमाह * वस्तुतस्त्विति * एवं च देवदत्तादीनां शरीराद्यवच्छेदभेदेन भिन्नत्वान्नान्यानुभवादिनाऽन्यस्य स्मरणादिप्रसङ्ग इति भावः । यद्वाद्यवच्छेदकभेदं विनाऽवच्छिन्नभेदाननुभवादित्यादि तत्राह * स्थूलेति * घटभेदेन द्वे छिद्रे इत्यवच्छिन्ननभसः स्वरूपतो भेददर्शनात स्थूलसूक्ष्मघटाद्यवच्छिन्नाकाशयोर्भेदाभावे प्रेक्षावतां सूक्ष्मावकाशं परित्यज्य बहुपदार्थस्थापनाय स्थूलावकाशान्वेषणाद्यनुपपत्तेश्च तयोर्भेदोऽवश्यमभ्युपेयः स च यद्यप्य-

ब्दोपलम्भप्रसङ्गश्च तज्जातीयस्य ग्रहणेनादृष्टविशेषस्यापि सत्वाच्च, नियमेन शब्दोपलम्भस्यादृष्टसाध्यत्वे तदनुपलम्भस्य शब्दे सत्यपि सम्भवेन तदभावानुभवायोगाच्च चक्षुर्गोलकादावदर्शनेन श्रोत्रगोलकसम्बन्धस्य साक्षात्कारा-

भेदसमसत्ताको न सम्भवति एकत्राबाधितप्रत्यभिज्ञासिद्धवास्तवाभेदे सति तत्समसत्ताकतद्भेदस्य विरोधात् तथाप्याकाशधर्मिप्रतियोगिकभेदसाक्षात्कारस्य सविषयत्वाय स्थूलसूक्ष्मच्छिद्रेषु नियतसंङ्ख्याकसमानपरिमाणपदार्थस्थितिनियमाय चानिर्वचनीयः सोऽभ्युपेयः अत एव सविशेषणे हीत्यादिन्यायोऽनिर्वचनीयवादिनां प्रत्यसम्मतत्वादुपाधेर्विशेषणादन्यत्वाच्च नोदाहर्त्तव्यः। एतेनोपाधिजन्यत्वादिविकल्पासहत्वादौपाधिको भेदो दुर्निरूप इति निरस्तम्। अनिर्वचनीये निरूपणानर्हत्वस्य भूषणत्वात्। वस्तुतस्तु उपाधिसम्बन्धस्यागन्तुकत्वे तदधीनोत्पत्तिस्थितिकत्वमेव भेदस्यानिर्वचनीयस्यौपाधिकत्वं अनाद्यविद्योपाधिकजीवेशभेदस्य त्वनादितया जन्यत्वाभावादनादेरपि कार्यप्रागभावस्य परमते कारणाभावाधीनस्थितिकत्ववदुपाध्यधीनस्थितिकत्वमेवौपाधिकत्वमित्यनिर्वचनीयौपाधिकभेदादेयानिर्वचनीयसकलव्यवस्थोपपत्तिरिति भावः। उपाधिभेदव्यतिरेकेणौपाधिकभेदानङ्गीकारे बाधकमाह *नभोमात्रस्येति* कर्णवलयावच्छिन्नं नभः श्रोत्रं तच्च स्वसमवेतशब्दग्राहकमिति हि परैरुपेयते तस्य यदि तदनवच्छिन्नान्नभसो न भेदस्तदा नभोमात्रं श्रोत्रमिति तेनैकस्य तत्समवेतसर्वशब्दोपलम्भप्रसङ्ग इत्यर्थः। सर्वशब्दानां श्रोत्रसमवायेऽपि तदुपलम्भकादृष्टविशेषाभावान्न सर्वोपलम्भ इत्याशङ्क्याह * तज्जातीयस्येति * दृष्टसामग्रीसम्पादनद्वारैवतादृशकार्येऽदृष्टस्यापि योगादन्यथा पराभिमतमनआद्यसिद्धिप्रसङ्गादिति भावः। अदृष्टस्य साक्षाच्छब्दोपलम्भहेतुत्वे बाधकान्तरमाह * नियमेनेति * सत्यपि शब्द इत्यस्यानन्तरमदृष्टाभावेनेति शेषः। यत्राभावाधिकरणे तर्कितप्रतियोगिसत्वं तदनुपलब्धिविरोधितया तर्कितुं शक्यं तत्र तदनुपलब्धिरभावग्राहिकेति परैरभ्युपेयते श्रोत्रे सत्यपि शब्दसमवायेऽदृष्टाभावात्तदनुपलम्भे सति श्रोत्रे तर्कितस्यापि शब्दस्यानुपलब्धिविरोधित्वेन तर्कितुमशक्यत्वात्तदनुपलब्ध्या तत्र तदभावनिश्चयो न स्या-

हेतुत्वाच्च । संयोगतदभावाधिकरणयोरौपाधिकभेदाभावे मूलत्वाग्रत्वयोरुभयोरप्युभयसामानाधिकरण्यनियमेनैकतरावच्छेदेनैकतरानु(१)भवो न स्यात् स चावच्छिन्नभेदोऽबाधितस्वरूपप्रत्यभिज्ञानाद्वास्तवो न भवति अनिर्वचनीयस्तु परस्य नास्त्येवेति सर्वोपि व्यवहारो दत्तजला-

दित्यर्थः । ननु श्रोत्रवत्तद्गोलकसम्बन्धस्यापि शब्दोपलब्धिहेतुत्वात्सर्वशब्दस्य च तत्सम्बन्धाभावादप्रतीतिरित्याशङ्क्याह * चक्षुर्गोलकादाविति * गोलकस्य साक्षात् ग्राह्यसम्बन्धो न तद्ग्रहणहेतुः चक्षुर्गोलके तदभावेऽपि दूरस्थवस्तुदर्शनात् श्रोत्रादिगोलके साक्षाच्छब्दादिसम्बन्धासम्भवाच्च, परम्परासम्बन्धस्तु श्रोत्रगोलके सर्वशब्दसाधारण इति सर्वग्रहणं दुर्वारमिति भावः । किं च मूले वृक्षः कपिसंयोगी अग्रे नेति मूलत्वावच्छेदेनैव संयोगस्याग्रत्वावच्छेदेनैव तदभावस्यानुभवाद्विरुद्धयोस्तयोर्युगपदेकवृत्तित्वायोगाच्च मूलाग्रवृक्षयोर्भेदोऽभ्युपेयः मूलत्वाग्रत्वावच्छिन्नवृक्षभेदाभावे च तयोरुभयोरपि संयोगतदभावोभयसमानाधिकरणत्वाद्वृक्षत्वादिवदेकैकमात्राधिकरणतावच्छेदकत्वायोगात् भावाभावयोरसाङ्कर्य्यानुभवो न स्यादित्याह * संयोगेति * एवमौपाधिकभेदं प्रसाध्य तस्य सत्यत्ववादिनमेकदेशिनं प्रत्याह * स चेति* अबाधितेति च्छेदः । भेदाभेदयोर्विरुद्धयोरेकत्र सत्वायोगेनैकत्रापरस्याध्यस्तता वाच्या तत्राभेदस्य स्वरूपत्वेन निरपेक्षस्य प्रत्यभिज्ञासिद्धस्य त्रैकालिकत्वेनाधिष्ठानत्वसम्भवात्तत्राध्यस्तभेदस्य धर्म्यादिसापेक्षस्य न सत्यतेत्यर्थः । एवं स्वमतेऽनिर्वचनीयभेदेन तादृशव्यवहारव्यवस्थामुपपाद्य परमते तदनङ्गीकाराद्भावाभावादेर्व्यवस्थितत्वायोगात्तदधीनव्यवस्थितव्यवहारविप्लवः स्यादित्युपसंहरति * अनिर्वचनीयस्त्विति * नास्त्येवेत्यत्र तन्मत इति शेषः । एवं तावदेकात्मन एव सुखदुःखाद्याश्रयत्वं स्वीकृत्यावच्छेदकान्तःकरणादिभेदेन तदुपाधिकात्मभेदेन वा तदनुभवानुसन्धाना-

(१) कतरस्यानु इति खपु० पा० ।

ञ्जलिरेवान्तःकरणस्यैव सिद्धान्ते सुखाद्युपादानत्वादपि नातिप्रसङ्गः। अत एव न पदार्थत्वादिकमपि भेदसाधकं, सर्वेषामेव भेदहेतूनां 'नान्योऽतोऽस्ति द्रष्टा' 'एको देव' इत्यादिश्रुत्या 'आकाशमेकं हि यथा घटादिषु पृथग्भवेत्। तथाऽऽत्मैकोऽप्यनेकः स्याज्जलाधारेष्विवांशुमानिति' याज्ञवल्क्यवचनेन 'ममान्तरात्मा तव च ये चान्ये देहिसंज्ञिताः। सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केन चित्क्वचि' दित्यादिभारतादिवचनेन बाधश्च।

रिव्यवस्थेत्युक्तम्। सम्प्रति 'कामः सङ्कल्प' इत्यादिश्रुतेः परिशेषानुमानाच्च सुखादेर्मनोधर्मत्वे सिद्धे परमनवदाश्रयभेदेन तदुपाधिकसाक्षिभेदेन च सर्वव्यवस्था घटत इत्याह * अन्तःकरणस्यैवेति * उक्तविधया कल्पितभेदेनापि सर्वव्यवस्थोपपत्तेर्जीवो ब्रह्मप्रतियोगिकभेदवान् पदार्थत्वादित्याद्यनुमानं भेदमात्रसाधने सिद्धसाधनं वास्तवभेदसाधने चाप्रयोजकमित्याशयेनाह * अत एवेति * आगमबाधितत्वाच्च प्रतिपक्षानुमानदौर्बल्यमाह * सर्वेषामिति * याज्ञवल्कीयवचने दृष्टान्तद्वयमवच्छिन्नरूपः प्रतिबिम्बरूपो वा जीव इति मतद्वयेऽपि भेदो मिथ्यैवेत्यभिप्रायेणोपात्तमिति द्रष्टव्यम्। एवं जीवभेदसत्यत्वे प्रमाणाभावमुपपाद्य जीवस्वरूपपर्यालोचनयापि तदसम्भवं वक्तुं तस्य तावदणुत्वं निराकरोति * किं चेति * देवदत्तात्मा जीवो नाणुः तत्प्रत्यक्षविषयत्वात् घटादिवदित्यभिप्रेत्य विपक्षे बाधकमाह * सर्वाङ्गेति * गन्धवत्सुखादेरपि स्वाश्रयसम्बन्धं विनाऽप्यन्यत्र प्रसराच्छरीरान्तरव्यापितेत्याशङ्क्याह * युगपदिति * एकस्मिन्देहे अणुजीवबहुत्वे तेषामेकमत्यस्य नियमेनासम्भवाद्युगपद्विरुद्धदिक्क्रियतया देह उन्मथ्येत तदेकत्वे तु तस्य व्यवहितावयवद्वये युगपत्सम्बन्धासम्भवात् हस्तद्वयाङ्गुलिमात्रे युगपदनुभूयमानानेकप्रयत्नस्य शिरोमात्रे पादमात्रे च युगपद्व्यवस्थितसुखदुःखयोश्च सर्वजनीनानुभवो न स्यात्

किञ्च जीवो नाणुः सर्वाङ्गव्यापिसुखादेर्युगपद्विच्छिन्न देशद्वये चन्दनादेरननुभवप्रसङ्गात् । नापि विभुर्विभुत्व गगनादिवद्द्रव्यान्तरजात्यनुपपत्तेः सर्वशरीरेषु युगपद्भोगप्रसङ्गात् । न च तददृष्टारब्धशरीरे एव तस्य भोग इति वाच्यम् । अदृष्टं हि स्वाश्रय एव भोगं जनयतीति नियमः न त्वदृष्टकार्य्यमप्यदृष्टाश्रय एव स्वकार्य्यमिति देवदत्तशरीरक्रिया आत्मान्तरे संयोगादिवदपूर्वभोगोपपत्तेः देवदत्तप्रयत्नार्जितगृहादिवद-

दृष्टान्तोऽप्यनभ्युपगतिपक्ष एव 'उपलभ्याप्सु चेद्गन्धं केचिद्ब्रूयुरनैपुणाः। पृथिव्यामेव तं विद्यादपो वायुं च संश्रित' मितिन्यायमूलबादरायणवचनाद्गन्धस्य जलादावाश्रयानुवृत्तिकल्पनवदन्यत्रापि तत्कल्पनादिति भावः । एवं जीवस्य ब्रह्मात्मतां विना स्वतो विभुत्वमप्यनुपपन्नमित्याह * नापीति * विभुत्वस्य द्रव्यत्वावान्तरजात्यनाश्रयत्वेन गगनादौ व्याप्तिदर्शनाज्जीवस्यापि विभुत्वे तदभावप्रसङ्गान्न स्वतो विभुत्वमिति ब्रह्मात्मनैव तद्वक्तव्य तथा च मदिष्टसिद्धिरित्यर्थः । किं चैकात्म्यवादे भोगसाङ्कर्य्यं परिहृतमेव अनन्तविश्वात्मवादे तु सर्वेषां सर्वे भोगाः स्युरिति भोगसाङ्कर्य्यं दुष्परिहरमित्याह * सर्वशरीरेति * नन्वेकैकस्य सर्वशरीरसंयोगेऽपि तत्तददृष्टारब्धे शरीरे तस्य तत्तद्भोगनियमान्नातिप्रसङ्ग इति नेत्याह * न च तददृष्टेति * एकैकदेहस्यैकैकात्ममात्रादृष्टारब्धत्वमङ्गीकृत्य तस्य देहस्य स्वारम्भकादृष्टाश्रयजीव एव भोगहेतुत्वनियमो न युक्त इत्याह * अदृष्टं हीति * स्वकार्य्यमित्यत्र जनयतीत्यनुषङ्ग इतीत्यत्र नियमः इत्यनुषङ्गः । तत्र हेतु * देवदत्तेति * संयोगादिवदिति * तत्क्रियाश्रयशरीरसंयोगादिवदित्यर्थः । विभागादिरादिपदार्थः । * अपूर्वभोगोपपत्तेरिति * देवदत्तशरीरेणात्मान्तरगतादृष्टफलभोगोपपत्तेरित्यर्थः । देवदत्तशरीरगततत्तत्तीर्थस्नानादिक्रिय-

न्यस्यापि तत्र स्वादृष्टाद्भोगसम्भवान्मृतशरीरेऽपि प्र-
सङ्गाच्च । प्रदेशान्तरवर्तिमनःसंयोगादयुगपद्दशाङ्गु-
ल्यवच्छेदेन दशप्रयत्नवन्मनुष्यशरीरावच्छिन्ना त्मवृत्त्य-
दृष्टादन्यत्र भोगवन्मृतशरीरेऽपि तत्सम्भवात् । पुत्रादि-
शरीरजीवनयोः पित्राद्यदृष्टायत्तत्वाच्च, प्रतिशरीरं भिन्न-

याऽऽत्मान्तरेऽप्यपूर्वभोगयोरुपपत्तेरिति वार्थः । तदुक्तमदृष्टानियमा-
दिति' । स्वभोगाय देवदत्तोपार्जितदेहेऽन्यस्य भोगादिर्न युक्त इ-
त्याद्यव्याख्यामाशङ्क्याह *देवदत्तेति* देहे तददृष्टारब्धत्वस्य तद्भो-
गनियामकत्वमङ्गीकृत्याप्याह *मृतशरीर इति* न च तत्र मनः सं-
योगादिकारणाभावादेव न भोग इति वाच्यम् । मरणानन्तरभावि-
यातनादेहादौ तत्सत्वात् । एवमपि प्रदेशान्तरवर्त्तिहेतोर्न प्र-
देशान्तरे फलोदय इत्याशङ्क्याह * प्रदेशान्तरेति * हृदया-
दिप्रदेशवृत्त्यणुमनसः आत्मसंयोगादित्यर्थः । एवमेकैकदेशस्यै-
कैकादृष्टारब्धत्वमङ्गीकृत्य तस्य भोगनियमं प्रत्यप्रयोजकत्वमु-
क्त्वाऽङ्गीकारं परित्यजति * पुत्रादीति * प्रजाकामो यजे-
त पशुकामो यजेतेत्यादिशास्त्रात्पुत्रादिदेहस्य पित्राद्यदृष्टेनापि ज-
न्यत्वावगमात् पुत्रपश्वादिदेहेष्वपि विभोः पित्राद्यात्मनो भोगः
स्यात् पुत्रादेश्च तत्र भोगो न स्यात् तद्देहस्य स्वादृष्टमात्रारब्धत्वा-
भावात् । वस्तुतस्तु विभ्वात्मनानात्वमते सर्वात्मसंयुक्तशरीरादिग-
तक्रियाजनितादृष्टस्य तद्धेतुप्रयत्नादेर्वा नियामकाभावादेकात्ममात्र-
वृत्तित्वानुपपत्तिः । न च तन्मात्राश्रितप्राक्तनादृष्टारब्धदेहादिजनि-
तप्रयत्नादि तस्यैवेति नियमोपपत्तिरिति वाच्यम् । पुत्रादिदेहे
तन्मात्रादृष्टजन्यत्वासम्भवस्योक्तत्वात्प्राक्तनादृष्टमतदीयमेवेत्यत्रापि
नियामकाभावाच्च । न च तदीयदेहादृष्टयोः प्रवाहानादित्वात्सर्वत्र
नियमोपपत्तिरिति वाच्यम् । तयोः क्वचिदपि कार्यकारणभावनियम-
स्याक्लृप्तत्वेनान्धपरम्परादोषापातात् 'रमणीयचरणा रमणीयां यो-
निमापद्यन्त' इत्यादिश्रुतिरपि 'यथाह्ययं ज्योतिरात्मा विवस्वान्' 'एक
एव हि भूतात्मेति' श्रुत्यनुरोधेनोपाधिपरिच्छिन्नजीवेष्वन्यतः प्राप्तदे-

स्यात्मनो विभुत्वे प्रमाणाभावाच्चाहमिहैवास्मि सदने जानान इति तत्परिच्छेदस्यैवाबाधितानुभवसिद्धत्वात्सर्वदा स्पर्शरहितद्रव्यत्वादित्यादिहेतूनां प्रत्यक्षबाधाददृष्टस्याश्रयसम्बन्धं विनैव स्वमहिम्ना शब्दवत्कार्य्यान्त-

त्वनुवादेन फलनियमविधिपरा तस्माद्भिन्नात्मस्वदृष्टाधीना भोगव्यवस्थेति मनोरथमात्रमिति भावः । एवं भिन्नात्मनां विभुत्वेऽनुपपत्तिमुक्त्वा तत्र प्रमाणमपि नेत्याह *प्रति शरीरमिति* किं तत्र प्रत्यक्षं प्रमाणमुतानुमानं नाद्यः, तेन जीवे परिच्छेदस्यैवानुभवादित्याह *अहमिहैवेति* न चायमनुभवो देहादिविषय इति शङ्क्यं तस्य प्राङ्निरस्तत्वादित्यभिप्रेत्याबाधितेत्युक्तम् । जीवो विभुः सर्वदा स्पर्शरहितद्रव्यत्वान्नित्यत्वान्द्रियग्राह्य (१) गुणाश्रयत्वाद्वा स्वद्वितीयक्षणनियतस्वविनाशसामग्रीकविशेषगुणवत्त्वाद्वा आकाशवदित्यनुमानं तत्र मानमिति द्वितीयं कल्पं निराकरोति *सर्वदेति* प्रत्यक्षमहमिहैवेत्यनुभवः । न च प्रत्यक्षस्य भ्रमत्वान्नानुमानबाधकतेति वाच्यम् । बाधकाभावेन तस्य भ्रमत्वासिद्धेः । न चोक्तानुमानं बाधकं परस्पराश्रयापत्तेः विपक्षे बाधकाभावेनाप्रयोजकत्वाच्च, आद्यहेतोश्च केषांचिन्मते मनसि तमसि च व्यभिचाराद्द्वितीयतृतीययोस्त्वस्मिन्मते पक्षदृष्टान्तयोरसिद्धत्वाच्चेति भावः । नन्वस्मदादिभोग्यवस्तुनो देशान्तरादावुत्पद्यमानस्यास्मददृष्टजन्यत्वाददृष्टस्य च स्वाश्रयानुवृत्तिं विना देशान्तरीयेण स्वतः सम्बन्धायोगात् सम्बन्धाभावे वाऽदृष्टस्य जनकत्वायोगात्तदाश्रयस्याविभुत्वे तस्य देशान्तरादौ कार्य्यजनकत्वानुपपत्तिरिति नेत्याह*अदृष्टस्येति*परमते विभोरप्यात्मनो विभुनाऽऽकाशेन सम्बन्धाभावेपि स्वरूपसम्बन्धादेवात्मगतादृष्टाद्यथाऽऽकाशे शब्दादि जायते तद्वत्परिच्छिन्नात्मगतादृष्टादपि स्वरूपसम्बन्धमहिम्नैव देशान्तरादौ कार्य्यजन्म सम्भवति न चाकाशेऽप्यात्मसंयुक्तभेर्य्यादिद्वारा परम्परया ऽदृष्टप्रत्यासत्तिरस्तीति वाच्यम् । परिच्छिन्नात्मसंयुक्ताकाशादिद्वारापि सा

(१) गुणः सुखादिः ।

रेपि जनकत्वसम्भवाच्च, कायव्यूहशास्त्रस्य प्रत्यक्षसिद्धपरिच्छेदानुरोधेन परमतेऽभेदश्रुतेरिवान्यार्थत्वात् तस्माज्जीवाणुत्वविभुत्वयोरयोगात्स्वतो मध्यमपरिमाणत्वेऽनित्यत्वापत्तेः सर्वात्मनो ब्रह्मणः श्रुतिस्मृत्यादिसिद्ध औपाधिकप्रदेश एव जीव इति न जीवानामपि भेदः। एतेनेदं निरस्तं क्लृप्तप्रमाणासम्भवे हि प्रमाणान्तरं कल्पनीयं न त्वनुभवसिद्धभेदपरित्याग इति, श्रुतिविरोधेऽभिन्नेऽपि भेदसम्पादकतया क्लृप्ताज्ञाने च सति

सुलभेति मुधा विभुत्वोपगम इति भावः। जीवस्याविभुत्वे 'स एकधा भवति त्रिधा भवति पञ्चधे'त्यादिश्रुते' 'रात्मनो वै शरीराणि बहूनि भरतर्षभ। योगी कुर्य्याद्बलं प्राप्य कैश्चित्सर्वां महीं चरेत्। प्राप्नुयाद्विषयान्कैश्चित्कैश्चिदुग्रं तपश्चरेत्। सङ्क्षिपेत्तु पुनस्तानि सूर्य्यो रश्मिगणानिवे'ति' स्मृतेश्च युगपदनेकदेहपरिग्रहविषययोः का गतिरित्याशङ्क्य तयोर्भूमविद्यायोगविधिस्तुत्यर्थतया 'विरोधे गुणवाद' इति न्यायेन विदुषः स्वच्छन्दतामात्रपरत्वस्य वा सर्वात्मब्रह्मरूपेणोपासनापरत्वस्य वा त्वन्मते न्याय्यत्वादित्यभिप्रेत्याह * कायव्यूहेति * अभेदश्रुतेः तत्त्वमादिश्रुतेः। एवं जीवानां स्वतो विभुत्वे साधकाभावं बाधकं चोक्त्वा स्वतो मध्यमपरिमाणत्वे सावयवत्वादनित्यत्वप्रसङ्गेन तन्निराकुर्वन् कल्पितभेदेन ब्रह्मणोंशा एव जीवास्ततस्तद्भेदोऽपि न वास्तव इत्युपसंहरति * तस्मादिति * जीवपरभेदादौ प्रसिद्धप्रमाणाभावेपि समस्तमहाजनसिद्धतत्प्रतीतिनिर्वाहाय प्रमाणान्तरं कल्प्यमिति ततस्तस्य सत्यत्वसिद्धिरित्याशङ्क्याह * एतेनेति * तद्विवृणोति * श्रुतिविरोधइति * मानान्तराविरोधे सत्येव हि कल्पना प्रवर्त्तते अन्यथाऽतिप्रसङ्गात् महाजनप्रसिद्धेश्च देहात्मप्रत्ययवदुपपत्तेर्भेदप्रतीतिमात्रस्य प्रबलाभेदश्रुतिबाधितविषयत्वेन भ्रमत्वे सति तत्कारणतया क्लृप्ताज्ञानत एव त-

(१)तदयोगात् भेदानुभवस्य देहात्माभेदप्रत्ययवद्यावद्बाधं प्रामाण्योपपत्तेः तस्मान्नास्ति भेदे प्रमाणम् । किं च विभागः पृथक्त्वं वा न जीवेश्वरभेदः तयोर्धर्मिद्वयप्रत्यक्षाधीनप्रत्यक्षत्वात् प्रत्यक्षातिरिक्तं च भेदे न किं चित्प्रमाणमित्युक्तम् । नापि वैलक्षण्यं भेदः विविधलक्षण-

दुपपत्तेश्च न मानान्तरं कल्प्यमित्यर्थः । भेदानुभवस्य भ्रमत्वे तदधीनलौकिकवैदिकव्यवहारा विफलाः स्युरित्याशङ्क्य तस्य यावद्बाधं व्यावहारिकप्रामाण्यान्न फलविसंवाद इति दृष्टान्तमाह * भेदानुभवस्येति * तदुक्तं देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः । लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयादिति' आत्मनिश्चयात् असंसार्यात्मतत्त्वनिश्चयपर्यन्तमित्यर्थः । एवं मानाभावादयुक्तेश्चेति प्राचीनश्लोकोक्तमानाभावं प्रसाध्य निगमयति * तस्मादिति * इदानीमयुक्तेश्चेत्येतद्विवृणोति * किं चेति * विभक्तादौ सर्वत्र नियमेन भेदव्यवहारदर्शनाद्विभागादेरपि परमते भेदत्वसम्भवाज्जीवेशादिभेदे सत्यत्वं वदन् प्रष्टव्यः किं सर्वत्र विभाग एव भेदः पृथक्त्वं वा वैलक्षण्यं वा अन्योन्याभावो वा वस्तुस्वरूपं वेति, तत्र न प्रथमौ सम्भवतः तयोर्गुणादावसम्भवात् जीवेशयोर्जीवानां च विभुत्वेन विभागासम्भवाच्चेत्यभिप्रेत्याह * विभाग इति * किं च तत्र किं प्रत्यक्षं प्रमाणमन्यद्वा न प्रथम इत्याह * तयोरिति * तयोर्विभागपृथक्त्वयोः। तथा चेश्वरस्याप्रत्यक्षत्वात्तन्निरूपितयोः तयोः प्रत्यक्षत्वायोग इत्यर्थः । द्वितीये प्रागुक्त एव तन्निरासो द्रष्टव्य इत्याह * प्रत्यक्षातिरिक्तमिति * तृतीयं निरस्यति * नापीति * किं विविधलक्षणवत्त्वं वैलक्षण्यं विरुद्धलक्षणवत्त्वं वा, न प्रथमः एकस्मिन्नपि पृथिव्यादावनेकविशेषगुणवति प्रत्येकमनेकलक्षणसत्त्वादित्याह * विविधेति * न द्वितीय एकाधिकरणकत्वाभावलक्षणस्य नियमेन भिन्नाधिकरणकत्वलक्षणस्य वा विरोधस्य तज्ज्ञानस्य च भे-

( १ ) तदयोगात्—मानान्तरकल्पनायोगादित्यर्थः ।

वत्वस्यैकस्मिन्नपि सत्वात्, विरुद्धलक्षणवत्वस्यातिरिक्त-भेदतद्ग्रहाधीनत्वादहङ्कारातिरिक्ते आत्मनि ब्रह्मविलक्षणत्वे प्रमाणाभावाच्च, अहङ्कारश्च नात्मेत्युक्तं तस्मादन्योन्याभावः स्वरूपं वा भेदो वाच्यः तत्र न तावदन्योन्याभावः सम्भवति तत्प्रतियोगिप्रमाणयोरसम्भवात् तत्र परमते न घटादिः प्रतियोगी अभेदविरोधिभेदस्य तदभावतया तदयोगात्। न च घटादिरेवाभेदः तदधिक-

दान्तरतज्ज्ञानापेक्षत्वादन्योन्याश्रयात् । न च परस्परात्यन्ताभाव-नैयत्यं धर्माणां विरोध इति वाच्यम् । तस्यापि धर्मभेदाधीनत्वात्त-स्मान्नायं भेदो न वा एतज्ज्ञानं भेदज्ञानमित्याशयेनाह * विरुद्धेति * किं च ब्रह्मवैलक्षण्यं चेदात्मनि ततो भेदस्तत्किमहङ्कारातिरिक्तात्म-न्यस्तीत्युच्यतेऽहङ्काररूपे वा, आद्येऽपि किं वस्तुतस्तदुत तन्मात्रं, नाद्यः धर्मिग्राहकमानेनाहङ्कारातिरिक्तात्मनः कूटस्थचिन्मात्रतया सिद्धस्य वास्तवब्रह्मवैलक्षण्याभावात् । द्वितीयस्त्वयुक्तः प्रतिबिम्बादौ व्यभिचारात्। नापि प्रथमद्वितीयः दृश्यत्वादिनाऽहङ्कारानात्मत्व-स्य साधितत्वादित्याह* अहङ्कारातिरिक्तेत्यादिना * एवं परेषां काशकुशावलम्बनसमं पक्षत्रयं निरस्य तत्सम्मतं चतुर्थपञ्चमपक्षद्वयं परिशेषयित्वा चतुर्थं तावदसम्भवेन दूषयति*तस्मादित्यादिना*ननु भूतलादि घटादि नेति प्रतीतेर्घटाद्येव प्रतियोगीत्याशङ्क्याह*तत्रेति * किं घटाद्येव तत्प्रतियोगि तत्तादात्म्यं वा नाद्यः भेदस्याभेदविरोधितया तदभावत्वेन घटप्रतियोगिकत्वायोगादित्यर्थः। घटस्यैव तत्प्रतियोग्यभेदत्वान्नोक्तदोष इत्याशङ्क्याह * न च घटादिरिति * अभावप्रतियोगिनोर्विरोधाभावे तदभावानुपपत्तेस्तयोर्विरोधो वाच्यः स च तयोरेकदैकत्रावस्थानायोग्यत्वमेव तथा च घटाधिकरणे तत्प्रतियोगिकाभावरूपतद्भेदायोगात् तयोरभेदः स्यात् । न चान्योन्याभावातिरिक्ताभावस्यैव प्रतियोगिनोक्तविरोध इति वाच्यम् । लाघवेनाभावत्वस्यैव तत्प्रयोजकत्वात् पक्षादन्यत्रैवायं नियम इति

रणे तद्भेदाभावप्रसङ्गात् । तादात्म्यं भेदप्रतियोगि इति चेन्नतावत्तादात्म्यं घटस्वरूपातिरिक्तं तत्र न तावत् घट इति बुद्धिः प्रमाणं घटघटत्वतद्वैशिष्ट्याद‍न्यस्य तदविषयत्वात् । नापि घटो घटाऽभिन्न इति बुद्धिस्तद्विषया, तस्या भेदाभावविषयत्वात् । स एवतादात्म्यमिति चेत्तर्हि भेदतादात्म्ययोरन्योन्यज्ञानाधीनज्ञानतया नैकमप्यनुभूयेत । न च घटाभावाभावो घट इव भेदाभावोऽप्यभावोपस्थितिं विनैव ज्ञायत इति वाच्यम् । घटे घटत्वस्येव विधिरूपस्य भेदाभावेऽन्यस्याभावात् । न च तत्रापि क-

सर्वत्र वक्तुं शक्यत्वेनानुमानकथोच्छेदप्रसङ्गाच्च वक्ष्यमाणविधया प्रतियोग्याद्यनिरूपणेनान्योन्याभावस्याद्याप्यसिद्धत्वाच्चेति भावः । द्वितीयं शङ्कते * तादात्म्यमिति * तदपि घटादिस्वरूपमेव तदतिरिक्तं वा, नाद्यः प्रागुक्तदोषानपायादित्यभिप्रेत्य द्वितीयं निराकरोति *नतावदिति*तत्र प्रमाणाभावं हेतुमाह*तत्रेति * घटातिरिक्ततादात्म्ये घट इत्यनुभव एव मानं घटादयमभिन्न इत्यनुभवो वा, नाद्य इत्युक्त्वा द्वितीयमपवदति*नापीति*घटतादात्म्यं किं तद्भेदाभावादतिरिक्तं स एव वा, आद्येऽभिन्न इति बुद्धेर्भेदाभावगोचराया न तादात्म्यसाधकतेत्याह * तस्या इति * द्वितीयं शङ्कते * स एवेति * तत्र किं भेदाभाव एव तादात्म्यमुत भावस्वभावमपि, आद्ये भेदस्याप्यभेदाभावमात्रस्वभावतयोभयज्ञानस्याप्यन्योन्यज्ञानाधीनतापत्तावेकोपि न सिद्ध्येत् परैर्भावाभावयोः परस्परविरहात्मत्वस्यानभ्युपेतत्वाच्चेत्याशयेनाह * तर्हीति * उक्तदोषं परिहरन् द्वितीयपक्षमाशङ्क्य निराकरोति * न च घटाभावेत्यादिना * अभेदस्य भावस्वभावत्वे बाधकाभावात्सोऽप्युपेय इति कथं तदभाव इत्याशङ्क्य तत्साधकस्याप्यभावान्नैवमित्याह * न च तत्रापीत्यादिना * पृथक्

श्चिद्धर्मोऽस्त्विति वाच्यम् । अभिन्न इति बुद्ध्या भेदविरहाविषयया(१) तदसिद्धेः तदन्यस्य तद्विषयज्ञानस्यादर्शनाच्च । न च घटबुद्धे(२)रेव तादात्म्यमपि बाधकाभावाद्विषयोऽस्त्विति वाच्यम् । घटत्वस्मृतिजन्यघटज्ञाने तस्य प्रकारतयाभानायोगात् औपाधिकधर्मस्य निर्विकल्पकायोगात् घटत्वस्मरणजन्यघटज्ञानसमानाकारज्ञानस्य त-

घटतादात्म्यज्ञानादर्शनेपि तस्य घटज्ञान एव प्रकारतया सिद्धिरित्याशङ्क्याह * न च घट इति * किं सर्वस्मिन् घटसविकल्पके स प्रकार उत क्वचिदेव स्वविषयनिर्विकल्पजन्ये नाद्य इत्याह * घटत्वेति * भानायोगादिति * तस्य प्रागनुपस्थिततया प्रकारत्वायोगादित्यर्थः । द्वितीये घटे पृथुबुध्नोदराकारवत्त्किं सखण्डं तादात्म्यमखण्डं वा आद्ये आह * औपाधिकेति * उपाधिर्निरूपकस्तद्घटितस्वरूपस्य निर्विकल्पकायोगादित्यर्थः । निर्विकल्पकाविषयस्यापि सखण्डस्य सविकल्पकविषयत्वं घटते विशेषणज्ञानस्य विशिष्टज्ञानाहेतुत्वादिति मन्वानं प्रति तद्विशिष्टज्ञानमेवायुक्तमित्याह * घटत्वस्मरणेति * न च घटत्वस्मरणजन्यघटज्ञानस्याप्यस्मिन्मते तादात्म्यप्रकारत्वसम्भवान्नोक्तदोष इति वाच्यम् । तथा सत्यतिप्रसङ्गात् कल्पकाभावेन निर्विकल्पकस्याप्यसिद्धिप्रसङ्गाच्चेति घटत्वस्मरणजन्यज्ञानं न तादात्म्यप्रकारकमिति भावः । तद्विषयनिर्विकल्पकं तदधीनतत्प्रकारकसविकल्पकान्तरं चाङ्गीकृत्यापि घटत्वमात्रस्मरणजन्यघटसविकल्पकाधीनभेदानुभवे घटतादात्म्याभावरूपभेदो न प्रकाशते तत्प्रतियोगिभूततादात्म्यस्योक्तघटज्ञानाविषयत्वेन प्रतियोगिज्ञानाभावात् । न चैतदेव ज्ञानं तादात्म्यनिर्विकल्पकजन्यमपीति वाच्यम् । निर्विकल्पस्मरणयोर्यौगपद्यायोगात् तयोः क्रमिकत्वे च प्रथमोपस्थितस्यैव सामग्रीबलाद्विशिष्टज्ञानं स्या-

(१) विषयतयेति खपु० पा० ।

(२) घट इति बुद्धेरिति खपु० पा० ।

दन्यस्यापि तदधिकाविषयत्वायोगात् घटत्वस्मरणजन्यघटज्ञानाधीनभेदज्ञानस्य तदभावाविषयत्वप्रसङ्गाच्च । अत एव तादात्म्यमप्यखण्डः कश्चिद्धर्मो घटादिनिर्विकल्पकविषय इति घटप्रत्यक्षे तदपि प्रकारतया प्रतीयत इति प्रत्युक्तम् । शाब्दघटज्ञानाद्भेदज्ञानाभावप्रसङ्गात् तस्य घटशब्दादनुपस्थितेः जात्यतिरिक्ताखण्डधर्माभ्युपगमे तेनैव सर्वव्यवहारोपपत्तौ जात्यभावप्रसङ्गाच्च । अनित्यस्याखण्डस्य रूपादावयोगात् घटान्यस्याखण्डधर्म-

दिति नोक्तप्रकारसम्भव इत्याशयेनाह * घटत्वस्मरणेति * तादात्म्यस्याखण्डधर्मत्वपक्षे दोषमाह * अत एवेति * उक्तदोषादेवेत्यर्थः । दोषान्तरमाह * शाब्देति * तस्य तादात्म्यस्य । घटादिपदस्य घटत्वादिजात्यालिङ्गितव्यक्तिमात्रबोधकत्वे नायं घट इत्यादिशब्दात् घटादिगततादात्म्याप्रतीतेस्तदभावात्मकभेदावगमो न स्यादित्यर्थः । किं च स्तम्भः कुम्भाद्भिन्न इत्यादिरूपेण प्रतीयमानभेदप्रतियोगितादात्म्यं सर्वकुम्भेष्वेकमनेकं वा, आद्ये पटादावप्येवमेव तत्तत्तादात्म्यस्यैक्यप्रसङ्गेन तेनैव तत्तदनुगतव्यवहारोपपत्तौ प्रमाणाभावात्तदतिरिक्तजात्यभ्युपगमः परेषां मुधा स्यादित्याह * जात्यतिरिक्तेति * द्वितीये प्रतिकार्य्यं भिन्नस्य तस्य कार्य्यात् प्राक्सत्वे मानाभावात्तज्जन्यता वाच्या तथा च गुणादिषु जन्यधर्मानाश्रयेषु तादात्म्यायोगेन तद्भेदो न स्यात् तादात्म्यकार्य्यानवस्था च दुर्वारा स्यादित्यभिप्रेत्याह * अनित्यस्येति * प्रस्तावाभिप्रायेणाखण्डस्येत्युक्तम् । किं च घटतादात्म्यान्योन्याभावः किं घटभेदस्तदत्यन्ताभावो वा, आद्ये तस्य घटेऽपि सत्वात् घटोऽपि स्वस्माद्भिन्नः स्यात् द्वितीये घटान्यतादात्म्यात्यन्ताभावो घटभेदो न स्यात् तदन्यप्रतियोगिकत्वात् पटत्वाभाववत् न स्याच्च क्वाप्यत्यन्ताभावातिरिक्तोऽन्योन्याभाव इत्याशयेनाह * घटान्यस्येति * समानतयेत्यत्र घटभिन्नत्वं समानता । विभागादिवदे-

स्य घटत्वादिसमानतया तादात्म्यात्यन्ताभावस्य घटाद्यप्रतियोगितया तद्भेदत्वानुपपत्तेश्च न ह्यन्याभावोऽन्यप्रतियोगिकः। एतेन घटत्वात्यन्ताभाव एव भेद इति निरस्तम्। तस्यैव स्वाभावानधिकरणघटभेदानाधारत्वेन घटत्वाधारत्वप्रसङ्गाच्च अभावस्येव भावस्यापि विरुद्धत्वेन स्वाभावानधिकरणत्वात्। न च विरुद्धयोरैकाधिकरण्यमेव विरुद्धं न त्वाधाराधेयत्वमिति वाच्यम्।

कस्यानेकप्रतियोगिकत्वं किं न स्यादित्यत आह * न हीति * भिन्नाकारानेकप्रतियोगिकत्वमेकस्याभावस्य न युक्तं तादृशप्रतियोगिभेदे परैरभावभेदस्वीकारादित्यर्थः। घटत्वमेव घटतादात्म्यं तदत्यन्ताभाव एव स्तम्भादौ घटाद्भेद इति कस्य चित्कल्पनां निराकरोति * एतेनेति * अन्याभावं प्रत्यन्यस्य प्रतियोगित्वायोगेनेत्यर्थः। दोषान्तरमाह * तस्यैवेति * घटत्वात्यन्ताभावस्यैव घटभेदत्वे घटत्व वक्ष्यमाणविधया स्वात्यन्ताभावासम्भवेन तस्य घटाद्भेदायोगादभेदः स्यादेवं घटत्वात्यन्ताभावस्यापि घटाद्भेदो न स्यात्तस्य स्ववृत्तित्वायोगादित्यपि द्रष्टव्यम्। अत्यन्ताभावस्य प्रतियोगिवृत्तित्वे बाधकाभावात् घटत्वस्य स्वाभावानधिकरणत्वमसिद्धमित्याशङ्क्याह * अभावस्येति * भावाभावयोः परस्परविरहात्मत्वेन विरुद्धत्वादभावस्य स्वाभावाश्रयत्ववद्भावस्यापि स्वाभावाश्रयत्वं विरुद्धत्वादयुक्तमित्यर्थः। ननु परस्परविरहात्मनोर्भावाभावयोरैकाधिकरण्यमेव विरुद्धं न त्वाधाराधेयभाव इत्याशङ्क्याह * न च विरुद्धयोरिति * अव्याप्यवृत्तित्वभावसामानाधिकरण्यस्वीकाराद्भावाभावयोस्तद्विरुद्धमिति परैर्न शक्यं वक्तुमान चावच्छेदभेदेन तदविरुद्धमिति वाच्यम्। लाघवेनैकाधिकरणकत्वस्यैव विरोधप्रयोजकत्वापत्ताववच्छेदभेदस्याकिञ्चित्करत्वादणुसंयोगादाववच्छेदकभेदस्यापि दुर्निरूपत्वाच्च तस्माद्भावाभावयोः परस्परात्मत्वायोग्यत्वं वा परस्पराश्रयत्वायोग्यत्वं वा विरोधोऽभ्युपेयः। किं चाभावस्य भावेन

अभावे तदभावस्यापि क्लृप्तत्वात् । किं चाभावाधिकरणत्वयोग्यस्य भूतलस्य घटाधारतादशायां तदभावानाधारत्वं तदनधिकरणत्वयोग्यघटाधारत्वप्रयुक्तमेव । न चैवं घटे घटो नास्तीति प्रतीतिर्न स्यादिति वाच्यम् । अभाव इव तद्बुद्धेराधारत्वांशेऽप्रमात्वात् घटबुद्धिविषये घटत्वाधिकरणे तदभावविषयतयाऽभावान्तरविषयतया वा प्रतीत्युपपत्तेश्च भूतले घटो नास्तीति बुद्धिस्तु बाधका-

लाघवादभावत्वप्रयुक्ततदाश्रयत्वायोग्यत्वरूपविरोधस्य परमतेऽपि क्लृप्तत्वाद्भावस्यापि तदभावात्मनोऽभावाश्रयत्वायोग्यत्वमेव तेन विरोधोऽभ्युपेयः ततश्च नाभावाश्रयो भाव इत्यभिप्रेत्याह * अभाव इति * अपिरवधारणे सामानाधिकरण्यव्यावृत्त्यर्थः सिद्धान्तिमतेन समुच्चये वा । इतोऽपि भावस्याभावाश्रयत्वयोग्यता नेत्याह * किं चेति * घटसंसर्गात्प्राक् भूतले स्वतो विद्यमानस्य तदभावस्य तत्संसर्गदशायामपि नाशगमनयोरयोगात् तस्य स्वरूपेण सत्त्वेपि तदा तदनाधारत्वं घटसंसर्गौपाधिकमेवेति घटे स्वाभावानाधारत्वं स्वाभाविकमभ्युपेयं इतरथा तस्य तदुपाधिकत्वानुपपत्ते रौपाधिकस्यापि कर्णवलयावच्छिन्नभावलयवदर्थक्रियासमर्थत्वाद्घटवति तदभावप्रतीतेर्भ्रमत्वस्याप्युपपत्तिरिति भावः । अभावस्य प्रतियोग्यवृत्तित्वे घटे घटो नेति प्रतीत्यनुपपत्तिरित्याशङ्क्य स्वस्य स्ववृत्तित्वायोगात् यथा घटाभावे घटो नेति प्रतीतिराधाराधेयभावांशे भ्रमत्वमेवमुक्तबाधकेन घटे स्वाभावाधारत्वायोगादनुभूयमानतद्रूपाधिवृत्तिघटाभावाधारत्वस्य तत्तादात्म्यापन्नघटांशसंसर्गमात्रप्रतीतेर्भ्रमत्वमित्यभिप्रेत्याह * न चैवं घट इति * तत्प्रमात्वमङ्गीकृत्याप्याह * घटबुद्धीति * अत्र हि घट इति धीगोचरे तदभावो भासते तथा च यथा शुक्ले पटो नास्तीति शौक्ल्य एव शुक्लतन्तुवृत्तिपटाभावः प्रतीयते एवं घटधीगोचरे घटत्वे घटाभावविषयतया घटे घटो नेति बुद्धेः प्रमात्वोपपत्तिर्घटान्तराभावविषयतया वेत्यर्थः । तर्हि भूतले

भावात् घटाभावविषया। नचैवं तत्र घटसत्वप्रसङ्गः, घटाभावानधिकरणाभाव इव तत्रापि तदभावाभावेपि तदनधिकरणत्वोपपत्तेः उभयाधिकरणत्वयोग्य एवान्यतराभावेऽन्यतरविधिनियमात् । अपि च घटत्वमिह नास्ति नायं घट इति प्रतीत्योरवैषम्यप्रसङ्गः। किं च घटत्वात्यन्ताभावः पटाधिकरणकोऽपि न पटधर्मिकघटतादात्म्य-

घटो नेत्यादिबुद्धेरपि भूतलादौ घटाभावविषयत्वोपपत्तेर्भूतलादौ घटाभावो न स्यादित्याशङ्क्याह * भूतल इति * घटस्य घटाभावानधिकरणत्वे घटाधिकरणत्वं स्यादभावानधिकरणस्य प्रतियोग्यधिकरणत्वनियमादित्याशङ्क्य घटाभाव एव व्यभिचारान्नैवमित्याह * न चैवमित्यादिना *न च घटाभावेपि घटाभावोऽस्तीति वाच्यम् । घटाभावान्तराभावात् आधाराधेयभावस्य भेदापेक्षत्वेन स्वस्य स्ववृत्तित्वायोगाच्च प्रमेयत्वादावपि स्ववृत्तित्वासम्प्रतिपत्तेरिति भावः। ननु नित्यत्वानित्यत्वादौ भावाभावयोरन्यतरनिषेधेऽन्यतरविधेर्नान्तरीयकत्वनियमदर्शनात् घटादेः कथमुभयानाश्रयत्वमित्याशङ्क्य नित्यत्व एव स्वस्वाभावयोरुभयोरप्यभावादुभयोरन्यतराधिकरणत्वयोग्य एवायं नियम इत्याह * उभयेति * अभावस्य प्रतियोग्यवृत्तित्वं सुरेश्वराचार्यैरप्युक्तं 'घटाभावो विरोधित्वान्न घटेऽर्थान्तरोऽपि न । अघट्यर्थतया तस्माद्विकल्पोऽयं न वस्तुग,' इति । एवं घटत्वात्यन्ताभावस्य घटभेदरूपत्वे घटत्वे तदसम्भवेन तस्य घटाद्भेदो नस्यादित्युक्तं सम्प्रति घटभेदघटत्वात्यन्ताभावयोरेकत्वे विषयभेदाभावात्तज्ज्ञानयोराकारभेदो न स्यादित्याह * अपि चेति *किं च घटत्वात्यन्ताभावः पटे वर्त्तमानोपि किं पटधर्मिकघटाभेदविरोधित्वात्तद्भेद इत्युच्यते उत घटधर्मिकतदभेदविरोधित्वान्नाद्यः पटे घटाभेदे सत्यपि वक्ष्यमाणविधया घटत्वाभावसम्भवेन तदविरोधित्वादित्याह * किं च घटत्वेति * तस्य पटस्य, तद्भेदः घटाद्भेदः । द्वितीये घटधर्मिकपटाभेदविरोधित्वेपि पटधर्मिकघटाभेदविरोधित्वाभावाच्च

विरोधीति कथं तस्य तद्भेदः स्यात् तदुभयनिरूपिताभेदविरोधिन एव तद्भेदत्वात् तदभेदश्च तर्कितः परमतेऽतो वृक्षस्याग्रत्वाभाव इव तदधिकरणाभेदेपि घटत्वाभावोऽ(१)नुपपन्नइति न स भेदस्तर्किताभेदविरोधी, तादृशभेदाभावश्रुत्योरेव(२)घटत्वपटत्वाधिकरणाभेदे प्रमाणत्वात् तस्मान्न कथमपि भेदः सिद्ध्यति। ननु घटत्वविशिष्टप्रतियोगिक एवान्योन्याभावः।न चैवं विरोधात्तस्य न प्रतियोगिसा-

तस्य तद्भेदत्वमित्यभिप्रेत्य पटस्य घटभेदस्वरूपमाह * तदुभयेति * परमते घटपटनिरूपिताभेदस्य क्वाप्यभावात्कथं तद्विरोधिता भेदस्येत्यत आह * तदभेदश्चेति * तदुभयनिरूपिताभेदसम्भावनामात्रेण तद्विरोधी तद्भेद इत्यर्थः। एवं सति फलितमाह * अत इति * मूलावच्छेदेन वृक्षेऽग्रत्वात्यन्ताभावसत्वेन तत्राग्रत्वावच्छिन्नधर्मिप्रतियोगिकाभेदाभावेपि तस्य वृक्षमात्रप्रतियोगिकाभेदाविरोधित्ववत् घटत्वात्यन्ताभावस्य पटे घटत्वावच्छिन्नधर्मिप्रतियोगिकाभेदविरोधिनोपि तदधिकरणद्रव्यमात्राभेदविरोधित्वायोगात्स न तद्भेद इत्यर्थः। ननु मूलत्वाग्रत्वयोः प्रत्यभिज्ञया वृक्षैकत्वावगमात् मूलेऽग्रत्वाभावो न तदभेदविरोधी घटत्वपटत्वाधिकरणाभेदे तु न किंचिन्मानमिति कथं घटत्वाभावाधिकरणपटे तदधिकरणाभेदसम्भव इत्याशङ्कोक्तविधया तद्भेदस्य दुर्निरूपत्वादेकमेवाद्वितीयं नेहनानाऽस्ति किंच न नात्र का चन भिदाऽस्ती त्यादिश्रुतेश्च वास्तवभेदाभावरूपाभेदावगमात्सर्वधर्माधिष्ठानैक्यं सम्भाव्यत इत्याह * तादृशेति * एवं प्रतियोग्यनिरूपणात् न वास्तवभेदसिद्धिरित्युपसंहरन्ति * तस्मादिति * अत्यन्ताभावप्रतियोगिन एवान्योन्याभावप्रतियोगित्वमिति पक्षं निरस्तमप्युक्तदोषपरिहारेणोज्जीवयन् पुनरुत्थापयति * नन्वित्यादिना * तर्ह्यत्यन्ताभाववदेव प्रतियोगिना सहैकदे-

(१ श्रुतेरवेति खपु० पा० (२) भावोप्युपेति खपु० पा०

मानाधिकरण्यमिति वाच्यम् । अन्योन्याभावस्य प्रतियोग्यविरोधात्। न च प्रतियोगितदवच्छेदकभेदाभावेन तस्यात्यन्ताभावादभेद इति वाच्यम् । प्रागभावादिवत्तदुपपत्तेः, अन्यथा भूतलं घटो न, भूतले घटो नेति प्रतीत्योर्वैलक्षण्यायोगादिति चेत् न। भूतलं घटो नेति प्रतीत्या हि भूतलस्य तदभेदविरोधी नञर्थो विषयीक्रियते स चाभेदो यदि घटत्वविशिष्टो घट एव तर्हि तद्विरुद्ध एव स

कथं भेदस्य स्थितिर्न स्यादित्युक्तं परिहरति * नचैवमिति * प्रतियोग्यविरोधादिति * घटाधिकरणेऽपि भूतले भूतलं घटो नेति घटान्योन्याभावानुभवात् प्रमाणसिद्धे विरोधाभावादिति भावः । अभावभेदस्य प्रतियोगितदवच्छेदकान्यतरभेदनियतत्वेन तदभावे कथमन्योन्याभावस्यात्यन्ताभावाद्भेदस्तदभावे वा कथमुक्ताविरोध इत्याशङ्क्य प्रागभावप्रध्वंसाभावात्यन्ताभावानामेकप्रतियोगिकानामपि परस्परं भेददर्शनान्नोक्तनियम इत्याह * न च प्रतियोगीत्यादिना* प्रागभावादावपि प्रतियोगितावच्छेदकस्य कालविशेषादेर्भेदोऽस्त्येव प्रकृते सोऽपि नास्तीति कथं भेद इत्याशङ्क्याभावभेदाभावे कदाचिदिदमिदं न कदाचिदिदमिह नेति विलक्षणप्रतीतिद्वयायोगात् प्रतियोग्यादिभेदाभावेऽप्यभावभेदोऽभ्युपेयोऽनिच्छद्भिरपीत्याह * अन्यथेति * भेदस्य प्रतियोग्यविरोधित्वं तावदयुक्तमिति दूषयति * नेति * अन्योन्याभावरूपो भेदः किमभेदविरोधी उत न, उभयथाऽपि भूतले घटो नेति प्रतीतौ किं विरोधो भासते न वा तत्र विरोधं तद्भानं च स्वीकरोति * भूतलं घट इति * तत्र किं भेदविरोध्यभेदः प्रतियोगिभूतो घट एव तदतिरिक्तो वा, तत्राद्ये भेदप्रतियोगिनोर्विरोधात् सामानाधिकरण्यं न स्यादित्याह * स चाभेद इत्यादिना * भेदस्याविरोधित्वपक्षे विरोधभानाभ्युपगमे दोषमाह * अविरोध इति * तथा च भेदप्रतीतेरप्रमाणत्वात् तन्निर्वाहाय विषयभेदो न कल्प्य इति भावः। विरोधो न भासत इति पक्षमनु-

वक्तव्य इति कथं तस्य प्रतियोगिसामानाधिकरण्यमविरोधे च विरोधप्रतीतिर्बाधिता स्यात् । विरोधो न प्रतीयते इति चेत्तर्हि स भेदोऽस्माभिरनिराकार्यः अभेदप्रमाऽविरोधिनोऽप्रतिकूलत्वात् । यत्तु सत्यं भेदाभेदयोर्विरोधः परस्परविरहरूपत्वात् घटस्तु प्रतियोग्यपि न तद्विरहः प्रतियोगित्वं च स्वरूपसम्बन्धविशेष इति तन्न । घटस्वरूपातिरिक्तस्याभेदस्य तद्विरहरूपस्याभावात् घटस्य स्वाधिकरणकभेदेऽपि प्रतियोगित्वप्रसङ्गाच्च ।

वदति * विरोध इति * विरोधप्रतीत्यभावे भेदस्याभेदविरोधित्वासिद्धेः श्रुत्यादिप्रतिपन्नाद्वैते बाधकाभावादस्मदिष्टसिद्धिरित्याह * भेदोऽस्माभिरिति * अविरोधिन इति छेदः । भेदविरोध्यभेदः प्रतियोग्यतिरिक्त इति पक्षमनुवदति * यत्तु सत्यमिति * अभेदवद्घटस्यापि भेदप्रतियोगित्वात्तद्विरहात्मत्वं ततश्च सोऽपि तद्विरोधीति कथं तयोः सामानाधिकरण्यमित्याशङ्क्याह * घटस्त्विति * अभेदस्यैव भेदविरहात्मना प्रतीतेस्तदन्यघटो न तद्विरहात्माऽतो न तद्विरोधीत्यर्थः।ननु घटस्य भेदप्रतियोगित्वं तद्विरहात्मत्वमेवातः कथं तन्न तदभाव इत्याशङ्क्य न तत्प्रतियोगित्वं तद्विरहात्मत्वं अधर्मादिप्रतियोगिधर्मादौ तददर्शनात्किं तु तन्निरूपकस्वरूपविशेषः ततश्च भेदप्रतियोगिनोऽपि घटस्य न तद्विरहात्मत्वमित्याह * प्रतियोगित्वं चेति * निराकरोति * तन्नेति * घटातिरिक्ततदभेदस्य भावरूपस्य अभावरूपस्य च प्रागेव निरस्तत्वात्तस्य भेदविरहात्मत्वं दूरापेतमेव भेदस्याभावत्वेन तत्प्रतियोगिनस्तद्विरहात्मत्वं च दुर्वारमत्यन्ताभावादिप्रयोगिषु तन्नियमदर्शनादिति भावः।किं च घटस्वरूपविशेषस्यैव भेदप्रतियोगित्वरूपत्वे तत्स्वरूपस्य पटादिप्रतियोगिकस्वनिष्ठभेदं प्रत्यप्यविशेषाद्घटस्य तत्प्रतियोगित्वमपि स्यात्तथा च घटः स्वस्मादपि भिन्नः स्यादित्याह * घटस्येति * एवं तावदन्योन्याभावस्य भेदत्वे

यदपि न भावाभावयोः स्वरूपेण विरोधः अपित्वारोप्य-सम्बन्धपुरस्कारेणान्योन्याभावे वा(१)भेदसम्बन्ध एवारोप्य इति तदपि न। प्रतियोगिस्वरूपातिरिक्ताभेदस्यासम्भवात् तस्य चासंसर्गत्वात्।न च घटत्वमभेदः तद्भिन्नस्य तदात्मत्वानुपपत्तेः तस्य संसर्गत्वे प्रमाणाभावाच्च, भूतलं

तस्य प्रतियोगिना सह विरोधापत्त्या तत्सामानाधिकरण्यं न स्यादित्युक्तम्। सम्प्रति विरोधमङ्गीकृत्य सामानाधिकरण्योपपत्तिं शङ्कते * यदपीत्यादिना * अत्यन्ताभावेनापि प्रतियोगिनो न स्वरूपेण विरोधः सर्वत्र तदभावप्रसङ्गात् किं स्वभावाधिकरणे समारोपितसंयोगादिसम्बन्धवत्त्वेनैव तस्य तेन सह विरोध इति तत्सम्बन्धस्य साक्षात्तेन विरोधस्तत्पुरस्कारेण प्रतियोगिनः स इति वक्तव्यं एवमन्योन्याभावेनापि तत्प्रतियोगिनः समारोपिततदधिकरणाभेदसम्बन्ध एव साक्षाद्विरुध्यते प्रतियोगी तु तत्पुरस्कारेण तदभिन्नत्वाकारेणैव विरुध्यत इति सम्बन्धान्तरेण भेदतत्प्रतियोगिनोः सामानाधिकरण्योपपत्तिरित्यर्थः। निराकरोति*तदपीति * कोऽयं प्रतियोग्यभेदसम्बन्धो योऽन्योन्याभावाधिकरणे समारोप्यः सन् तेन विरुध्यते स किं घटादिस्वरूपमेव तदतिरिक्तो वा कश्चिद्धर्मः घटत्वादिरेव वा, न प्रथमः तस्य निरस्तत्वादित्यभिप्रेत्याह * प्रतियोगीति * आद्ये प्रतियोगिस्वरूपस्य तत्सम्बन्धत्वाभावादारोप्यसम्बन्धपुरस्कारेण विरोध इत्येतदयुक्तं स्यादित्याह * तस्य चेति * तृतीयं निराकरोति * न च घटत्वमिति * घटभिन्नस्य घटत्वस्य पटादिवत्तदभेदत्वानुपपत्तेरित्यर्थः। घटत्वस्यापि घटसम्बन्धरूपत्वाभावात् प्रथमकल्पोक्तदोषोऽपि तुल्य इत्यभिप्रेत्याह * तस्येति * ननु भूतलं घट इति भूतले घटत्वमारोप्य नेति तत्वेन घटनिषेधात् तस्य संसर्गरूपत्वमित्याशङ्क्य सोयमितिवद्भूतलं घट इति सामानाधिकरण्यभ्रमत्वेनाभेदस्यैवारोप्यमाणत्वात्तत्र तत्तादिवत् घटत्वस्यापि विशेष-

(१) अन्योन्याभावेनाभेदेति खपु० पा०।

घट इत्यारोपे सत्यपि तस्य तत्प्रकारतयाऽसंसर्गत्वात् । किं चैवं भूतले घटो नेति धियः समवायसम्बन्धेनाभावो विषयोऽस्त्विति क्वान्योन्याभावः । न चान्योन्याभावस्य प्रतियोगितावच्छेदकेनैव समं विरोध इति वाच्यम् । अभावमर्यादातिलङ्घनेन तस्य नञर्थत्वायोगात् । न च विलक्षणप्रतीतिसिद्धस्य प्रसिद्धाभाववैलक्षण्यं न दोषायेति वाच्यम् । भूतलं घटो न भूतले घटो नेतिप्रती-

णतयैव भानान्न तत्संसर्गत्वमित्याह * भूतलमिति * अपि च भूतलं घट इत्यादिसमानाधिकरणप्रत्ययानां परैः समवायरूपसंसर्गविषयत्वोपगमाद्भूतलं घट इत्यपि भूतले समवायतया घटमारोप्य नेति तदत्यन्ताभावविषयतया निषेधप्रतीत्युपपत्तेर्न तद्विलक्षणान्योन्याभाव आक्रोशतोऽपि सिद्ध्येदित्याह * किं चैवमिति * अत्र कश्चिदभावान्तरस्यैव प्रतियोगिसादेश्यं विरुद्धं अन्योन्याभावस्य तु तत्प्रतियोगितावच्छेदकेनैव सह विरोधो न प्रतियोगिनेति जल्पति तन्निराकरोति * न चान्योन्याभावस्येति * हेतुमाह * अभावेति* अनेकाभावेषु नञ्पदप्रवृत्तिनिमित्ततयाऽनुगततत्प्रतियोगिविरोधिमात्रात्मकत्वस्यावश्यमाश्रयणीयत्वादितरथाऽन्योन्याभावस्य नञर्थत्वं न स्यादित्यर्थः । ननु भूतलं घटो नेति प्रतीतेर्भूतले घटो नेति प्रतीत्यपेक्षया विलक्षणत्वेनानुभवात्तद्विषयान्योन्याभावस्येतरविषयाभाववैलक्षण्यमवश्यमभ्युपेयं तच्च प्रतियोगितावच्छेदकविरोधित्वमेवेति न तस्य प्रतियोगिसादेश्यानुपपत्तिर्नापि नञर्थत्वानुपपत्तिरभावत्वस्यैव तत्प्रवृत्तिनिमित्तत्वादिति नेत्याह * न च विलक्षणेति * न तावत्प्रतियोगिविरोधिमात्रस्वभावत्वं विना जातिरूपमुपाधिरूपं वाऽभावत्वं शक्रेणापि शक्यं वक्तुं यन्नञ्पदप्रवृत्तिनिमित्तं कल्पेतेत्यभिप्रेत्योक्तप्रतीत्योरपि नञर्थरूपाभावांशे न वैलक्षण्यं किं तु नञर्थेनाभावेन सह प्रतियोगितावच्छेदकतया भूतलं घटः भूतले घट इति प्रतिभासमानतादात्म्यतदितरसंसर्गांश एव वैषम्यमनुभूयत इति न तद्बलात्स्वयुक्त-

त्योर्नञर्थेन भूतलघटसम्बन्धवैरूप्येण विना नञर्थांशे कियतोपि वैलक्षण्यस्याभा (१) वात्तदपि तव न स्यात् उभयत्र भूतलस्य घटाभाववत्त्वप्रतीत्यभ्युपगमात् । न चान्योन्याभाववत्त्वमत्र प्रतीयत इति वैलक्षण्यमिति वाच्यम् । इदमिदं नेति प्रतीतावभावेऽन्योन्याभावत्ववैशिष्ट्यस्याप्रतीते स्तस्य नञर्थत्वाभावादिदमिदं नेति प्रतीतिविषयस्यैतौ भिन्नावेतयोरभेदोनास्तीति विवेचनात् । न चात्राप्यन्योन्याभावत्वं प्रतीयत इति वाच्यम् । विभक्ताविति प्रतीतिवद्भिन्नाविति प्रतीतेरुभयाश्रितैकभेद-

वैलक्षण्यसिद्धिरित्याह*भूतलं घट इति * एवं प्रतियोगितावच्छेदकसंसर्गवैलक्षण्यादभावप्रतीतिवैलक्षण्यसम्भवमुक्त्वोभयत्रापि घटत्वं प्रतियोगितावच्छेदकतया भासते इति तव मते तदपि न स्यादिति वृद्धिं गृह्णतो मूलस्यैवोन्मूलनन्यायापात इत्याह * तदपीति * ननूभयत्रापि प्रतियोगितावच्छेदकवैलक्षण्याभावेपि भूतलं घटो नेत्यत्र भूतलगताभावेन्योऽन्याभावत्वं प्रतीयते इतरत्र त्वत्यन्ताभावत्वमिति प्रतीतिवैषम्योपपत्तिरित्याशङ्क्योभयत्रापि नञर्थस्यैकप्रकारेण प्रतीतेरन्योन्याभावत्वस्य परमते ऽपि नञर्थत्वानभ्युपगमाच्च मैवमित्याह * न चान्योन्याभावत्वमित्यादिना * इदमिदं नेति प्रतिपन्नभेदस्यैवैतौ भिन्नावित्यादिरूपेण परं प्रत्युपदिश्यमानत्वादपि न पराभिमतः प्रतियोग्यनाश्रितान्योन्याभावस्तद्विषय इत्याह*इदमिदं नेतीति * नन्वेतौ भिन्नावित्यादेरपि परस्परप्रतियोगिकान्योन्याभावद्वयमेवार्थः किं न स्यादित्याशङ्क्य न, संयोगविभागादिवदुभयधर्मिप्रतियोगिकैकभेदस्य तथाऽनुभवादन्यथा विभागानवा ? प्रतियोगिभेदाद्भेदापात इत्यभिप्रेत्याह*न चात्रापीत्यादिना*अभेदो नास्ती

---

(१) वैलक्षण्यस्यानि रूपणादिति खपु० पा० ।

विषयत्वेन त्वदभिमताविषयत्वात् एवमेतयोरभेदो ना-
स्तीतिप्रतीतेरपि। किं च भेदप्रतीत्या विदारणरूपोऽभेदा-
भावो विषयीक्रियते न त्वदभिमतो घटाभावोऽतो ने-
दमिदमिति प्रतीतेस्तव मते वैलक्षण्यं न सिध्यति । य-
त्त्वन्योन्याभावत्वमखण्डोऽभाववृत्तिः कश्चिद्धर्मस्तत्प्रती-
तिविषय इति तन्न।अखण्डोपाध्यङ्गीकारे बाधकस्योक्तत्वा-
त् सादृश्यादेरप्यखण्डधर्मस्य प्रतीत्यनुसारेण पदार्थान्तर-

प्रतीतिरप्यविभागो नेति प्रतीतिवदेकविषयैवेत्याह * एवमिति *
एवमिदमिदं नेत्यनुभूयमानाभावस्य घटादिप्रतियोगिकत्वमङ्गीकृत्य
पराभिमतभेदो न तद्विषय इत्युक्तं इदानीं वस्तुतत्त्वं वदन् घटादिप्र-
तियोगिकत्वं तस्यायुक्तमित्याह * किं चेति * यथा देवदत्ताभेदभ्र-
मनिवृत्तये नायं देवदत्त इति तदभाव एव बोध्यते एवं भूतले
घटो नेत्यादावपि सामानाधिकरण्यावगताभेदस्यैव नञर्थाभावप्रति-
योगितया प्रतीतेर्न घटादेस्तत्प्रतियोगितेत्यर्थः । एवं चेदमिदं न इद-
मिह नास्ति प्रतीत्योरस्मदुक्तरीत्या भिन्नप्रतियोगिकाभावविषयत्वे वै-
लक्षण्योपपत्तिर्न त्वदुक्तरीत्यैकप्रतियोगिकाभावविषयत्व इत्युपसं-
हरति * अत इति * इदमिदं नेत्यस्य निर्वाहाय तद्विषयान्योन्या-
भावेषु तत्त्वं नामाखण्डधर्मो गोत्वादिवदभ्युपेयते तद्विषयत्वमेवा-
स्येदमिह नास्ति प्रत्ययाद्वैलक्षण्यमिति कस्य चित्कल्पनामनूद्य निरा-
करोति * यत्त्वित्यादिना * किमन्योन्याभावत्वं जातिरुपाधिर्वा, ना-
द्यः अपसिद्धान्तापातात् तस्य स्वाश्रयाभावेन समवायतादात्म्यास-
म्भवेन जातित्वायोगाच्च । द्वितीये तस्याखण्डधर्मत्वानुपपत्तिरन्य-
था गवादिष्वपि सास्नादिमत्वाद्युपाधीनामेवाखण्डधर्मत्वकल्पनया
ऽनुगतव्यवहाराद्युपपत्तेरतिरिक्तजातिकल्पनाऽनर्थिका स्यादिति पूर्व-
मेव बाधकस्योक्तत्वादित्यभिप्रेत्याह * अखण्डेति * किं चान्योन्या-
भावत्ववदेवेदमनेन सदृशमिदं विसदृशमित्यनुगतधीविषयसादृ-
श्यादिकमप्यखण्डधर्मः स्यात् तस्य च सर्वत्रानुभूयमानस्य पदार्थ-

स्य प्रसङ्गाच्च क्लृप्तान्तर्भावे पदार्थान्तरकल्पनानुपपत्तिः प्रकृतेऽपि समाना, नेत्येकाकारप्रतीतेरभावत्वान्योन्याभावत्वधर्मद्वयवैशिष्ट्याविषयत्वेन तस्या अभावविशेषत्वे प्रमाणाभावाच्च, न हि तदभावत्वसाधकमिदमिदं नेति प्रतीतिव्यतिरिक्तं किं चिदस्ति, भेदान्योन्याभावशब्दयोः पर्यायत्वेन भेदबुद्धेरप्यखण्डविषयतया तदसाधकत्वात्। न च प्रतियोग्यधिकरणवृत्त्यभावत्वमन्योन्याभावत्वं तत्प्रतीतिविषय इति वाच्यम्। घटादिनिष्ठभूतलादिभेदबुद्धे-

द्रव्यादिपदार्थेष्वनन्तर्भावात् पदार्थान्तरता स्यात् सा च नत्यानिष्टे-त्याह * सादृश्यादेरिति * ननु न सादृश्यादि पदार्थान्तरं गुणावयव-कर्मसामान्यभूयस्त्वादेरेव सदृशादिधीगोचरतया सादृश्यादेरपि त-न्मात्रत्वादित्याशङ्क्येदमिदं नेति धीगोचरस्याप्यभेदाभावत्वमात्रत्वो-पपत्तेर्न तदतिरिक्ताखण्डधर्मसिद्धिरित्याह * क्लृप्तान्तर्भाव इति * किं च भूतलं घटो नेत्यनुभूयमानाभावे योऽन्योन्याभावत्वरूपो विशेषः स किं नेत्येकाकारप्रतीत्यैव सिद्ध्यति प्रतीत्यन्तरेण वा, नाद्यः नेत्याकारप्रतीतेरन्यत्राभावत्वमात्रगोचरत्वोपगमादत्र तदतिरिक्तगो-चरत्वायोगादित्याह * नेत्येकाकारेति * द्वितीयं निराकरोति * न हीति * अस्माद्भेद इति प्रतीतिरेव भेदगतान्योन्याभावत्वरूपाखण्ड-धर्मविषया तत्साधिकेत्याशङ्क्येदमिदं नेति प्रतीयमानाभावत्वाचका-न्योन्याभावपदपर्यायभेदपदार्थप्रतीतेरपि तन्मात्रविषयत्वेन त्वयो-पेतत्वात्ततोऽपि न तदखण्डधर्मसिद्धिरित्याह * भेदेति * एवम-न्योन्याभावत्वमखण्डधर्म इति मतं निरस्य सखण्डोपाधिविशेषरूपं तदिदमिदं नेति प्रतीयते इति मतं निराकरोति * न च प्रतियोगी-ति * घटप्रतियोगिकभूतलनिष्ठभेदे प्रतियोग्यधिकरणवृत्तित्वरूप-विशेषानुभवेऽपि भूतलप्रतियोगिकघटनिष्ठभेदे तदननुभवात् घटो भूतलं नेत्यादिप्रतीतेर्घटे भूतलं नेति प्रतीतिवैषम्यं न स्यादित्यभि-प्रेत्याह * घटादिनिष्ठेति * भूतलप्रतियोगिकघटनिष्ठभेदस्य वस्तुतो

स्तद्विषयत्वापातात् भूतलमात्मा न भवतीति बुद्धेस्तदयोगाच्च न ह्यात्मनस्तत्र मम वाधिकरणमस्ति। इदानीमात्मेति बुद्धेः कालोऽधिकरणमिति चेत्तर्हि तदत्यन्ताभावोपि तत्रास्त्येव। न च प्रतियोगिसमानाधिकरणाभाववृत्त्यभावत्वव्याप्यधर्मोऽन्योन्याभावत्वमिति वाच्यम् । तस्यैवाखण्डस्य निरस्तत्वात् इदमिदं नेति प्रतीतेरेवमाकारत्वायोगाच्च तस्मिन्नभावत्वव्याप्तिग्राहकप्रमाणाभा-

भूतलाधिकरणतदवयवादिनिष्ठत्वाद्विशेष इत्याशङ्क्य तस्य घटो न भूतलमित्यत्राप्रतीयमानत्वेनैतद्वैषम्यप्रतीत्यनुपयोगित्वमित्यभिप्रेत्य दूषणान्तरमाह * भूतलमात्मेति * आत्मादेर्निरधिकरणत्वेन तदभावस्य वस्तुतोऽपि प्रतियोग्यधिकरणवृत्तित्वायोगेन भूतलादौ तादृशाभावाभावाद्भूतलमात्मा नेत्यादिबुद्धेर्भेदगोचरता न स्यादित्यर्थः। आत्मादेरपि कालाश्रितत्वप्रतीतेर्निरधिकरणत्वमसिद्धमिति शङ्कते * इदानीमिति * कालस्यात्माद्यधिकरणत्ववत्तदत्यन्ताभावाधिकरणत्वमप्यस्त्येव परैः कालस्य सर्वाधारत्वोपगमात् विश्ववत्यन्ताभावस्य केवलान्वयित्वाभ्युपगमाच्च तथा च कालवृत्त्यत्यन्ताभावेऽपि गतत्वात् प्रतियोग्यधिकरणवृत्त्यभावत्वमन्योन्याभावत्वमित्येतदयुक्तमित्यभिप्रेत्याह * तर्हीति * प्रतियोगिसमानाधिकरणाभाववृत्तित्वे सत्यभावत्वव्याप्यधर्मोऽन्योन्याभावत्वमित्यन्येनोक्तमप्ययुक्तं उक्तविधयाऽत्यन्ताभावत्वस्यापि तथात्वात् साक्षादभावत्वव्याप्यत्वविवक्षायां च संसर्गाभावत्वेऽतिव्याप्तिरित्यभिप्रेत्याह * न च प्रतियोगीति * किं चोक्तरूपोऽभावत्वव्याप्यधर्मोऽखण्ड उपाधिः सखण्डो वा, नाद्यः तदभ्युपगमे जातिविलोपापातस्योक्तत्वादित्याह * तस्यैवेति * द्वितीये मानाभावादेव तदसिद्धिः भेदप्रतीतेः प्रतियोगिसमानाधिकरणाभाववृत्तित्वाद्यनाकारत्वात्तदाकारप्रतीत्यन्तरादर्शनाच्चेत्यभिप्रेत्याह * इदमिदमिति * प्रतियोगिसमानाधिकरणाभाववृत्तिधर्मस्याभावत्वव्याप्यत्वं यदुक्तं तदपि मानाभावादयुक्तमि-

वाच्च नञर्थप्रतीतिमात्रस्य तदसाधकत्वात् । प्रतियोग्यवृत्त्यभावत्वमस्य ततो विशेष इति चेन्न । अत्यन्ताभावेऽपि तस्योक्तत्वात्कालादिभेदे तदभावाच्च घटपटयोरभेदो नास्तीत्येकस्यैवाभेदाभावलक्षणभेदस्योभयत्रानुभवाच्च तस्मान्न कथमपि तव प्रतीतिवैलक्षण्यमुपपद्यते । एतेन घटा-

त्याह * तस्मिन्निति * इदमिदं नेति नञर्थोल्लेखिधिया तत्राभावत्वमात्रं प्रतीयते न तु तेन सह व्याप्तिस्तद्बलात्किञ्चित प्रतीयते इति न तत्सिद्धिरित्यर्थः । इदमिदं नेत्यनुभूयमानाभावस्य कदापि प्रतियोगिवृत्तित्वाननुभवात् प्रतियोग्यवृत्त्यभावत्वमेवान्योन्याभावस्य प्रतियोगिवृत्त्यत्यन्ताभावाद्विशेष इति तदनुभववैषम्योपपत्तिरिति शङ्कते * प्रतियोगीति * इदमिदं नेत्यत्रापि नञर्थे प्रतियोग्यवृत्तित्वविशेषस्य सतोऽप्यप्रतीतेस्तत्प्रयुक्तं प्रतीतिवैषम्यमयुक्तमिति दूषयति * नेति * अत्यन्ताभावस्यापि प्रतियोगिविरुद्धस्वभावतया तदवृत्तित्वस्योपपादितत्वात्साधारणोयं ततोऽस्य वस्तुनोपि न विशेष इत्याह * अत्यन्ताभावेपीति * किं च दिक्कालयोः सर्वाधारत्वात्तत्प्रतियोगिकभेदस्य प्रतियोग्यवृत्तित्वायोगेन तत्राव्याप्तिरित्याह * कालादीति * असम्भवमप्याह * घटपटयोरिति * धर्मिप्रतियोगित्वेनाभिमतयोर्घटपटयोरेकस्यैव भेदस्यानयोरभेदो नेत्यादिरूपेणानुभवाल्लाघवाच्च विभागादिवदुभयत्राप्येकत्वात्तस्य पराभिमतप्रतियोग्यवृत्तित्वमसम्भवीत्यर्थः । एवं परमतेऽन्योन्याभावत्वस्य दुर्निरूपत्वात्तद्विषयत्वप्रयुक्तमिदमिदं नेति प्रत्ययस्येदमिह नेति प्रत्ययाद्वैषम्यं परोक्तमयुक्तमित्युपसंहरति * तस्मादिति * ननु प्रतियोग्यधिकरणे प्रतीयमानाभावः कथं तद्व्यधिकरणाभावान्न विलक्षणः कथं वा तत्प्रतीतिस्तत्प्रतीतेर्न विलक्षणेत्याशङ्क्य घटाधिकरणे तत्प्रतियोगिकाभावस्यासम्भवादेव तत्र तव तत्प्रमितिरेवानुपपन्ना कुतस्तद्बलाद्विलक्षणाभावादिसिद्धिः प्रतीतिमात्रं तु वक्ष्यमाणविधया घटभूतलाभेदाभावरूपानिर्वचनीयभेदविषयतयाऽस्मन्मते घटते इत्यभिप्रेत्याह * एतेनेत्यादिना * किं च घटपटाद्यभाववैलक्षण्यं लाघवात् प्रति-

धिकरणेपि भूतले भूतलं घटो नेति प्रतीतेर्विलक्षणाभाव इति प्रत्युक्तम् । एतस्या एव त्वन्मते घटाभाववद्भूतलमित्याकारतयाऽघटं भूतलमिति प्रतीतिवत्तत्रानुदयप्रसङ्गात् । प्रतियोगिवैलक्षण्यं विनाऽभावबुद्धेर्वैलक्षण्यायोगात् । ससम्बन्धिकपदार्थस्य सम्बन्धिभेदाभावे तदयोगात् । अत्यन्ताभावातिरिक्तप्रागभावादि(१)रप्यन्योन्याभावतुल्य एव । यत्त्वारोपवैचित्र्यात्तज्जन्याभावधीवैचित्र्यमिति तन्न । प्रमेयभेदं विना प्रत्यक्षानुमानादिजन्याभाव-

योगिवैलक्षण्यस्यैव प्रयोजकत्वेन क्लृप्तत्वादेकप्रतियोगिकत्वेऽन्योन्याभावात्यन्ताभावयोस्तदभावेन वैलक्षण्यासम्भवात् तद्बुद्धिवैलक्षण्यं सत्र दुर्लभमित्याह *प्रतियोगीति* किं च सम्बन्धिनिरूप्यस्वभावानां समानकालीनानां संयोगादीनां भेदः सम्बन्धिभेदेन नियत इति समानकालीनान्योन्याभावात्यन्ताभावयोरेकप्रतियोगिकत्वे व्यापकप्रतियोगिभेदाभावाद्व्याप्यभेदो न स्यादित्याह *ससम्बन्धिकेति* अभावभेदे प्रतियोगिभेदः प्रयोजक इत्यस्य पराभिमतप्रागभावध्वंसयोर्व्यभिचारमाशङ्क्य प्रागुत्तरकालीनानिर्वचनीयसूक्ष्मरूपातिरेकेण प्रागभावादेर्निरूपणेन पक्षतुल्यत्वान्न व्यभिचार इत्याह * अत्यन्ताभावेति * पूर्वमिदमिदं नेदमिह नेति प्रतीत्योर्विषयवैलक्षण्याद्वैलक्षण्यमिति मतं निरस्य कारणवैलक्षण्याद्वैलक्षण्यमिति मतमनूद्य निराकरोति *यत्त्वित्यादिना* इदमिह नेति ज्ञानेऽभावाधिकरणे प्रतियोगिसंसर्गारोपः कारणमिदमिदं नेति ज्ञाने तु तत्र प्रतियोगितावच्छेदकारोपः कारणमिति पराभ्युपगमानुरोधेन कारणवैलक्षण्यात्कार्यज्ञानवैलक्षण्यमात्रसिद्धावपि नैतावता तद्विषयाभावभेदसिद्धिः परमते प्रत्यक्षानुमानजज्ञानैकाभावधीवैलक्षण्येपि तद्विषयभेदाभावादित्यर्थः । *वैलक्षण्यायोगादिति* विषयभेदसाधकवैलक्षण्यायोगादित्यर्थः । विलक्षणारोपजन्यत्वेन ज्ञानवैचित्र्यमङ्गीकृत्य नैतावताऽभावभेदसिद्धिरित्यु-

(१) दिरपीति खपु० नास्ति ।

धीव(१)द्वैलक्षण्यायोगात् स्वतोऽभाववैचित्र्यं विना तस्य तज्जन्यत्वज्ञानासम्भवाच्च, अभावधीपूर्वं प्रतियोगिज्ञानादिघटिताभावधीसामग्र्यां सत्यामारोपसद्भावे प्रमाणाभावाच्च, प्रमेयवैलक्षण्यादृतेऽभावधीवैलक्षण्यासम्भवेन ततस्तदसिद्धेः दोषाभावेनारोपासंभवाच्च जन्यारोपमात्रे दोषस्य

क्तं सम्प्रति विलक्षणाभावविषयत्वरूपज्ञानवैलक्षण्यग्रहं विना तयोर्व्यवस्थया विलक्षणारोपजन्यस्यैव दुर्ग्रहत्वात्तत एव विलक्षणाभावविषयत्वसाधने परस्पराश्रयापत्तेर्नैकमपि सिद्ध्येदित्यभिप्रेत्याह * स्वत इति * किं च किमन्वयव्यतिरेकाभ्यामुक्तारोपद्वयस्य ज्ञानद्वये व्यवस्थया कारणत्वमवसीयते उत ज्ञानद्वयवैलक्षण्यानुपपत्त्या, नाद्यः अधिकरणग्रहणप्रतियोगिस्मरणातदनुपलम्भादिनैव तदुपपत्तौ तदन्वयादेरसिद्धेरित्याह * अभावधीति * द्वितीयं निराकरोति * प्रमेयेति * भूतलं घटाभाववद्भूतले घटाभाव इति ज्ञानद्वयवद्भूतलं घटो न भूतले घटो नेत्यनयोरपि नञर्थाभावस्य विशेषणविशेष्यभावव्यत्ययं विना प्रमेयभेदानुपलम्भात् विलक्षणप्र(२)मेयकत्वलक्षणवैलक्षण्यस्यासिद्धेः विशेषणाभावादिप्रयुक्तवैलक्षण्यमात्रस्योक्तारोपभेदानपेक्षत्वादितरथा भूतले घटाभाव इत्यादावपि तत्प्रसङ्गाज्जन्यस्य तेन विना ऽनुपपद्यमानस्याभावाच्च तत्सिद्धिः।एतेन कदाचिदिदमिह न कदाचिदिदमिदं नेति प्रतीतिकादाचित्कत्वानुपपत्त्या तत्सिद्धिरिति निरस्तम् । भूतले घटाभाव इत्यादाविव तेन विनापि तदुपपत्तेः अन्यथा प्रतियोगितावच्छेदकारोपानन्तरं तदत्यन्ताभावतदाश्रयान्योन्याभावप्रतीतियौगपद्यप्रसङ्गस्य परमते दुष्परिहरत्वादबुद्धिपूर्वकारोपस्य तत्र तदभावग्रहपूर्वकत्वादारोपानवस्थापातादबुद्धिपूर्वकतदारोपस्य भेदग्रहहेतुत्वे रज(३)तभ्रमानन्तरमेव तद्भेदग्रहापातात् दोषस्योभयत्रारोपमात्रहेतुत्वादिति भावः।एवमभावज्ञानात्प्रागारोप-

(१) धीव लक्षण्येति खपु० पा०। (२) प्रयोजकत्वेति खपु० पा०।
(३) रजतभेदानन्तरमिति खपु० पा०।

कारणत्वात् अन्यथा तदप्रामाण्यस्य परतस्त्वानुपपत्तेः । न चेच्छैवदोषः, धर्मिज्ञानसाध्येच्छाया आरोपात्प्रागसम्भवाद्धर्मिज्ञानस्य च तदा(१)रोपरूपस्येच्छासाध्यत्वात् अन्यवैशिष्ट्यज्ञानेच्छाया अन्यवैशिष्ट्यज्ञानाहेतुत्वात् । न च सामान्येन भूतले घटज्ञानमस्त्वितीच्छया आरोप इति वाच्यम् । उपस्थितदेशान्तरं विहायात्रैव तदारोपे तस्या

विशेषे मानाभावमुक्त्वा तदभावे मानमाह * दोषाभावेनेति * अभावाधिकरणस्य तत्प्रतियोग्यादिमाहइयदूरस्थत्वादेरभावादनौपाधिकारोपस्य कारणाभावादसम्भव इत्यर्थः । आहार्यारोपे न दोषः कारणं तेन तदभावेपि तत्सम्भव इत्याशङ्क्याह * जन्येति * अज्ञानाद्यारोपरूपे साक्षिणि दोषस्याकारणत्वात् जन्येत्युक्तं लाघवाज्जन्यारोपमात्रे दोषजन्यत्वावधारणात्तदभावे तदनुपपत्तेः तदारोपात्प्राक् च तदभावानिश्चये तस्याहार्यारोपत्वायोगाच्चेति भावः । दोषजन्यत्वाभावे बाधकमाह * अन्यथेति * अप्रमायाः प्रमाहेतुविजातीयहेतुजन्यत्वमेव ह्यप्रामाण्योत्पत्तौ परतस्त्वं तच्चारोपस्य दोषाजन्यत्वे न स्यादित्यर्थः । तर्ह्यभावाधिकरणे प्रतियोगिसंसर्गज्ञानगोचरराग एव दोषोस्त्वित्याशङ्क्य तस्यारोपज्ञानसाध्यत्वान्न तद्धेतुतेत्याह * न चेच्छैवेत्यादिना * आरोपात्प्रागन्यत्रारोप्यसंसर्गानुभवात्तदिच्छयाऽन्यत्रारोपसम्भवमाशङ्क्य भिन्नविषययोस्तयोर्हेतुहेतुमद्भावायोगान्मैवमित्याह * अन्यवैशिष्ट्येति * ननु सामान्येन भूतलमात्रे घटसंसर्गज्ञानात्तदिच्छया पुरोदेशे समारोप इत्याशङ्क्याह * नचसामान्येनेति * भूतलसामान्ये घटसंसर्गगोचरज्ञानेच्छया पुरोदेश एव तदारोपे नियामकाभावात्सर्वत्रैव तदारोपः स्यादन्यथा कुत्रापि न स्यादित्यर्थः । अपि च भूतलं घटो नेति ज्ञानात्पूर्वं किं भूतले घटत्वसंसर्ग आरोप्यते उत घटसंसर्गः, नाद्यः घटप्रतियोगिकाभावज्ञानस्य प्रतियोग्यतिरिक्तारोपजन्यत्वासम्भवेन तद्वैयर्थ्यात् घटत्वमिह नेति प्रतीतिप्रसङ्गाच्च, न द्वितीयः भूतले घटसंसर्गस्य स-

(१) तदारोपेतिखपु० पा० ।

अनिमित्तत्वात् । किं चाप्रतियोगिनो घटत्वस्यारोपो न हेतुर्घटवति च न घटस्यारोपः अप्रसिद्धिप्रकारत्वाभ्यां, घटत्वं च न संसर्ग इत्युक्तं इष्टसाधनत्वज्ञानं विनारोपेच्छाया अयोगाच्च । न चैवं क्वचिदप्याहार्य्यारोपो न स्यादिति वाच्यम् । मनो ब्रह्मेत्यादिशास्त्रानिमित्ततदभावस्येष्टत्वात्प्रतारकवाक्यादेरैच्छिकसंसर्गज्ञानं विनापि

त्वेन तदारोपायोगादित्याह * किं चाप्रतियोगिन इति * ननु भूतले घटत्वं न स्वातन्त्र्येणारोप्यते किं तु घटसंसर्गात्मनैव ततो नोक्तदोष इत्याशङ्क्य तस्य संसर्गत्वेनाननुभवात् प्रतियोगिज्ञानांशे प्रकारत्वेनानुभवाच्च न संसर्गरूपेणाप्यारोप इति प्रागुक्तं स्मारयति * अप्रसिद्धीति * धर्मिज्ञानसाध्येच्छाया इत्येतत् सिंहावलोकनन्यायेन प्रपञ्चयति * इष्टसाधनत्वेति * आरोपोत्पत्तेः प्राक् तस्यानुपस्थितत्वेन तद्गतेष्टसाधनत्वस्याप्यनुपस्थितेस्तदुपस्थित्यधीनेच्छाया एव प्रागसम्भवान्न तस्यास्तद्धेतुतेत्यर्थः । नन्वाहार्य्यारोपे तदिच्छाया अहेतुत्वेन दोषान्तरस्याप्यभावात् क्वापि स न स्यात् ततश्च प्रतीकोपास्तीनामपि असम्भवात्तद्विधीनामप्रामाण्यापात इत्याशङ्क्याह* नचैवमिति * प्रतीकोपास्तिगतेष्टसाधनत्वस्य श्रुत्यैव बोधितत्वात् तदधीनेच्छयाऽऽरोपोपपत्तेर्न तद्विधीनामप्रामाण्यं यत्र तु प्रत्यक्षातिरिक्तं तदुपस्थापकं नास्ति तत्रारोपोपपत्तेः प्राक् तदिष्टसाधनत्वाग्रहादिच्छाभावेनाहार्य्यारोपाभाव इष्ट इत्याह * मनो ब्रह्मेत्यादीति * नन्वेवं सति प्रतारकस्योत्प्रेक्षकस्य वा तत्तद्वाक्यार्थगोचराहार्य्यारोपाभावे तत्तद्वाक्यरचना न स्यादित्याशङ्क्याह * प्रतारकेति * शुकसुप्तादिप्रलापवदर्थज्ञानाभावेऽपि शब्दज्ञानादेव तद्वाक्यरचनोपपत्तिरित्यर्थः । वस्तुतस्तु प्रतारकादेः स्वेष्टपरकीयप्रवृत्त्यादिहेतुतया तर्कितमसत् संसर्गज्ञानं परस्मिन्नुत्पादयितुमिच्छया तदारोपपूर्वकं तद्बोधकवाक्यरचनोपपत्तिरित्यपिना सूचितम् । एवं भेदस्वरूपतत्प्रतियोगिदुर्निरूपतामुपपाद्यानवस्थापत्त्यापि तस्य दुरवस्थतां वक्तुमु-

सम्भवात्। किं चास्य प्रतियोगिनः स्वतो न भेदः स्वावृत्तित्वादभेदस्यासम्बन्धत्वाद्भेदो ऽभेदो भिन्न इति प्रतीत्योरवैलक्षण्यापाताच्च, भेदधियापि तदभेदप्रतीतेः, स्वस्यैव स्वं प्रति विशेषणविशेष्यत्वायोगाच्च, भेदान्तरं चाधिकरणभेदमात्रादनुपपन्नं तथात्वे वाऽबाधाविनिगमा-

क्रमते * किं चेति * किमन्योन्याभावात्मको भेदो धर्मिप्रतियोगिभ्यामभिन्नो भिन्नो वा, नाद्यः असम्भवाद्वस्तुस्वरूपमात्रे ऽभेदबुद्ध्यावरोधिनि भेदपरिभाषाया अनिवार्य्यत्वाच्च। द्वितीयेऽस्य भेदस्य प्रतियोगिनः सकाशाद्यो भेदः स किं धर्मिभूतभेदस्वरूपमेव ततो भिन्नो वा, नाद्यः स्वस्य स्वेन सम्बन्धाभावेन धर्मधर्मिभावानुपपत्तेरित्याशयेनाह *अस्य प्रतियोगिन इति* अभेदसम्बन्धाद्धर्मधर्मिभावसम्भवमाशङ्क्याह * अभेदस्येति * वस्तुस्वरूपमात्रात्मकाभेदस्याविशिष्टासाधारणत्वेन विशिष्टधीनियामकत्वायोगात् सम्बन्धत्वासम्भव अन्यथा रूपी घट इतिवद्रूपरूपीत्यपि प्रत्ययापात इति भावः। किं चास्मिन्पक्षे भेद इति प्रतीतेर्भेदो भिन्न इति प्रतीतेश्च स्वविषयभेदाभावादनुभूयमानं वैलक्षण्यं न स्यादित्याह *भेद इति* भेदो भिन्न इति प्रतीतावभेदसम्बन्धो भासते इतरत्र नेति वैषम्यमित्याशङ्क्य भेदस्वरूपभूताभेदस्य भेद इति प्रतीतावपि भासमानस्य कथमपि दुर्निरूपत्वान्मैवमित्याह *भेदधियेति* किं च गुणप्रधानभूतपदार्थभेदनियतत्वात् सर्वत्र विशेषणविशेष्यभावस्य घटभेदो घटाभिन्न इति च प्रतीयमानो विशेषणविशेष्यभावो घटभेदद्वयाभावे न स्यादिति घटभेदे घटभेदान्तरं दुर्वारमित्याह * स्वस्यैवेति * अस्तु तर्हि घटादिवृत्तिघटभेदे तद्भेदान्तरमित्याशङ्क्य प्रतियोगिभेदाभावाद्भेदद्वयमनुपपन्नम्। नचाधिकरणभेदमात्रेणाभावभेदः परेषां सम्मत उपपन्नो वेत्यभिप्रेत्याह * भेदान्तरं चेति * प्रतियोगिन एकत्वेप्यनुभवबलाद्भेदे भेदान्तरमभ्युपेयत इत्याशङ्क्याह * तथात्वे वेति * अधिकरणभेदेनाभावभेदाभावेन घटभेदवृत्तितद्भेदस्य पटादिवृत्तित्वेपि बाधकाभावात् पटादौ घटभेदप्रतीतेस्तद्विषयत्ववारकाभावाच्च तत्र द्वि-

नाभ्यां पटेपि स स्यादित्येकत्रैकस्य भेदद्वयं स्यात्। एवं तृतीयेपि, अन्यथा द्वितीयस्य घटाद्भेदायोगात् प्रथमस्य च स्ववृत्तित्वानुपपत्तेः प्रमेयत्वादि च नैकमित्युक्तम्। न हि युगपत्स्वविशेषणं प्रति स्वयं विशेषणं स्वयं विशेष्यं च भवति अन्यथैतौ भिन्नाविति प्रतीत्ययोगात्।

तीयोपि भेदः स्यादित्यर्थः। ततः किं तत्राह * एवमिति * प्रथमभेदवृत्तिद्वितीयभेदवत् द्वितीयभेदवृत्तितृतीयभेदोपि पटादौ स्यादित्यर्थः। द्वितीयभेदे भेदान्तरमेव नेत्याशङ्क्याह * अन्यथेति * भेदायोगादित्यत्राभेदः स्यादिति शेषः। ननु द्वितीयभेदस्तृतीयभेदाभावेपि घटभिन्न एव प्रथमभेदस्यैव स्वनिष्ठद्वितीयभेदवृत्तित्वेन तस्यापि घटभेदवत्त्वादित्याशङ्क्य तथासति भेदद्वयस्य परस्पराश्रयता स्यात्सा च विरुद्धत्वादनुपपन्नेत्याह *प्रथमस्येति* नचोत्पत्त्यादिप्रतिबन्धकत्वाभावान्नायं परस्पराश्रयो दोषायेति वाच्यम्। अस्यापि परस्पराधीनोत्पत्त्यादिवत् क्वाप्यदर्शनेन विपरीतदर्शनेन चासम्भावितत्वेनैव दोषत्वाद्भेदस्य सम्बन्धित्वेनैव विशेषणत्वेनैव विशेष्यत्वेनैव वा प्रतीतिनियमेन तत्प्रतीतौ तद्भेदप्रतीत्यपेक्षाया वक्ष्यमाणत्वेन ज्ञप्तिप्रतिबन्धसम्भवाच्चेति भावः। प्रमेयत्वाभिधेयत्वादौ परस्पराश्रयत्वदर्शनान्न तस्यासम्भावितत्वेत्याशङ्क्य प्रमाविषयत्वाद्यतिरिक्तप्रमेयत्वाद्यनिरूपणात्तस्य च स्वरूपसम्बन्धात्मनः परमतेपि नानात्वाद्यावत्प्रतीति तदभ्युपगमेऽनवस्थाभावाच्च न तत्र परस्पराश्रयतेत्यभिप्रेत्याह * * प्रमेयत्वादीति * किं च भेदद्वयस्य परस्पराश्रयत्वे द्वयोरपि युगपदन्योन्यं प्रति विशेषणत्वं विशेष्यत्वं च वक्तव्यमितरथा पटवृत्तिभेदतद्वृत्तिभेदौ घटाद्भिन्नाविति द्वयोरपि विशेषणविशेष्यभावेनैकप्रतीत्ययोगात् विशेषणत्वादि चैकस्यैकं प्रति युगपदन्यत्रादृष्टत्वादसम्भवीत्याह * न हीत्यादिना * ननु युगपदेकस्यैकं प्रति विशेषणत्वं विशेष्यत्वं चान्यत्रादृष्टमपि प्रकृते प्रतीतिबलादेव स्वीकर्त्तव्यमित्याशङ्क्य तथा सति जीवब्रह्माभेदोपि श्रुतिसिद्धः स्वीकार्य इति सिद्धं नः समीहितं विरोधात्तदनभ्युपगमे च

विरुद्धयोरप्यभेदे किमपराद्धं श्रौतेन, अयमप्यबाधात्रि-निगमाभ्यां प्रथमे, ततश्चतुर्थादिरपि सकलवृत्तिः स्या-त्येकैकस्यानन्ताप्रामाणिकभेदः एवं तेषामप्यन्योन्यं तथा भेदात्।धर्मिप्रतियोगिनोरपि स्वरूपस्य च भेदबुद्धिविषयत्वे तत्प्रतीतिसमकालमत्यन्ताभावप्रतियोगिनि च क्लृप्तेन

भेदौ भिन्नावित्यत्र विशेषणभूतभेदोपि विशेष्याभ्यामन्यस्तृतीयो-ऽभ्युपेय इत्यभिप्रेत्याह * विरुद्धयोरिति * तृतीयभेदस्वीकारे त-स्यापि प्रथमादिभेदवृत्तिता स्यादित्याह *अयमपीति* ततोपि कि-मित्याशङ्क्य तस्यापि पराद्भेदसिद्ध्यर्थं निरवधिकभेदोऽभ्युपेय इत्य-नवस्थापातः स चाप्रामाणिकत्वान्न स्वीकर्त्तव्यः इतरथा सत्वादावपि सत्वादिधीदर्शनात् सत्वाद्यनवस्था दुष्परिहरा स्यादित्यभिप्रेत्याह * तत इति * एवं घटप्रतियोगिकानन्तभेदापत्तिमुक्त्वा भेदेष्वप्य-न्योन्यप्रतियोगिकानन्तभेदापत्तिमाह * एवमिति * घटादिधर्मिप्र-तियोगिनोरप्येकैकभेदप्रतियोगिकानन्तभेदापत्तिश्चेत्याह * तथे-ति * नन्वत एवोक्तानवस्थादिपरिहाराय पटादिवृत्तिघटभेदस्य स्वरूपमेव घटादिभ्यो भेदः स एव चा भेदोभिन्न इत्यादिबुद्धेर्विषयः एवं भेदात् भेदोपि घटादिरेवेत्याशङ्क्य तर्हि तद्वदेव पटादिस्वरूप-स्य भिन्न इत्यादिधीविषयत्वसम्भवात् लाघवात् तत्स्वरूपमेव घटा-दिभेद इति प्रथमस्याप्यन्योन्याभावस्य विलोपापात इत्याशयेनाह * स्वरूपस्येति * भेदस्वरूपस्यैव भेदो घटो नेत्यादिभेदबुद्धिवि-षयत्वे पटादावपि स्वरूपालम्बनेनैव भेदधीरुपपद्यत इति तत्र क-ल्पितेनान्योन्याभावेन किमित्यन्वयः। नन्वन्योन्याभावस्वरूपस्यैव भेदधीगोचरत्वसिद्ध्युत्तरकालीनत्वादस्याः कल्पनायाः कथं तदप-लाप इत्याशङ्क्याह * तत्प्रतीतिसमकालं क्लृप्तेनेति * घटाद्भिन्नः पट इति प्रतीतिकाले एव घटपटयोर्भेदाद्भेदानवगमे तं प्रति तयोर्वि-शेषणविशेष्यभावेन प्रतीत्ययोगात् तत्स्वरूपमेव तदा तद्भेदधीगोच-रत्वेन क्लृप्तमिति स्वरूपस्य भेदधीगोचरत्वकल्पना नान्योन्याभा-वे तत्कल्पनाधीनेत्यर्थः। किं चान्योन्याभावमनपेक्ष्यैवात्यन्ताभावप्र-

तेनैवालं किमन्योन्याभावेन। घटस्येव भेदाभेदविरोधिन एवात्यन्ताभावस्य तद्भेदबुद्धिविषयत्वाच्च। न च घटादेस्तदभावत्वं सम्भवति एवमपि घटपटभेदयोर्भेदायोगात्सर्वो भेद एक एव स्यात् । अपि चायं कुतास्तु, प्रतीतेः प्रतियोगिन्यपि सत्वात् । अथ यत्र प्रतीयते तर्हि

तियोगिनि घटादौ स्वरूपमेवाभावप्रतियोगिकाभावान्तराभावेन भेदबुद्धिगोचरत्वेन क्लृप्तमिति सर्वभेदधीगोचरतया तत्कल्पनोपपत्तिरित्याह * अत्यन्ताभावेति * एवं भेदधर्मिप्रतियोगिकभेदस्य भेदघटादिस्वरूपत्वमङ्गीकृत्यापि सर्वत्र स्वरूपस्यैव भेदधीगोचरत्वसम्भवादन्योन्याभावस्यैव विलोप इत्युक्तं सम्प्रति घटादिस्वरूपत्वं भेदप्रतियोगिकभेदस्य न सम्भवतीत्याशयेनाह * घटस्येवेति * भेदस्य योऽभेदस्तद्विरोधिन एव भेदभेदधीगोचरत्वात्तदभेदस्य विरोधी च घटस्येव तदभेदस्यात्यन्ताभाव एवेति न घटादेर्भेदप्रतियोगिकभेदधीगोचरत्वसम्भव इत्यर्थः । तर्हि घटादिरेव भेदात्यन्ताभावोऽस्त्वित्याशङ्क्याह * न च घटादेरिति * भेदसमानाधिकरणघटादेर्भेदस्वरूपभूताभेदात्यन्ताभावत्वानुपपत्तेरित्यर्थः । धर्म्यादौ भेदप्रतियोगिकभेदान्तराभावमङ्गीकृत्याप्याह * एवमिति * भेदधर्मिप्रतियोगिकभेदान्तराभावे घटपटप्रतियोगिकभेदयोरपि तदभावात्स्वरूपमात्रस्य चाभेदाविरोधित्वात्सर्वभेदैक्यापत्तौ तस्यासाङ्कर्य्याप्रयोजकत्वात्तदभ्युपगमो मुधेत्यर्थः । भेदधर्मिणोऽपि दुर्निरूपत्वाद्भेदे सत्यता दुर्लभेत्याशयेनाह * अपिचेति * घटभेदो यत्र प्रतीयते स एव तदाश्रय इत्याशङ्क्याह * प्रतीतेरिति * घटेपि भ्रान्त्या तद्भेदप्रतीतेः परेणापि स्वीकारात्तत्रापि तद्भेदापत्तिरित्यर्थः । तर्हि यत्र भेदः प्रमीयते स तद्धर्मीति शङ्कते * अथेति * आश्रयानिरूपणेन भेदस्य क्वापि सत्वायोगात्तत्प्रतीतिः सर्वाप्यप्रमेति वदन्तं प्रति तदाश्रयनिरूपणेन तत्प्रतीतिप्रमात्वस्य साधनीयत्वात् यत्र प्रमीयते तत्रास्तीत्युक्तेर्यत्रास्ति तत्रास्तीत्यर्थे पर्य्यवसानात् परस्पराश्रयत्वग्रस्तोक्त्या न तदाश्रयसिद्धिरित्याशयेनाह * तर्हीति * ननु पटादौ

यत्रास्ति तत्रास्त्वित्युक्तं(१)स्यात् क्वास्तीति प्रश्ने किमुत्तरं, घटेपि प्रतीयमानसम्बन्धोऽबाधित एव, न हि घटस्य तस्य वा स्वरूपं कश्चिद्बाधते एवं च सति बाध एवाप्रमा ऽविनिगमो वा, पटेऽपि नास्त्यन्यः सम्बन्धः । पटस्वरूपमिति चेत्तत्किं न कुड्यादौ । ननु तत्राप्यस्ति, तर्हि भेदप्रमाविषयवैशिष्ट्यस्याननुगतपटादिस्वरूपविशे-

घटभेदसंसर्गस्याबाधादेव तत्प्रतीतेः प्रमात्वनिश्चयान्नोक्तदोष इत्याशङ्क्य तस्य श्रुतियुक्तिबाधितत्वादबाधोऽसिद्ध इत्यभिप्रेत्य परमतं घटेपि तद्भेदसंसर्गबाधस्य वक्तुमशक्यत्वात्तत्रापि तद्भेदापत्तिरित्याह * घटेपीति * तत्र तस्याबाधितत्वमुपपादयति * न हीति * किं भेदभेदिनोः स्वरूपमेव संसर्गस्तदतिरिक्तो वा, आद्ये घटतद्भेदयोर्बाधाभावेन तद्रूपसंसर्गस्यापि प्रतीतस्य बाधो न युक्त इत्यर्थः । कथं तर्हि नायं घटाद्भिन्न इति बाध इत्याशङ्क्यार्थाभावात् स एवाप्रमा स्यादित्याह * एवं च सतीति * वैपरीत्यं किं न स्यादित्याशङ्क्यान्यतरप्रमात्वे नियामकाभावात् भेदधर्मिनिर्णयो दुर्लभ इत्याह * अविनिगमो वेति* द्वितीयमपवदति *पटेपीति* घटे घटभेदस्य तदुभयातिरिक्तसम्बन्धोपगमे तस्यापि घटभेदाश्रयतया सम्बन्धान्तरमिति सम्बन्धानवस्थापत्तिरतिरिक्तसम्बन्धस्य द्रव्याद्यन्यतमत्वायोगेनासम्भवश्चेति भावः । ननु पटे तदतिरिक्तसंसर्गाभावेपि पट एव घटभेदसंसर्गः स च घटे नेति तत्र तद्धीरप्रमेति शङ्कते *पटस्वरूपमिति * पटस्वरूपस्य घटभेदसंसर्गत्वे कुड्यादौ तदभावात्तत्र घटभेदो न स्यादिति गूढाभिसन्धिर्दूषयति * तत्किमिति * अभिसन्धिमजानानः कुड्यादिस्वरूपमपि तत्र तत्संसर्ग इति शङ्कते * नन्विति * अभिसन्धिमुद्घाटयति * तर्हीति * तत्तदनन्तस्वरूपस्य घटभेदसंसर्गरूपत्वे घटेपि तत्प्रतीतेरविशेषात्तस्य तद्रूपत्वं केन वारणीयमिति न तद्भेदस्य व्यवस्थिताश्रयसिद्धिरित्यर्थः । ननु घटेपि

(१) तत्रास्तीति खपु० पा० ।

षत्वे घटेपि तथा ज्ञानं तदबाधितं न हि तत्र पटादिस्व-रूपमेव तद्विषयः। न च घटातिरिक्तस्वरूपं तत्संसर्गः, अतिरेकस्योपलक्षणत्वे स एव दोषः विशेषणत्वे च न स्वयमेव संसर्गः, घटेपि तत्प्रतीतेर्बाधप्रसङ्गादित्युक्तम्। अन्यश्चेत्तस्यापि नियताधिकरणसंसर्गो न स्वयं उक्त-दोषात्। न वा प्रथमातिरेकः नियम्यनियामकत्वायोगात्। अपरश्चेत्तदेवानन्त्यम्। तत्र च प्रथमस्य कस्य चित्संसर्गा-भावे तदधीनसंसर्गाणामन्येषां न स इत्यसंसृष्टा एव सर्वे

पटादिस्वरूपभूत एव भेदसंसर्गः प्रतीयते स कथं तत्राबाधित इत्या-शङ्क्य तत्प्रतीतेः पटाद्याकारत्वाभावान्नैवमित्याह * न हीति * त-र्हि घटभिन्नत्वेनानुगतं पटादिस्वरूपं तत्र घटभेदवैशिष्ट्यमित्याश-ङ्क्याह * न च घटेति * किं घटभेदस्तत्संसर्गस्योपलक्षणं विशे-षणं वा, आद्ये वस्तुमात्रस्य तेनोपलक्षितत्वात् घटेऽपि तत्संस-र्गः स्यादिति प्रागुक्तदोषापत्तिरित्याह * अतिरेकस्येति * द्वि-तीये घटभेदसंसर्गस्य विशेषणीभूतोयो भेदः स किं संसर्गि-भेद एव ततोऽन्यो वा, नाद्य इत्याह * न स्वयमिति * आ-त्माश्रयत्वापत्त्या स्वस्य स्वनियामकत्वायोगादित्यर्थः। दोषान्तर-माह * घटेपीति * प्रतीतिबलादेव घटस्वरूपस्यापि तद्भेदवत्तया तत्संसर्गरूपत्वस्य दुष्परिहरत्वाद्विशेषणवैयर्थ्यमिति भावः। संस-र्गविशेषणीभूतभेदः संसर्गिभेदादन्य इति पक्षे तस्यापि घटभेदत्वा-त्तत्संसर्गविशेषणतया तन्नियामकः किं स एव भेदः उत प्रथम स्तृ-तीयो वा, आद्ये प्रागुक्तात्माश्रयादिदोषापात इत्याह *अन्यश्चेदिति* द्वितीये परस्पराश्रयत्वापत्तेरुभयोरप्यविनिगम्यत्वमित्याह * न वेति * तृतीये तस्यापि संसर्गभूतवस्तुविशेषणतयाऽन्यो भेदस्तस्या-प्यन्यः कल्पनीय इति प्रागुक्ताप्रामाणिकानन्तघटभेदापात इत्याह * अपरश्चेदिति * अनन्तभेदपक्षेपि ततद्वित्वपक्ष इवाविनिगम्यत्व-

स्युरिति तद्विशिष्टज्ञानं घट इव सर्वत्र भ्रान्तिस्तत्रापि वा प्रमा स्यात्सर्वेषां तुल्यकालत्वात् को भेदः कस्य संसर्ग इत्यविनिगमः, न हि सर्वः सर्वस्य संसर्गो भवति नियम्यस्य-नियामकत्वायोगात् । न चैवमनन्तभेदाः केन चिदनुभूयन्ते । एतेन घटत्वात्यन्ताभावस्तद्विशिष्टो वा तदधिकरणभेदसंसर्ग इति निरस्तम् । तुल्यदोषत्वात् । किं च तस्यैतस्माद्भेदसंशयव्यतिरेकनिश्चयदशायामस्य ततो न भेदनिश्चय इति सर्वजनीनमिति तस्यैतद्भेदनिश्चयोऽस्य त-

मपि तुल्यमित्याह * तत्र चेति * पूर्वपूर्वभेद उत्तरोत्तरनियामक इत्याशङ्क्य सर्वेषामनादित्वेन समकालीनत्वान्न पूर्वापरभावोपीत्याभिप्रेत्याह * सर्वेषामिति * तर्ह्येकस्य तदतिरिक्ताः सर्वे संसर्गरूपा इत्याशङ्क्य तेषामपि संसर्गे नियामकप्रमाणाभावात्कस्यापि न नियताश्रयसिद्धिरित्याह * न हीति * एकस्यापि भेदस्य भेदसंसर्गविशेषणतयाऽननुभवात्तद्रूपानन्तभेदकल्पनमप्रामाणिकत्वादयुक्तमित्याह * न चैवमिति * तदुक्तं खण्डनकारैः 'प्राग्लोपाविनिगम्यत्वप्रमाणापगमैर्भवेत् । अनवस्थितिमास्थातुरचिकित्स्या त्रिदोषतेति' । घटातिरिक्तो घटभेदाश्रय इति पक्षोक्तं दोषजातं पक्षान्तरेष्वतिदिशति *एतेनेति* तुल्यदोषत्वादिति * घटत्वात्यन्ताभावाश्रयस्यापि नियतस्यासम्प्रतिपन्नत्वात्तदाश्रयः क इति पृष्टे यदि घटभिन्नस्तदाश्रय इति ब्रूयात्तदा परस्पराश्रयापत्तिः घटत्वरहितस्तदाश्रय इत्युक्तौ चात्माश्रयत्वापत्तिरभावान्तरस्वीकारे च तस्य तस्याश्रयविशेषणतयाऽन्यान्याभावापेक्षणादनवस्थाऽविनिगमनाद्यापत्तिरित्यर्थः । एवं भेदतद्धर्मिप्रतियोगिनां दुर्निरूपत्वं प्रसाध्य भेदज्ञानमपि दुर्घटमित्याह * किं चेति * पूर्वदृष्टस्य चैत्रस्य पुरःस्थितान्मैत्राद्भेदसंशये वाभेदनिश्चये वा मैत्रस्यापि ततो भेदानिश्चयाच्चैत्रस्य मैत्राद्भेदनिश्चयो मैत्रस्य चैत्राद्भेदनिश्चये हेतुर्वाच्यः तत्र ता-

तो भेदनिश्चये कारणं यत्संशयव्यतिरेकनिश्चयौ यत्र प्रतिबन्धकौ तन्निश्चयस्य तद्धेतुत्वात्।एवं तस्यैतस्माद्भेदनिश्चयस्य ततो भेदनिश्चयो हेतुरित्यन्योन्याश्रयः।न च घटधर्मिकभेदः परमते तत्प्रतियोगिको भवति, येन तस्य ग्राह्यतया तत्संशयादिरप्रतिबन्धकः स्यात् अयं स न भवतीति ज्ञानस्य विशेष्यतया विशेषणतया वा तद्भेदविषयत्वायोगाच्च तस्येन्द्रियासन्निकृष्टत्वात् अयं स भवति न वेति संशयदशायां नियमेन स एतस्माद्भिन्न इति ज्ञानादर्शनेन

किंकसंमतं न्यायमाह * यत्संशयेति * व्याप्तिसंशयादेरनुमितिप्रतिबन्धकत्वाद्व्याप्तिनिश्चयस्यानुमितिहेतुत्वं हि परैरुपेयते एवमत्रापि स्वीकार्यमित्यर्थः । ततः किं तत्राह *एवमिति* मैत्रस्यापि चैत्राद्भेदसंशयादिदशायां चैत्रस्य मैत्राद्भेदानिश्चयेन मैत्रस्य चैत्राद्भेदनिश्चयः चैत्रस्य मैत्राद्भेदनिश्चये हेतुर्वाच्य इत्यन्योन्याश्रयः सर्वत्रोक्तरीत्या स्यादित्यर्थः।ननु कुम्भस्य कुड्याद्भेदसंशयः कुड्यस्य कुम्भाद्भेदनिश्चये न प्रतिबन्धकः तस्य ग्राह्यसंशयतया वन्ह्यादिसंशयवत्तन्निश्चयप्रतिबन्धकत्वायोगादित्याशङ्क्य संशयनिश्चयविषयभेदयोः परमते भिन्नत्वान्मैवमित्याह * न च घटेत्यादिना * किं च सन्निहितधर्मिकभेदनिश्चयस्य तत्प्रतियोगिकव्यवहितधर्मिकभेदो न विषयस्तज्जनकेन्द्रियासन्निकर्षात्ततस्तत्संशयस्य ग्राह्यसंशयत्वाभावात् प्रतिबन्धकत्वं युक्तमित्याशयेनाह * अयं स नेति * ननु घटधर्मिकभेदसंशये तत्प्रतियोगिकभेदानिश्चयो दोषादेव न तत्प्रतिबन्धादित्याशङ्क्य दोषस्यैतत्संशये एवोपक्षीणत्वात्तत्प्रतिबन्धादेवेतरानिश्चयो वक्तव्य इत्याशयेनाह * अयं स भवतीति * ननु प्रतियोगिनि धर्मिभेदनिश्चये धर्मिणि प्रतियोगिभेदनिश्चयो न हेतुर्येनान्योन्याश्रयः स्यात्किन्तु धर्मितावच्छेदकाभावनिश्चय एव हेतुरित्याशङ्क्योभयसंशयेपि भेदानिश्चयादविशेषादुभयनिश्चयोपि तद्धेतुर्वाच्य इत्या-

प्रतिबन्धकत्वानुभवात् । न च प्रतियोगिनि धर्मितावच्छेदकाभावनिश्चय एव तद्धेतुरिति वाच्यम् । विनिगमकाभावात् मूलवृक्षेऽग्रत्वाभावनिश्चयेपि अग्रवृक्षे मूलवृक्षभेदानिश्चयेनाभेदभ्रमदशायां तस्मिन्सत्यपि तददर्शनात् अभेदनिश्चयस्य तत्प्रतिबन्धकत्वे च भेदसंशयस्यापि तथात्वाद्भेदज्ञानस्यापि हेतुत्वं वाच्यम् । तदत्यन्ताभावज्ञानमपि तदाश्रयभेदज्ञानं विना न सम्भवति

ह * न च प्रतियोगिनीत्यादिना * किं च वृक्षद्वयस्याभेदभ्रमदशायां मूलत्वावच्छिन्नैकवृक्षस्याग्रत्वावच्छिन्नापरवृक्षस्य च परस्परभेदधर्मिताद्यवच्छेदकमूलत्वाग्रत्वयोरभावस्यान्योन्यस्मिन्निश्चयेपि तयोर्भेदनिश्चयादर्शनान्न धर्मितावच्छेदकाद्यभावनिश्चयो भेदनिश्चये हेतुरित्याह *मूलवृक्ष इति * वृक्षयोर्धर्मितावच्छेदकाद्यभावनिश्चयेपि भेदनिश्चयो न जायते अभेदभ्रमस्य तत्र प्रतिबन्धकत्वादित्याशङ्क्य तर्हि धर्मितावच्छेदकाभावनिश्चयस्याप्रयोजकत्वात् घटधर्मिकभेदनिश्चये तत्प्रतियोगिकभेदसंशयादेः प्रतिबन्धकत्वमावश्यकमिति तन्निश्चयस्तन्निश्चये हेतुर्वाच्य इति परस्पराश्रयो दुष्परिहर इत्याह * अभेदनिश्चयस्येति * किं च प्रतियोगितावच्छेदकाद्यभावनिश्चयो भेदनिश्चये हेतुरिति पक्षे पटे घटत्वाभावः प्रथमं ज्ञातव्यः तज्ज्ञानं च तत्प्रतियोगितावच्छेदकघटत्वज्ञानेन विना न भवति सा ततोपि प्राक् ज्ञातव्या सा च घटेतरावृत्तित्वे सति सकलघटवृत्तित्वरूपा पटादेर्घटेतरत्वाज्ञाने दुर्ग्रहेति ततोपि प्राक् घटभिन्नतया पटादिर्ज्ञातव्य इति चक्रकापत्तिरित्याशयेनाह * तदत्यन्तेति * किं च भेदप्रतियोगितावच्छेदकस्य तद्धर्मिवृत्तित्वाभावसंशयादिदशायां प्रतियोगिनि धर्मितावच्छेदकाभावानिश्चयात् धर्मिणि प्रतियोगितावच्छेदकाभावनिश्चयः प्रतियोगिनि धर्मितावच्छेदकाभावनिश्चये हेतुर्वाच्यः एवं धर्मिणि प्रतियोगितावच्छेदकाभावनिश्चयेपि प्रतियोगिनि धर्मितावच्छेदकाभावनिश्चयो हेतुर्वाच्य इति परस्पराश्रयान्न कोप्य-

घटत्वतादेस्तदधीननिरूपणत्वात् । प्रतियोगितावच्छेदकस्यैतद्वृत्तित्वाभावानिश्चयदशायां प्रतियोगिन्येतद्धर्माभावनिश्चयाच्च । ननु माभूदयं नियमः अप्रतिबन्धदशायां प्रतियोगिन एतद्भेदज्ञानं विनैवास्य तद्भेदज्ञानं सम्भवत्विति तन्न।एवं सति व्याप्त्यादिज्ञानस्याप्यनुमित्यहेतुत्वप्रसङ्गात् प्रतिबन्धकसंशयादिस्थले निश्चयाभावस्याभावः सिद्ध्येदिति कुतस्तदधीननिर्णय इत्याशयेनाह * प्रतियोगिनेति * ननु यत्र यद्धर्मिकभेदादिनिश्चयस्तत्प्रतियोगिकभेदादिसंशयादिना प्रतिबद्धस्तत्रैव तन्निश्चये तन्निश्चयो हेतुः स्यान्न तु सर्वभेदनिश्चयेऽयं नियमः ततश्च नादृशप्रतिबन्धाभावदशायां घटधर्मिकपटभेदज्ञानं विनैव पटे घटप्रतियोगिकभेदज्ञानसम्भवात्कथमन्योन्याश्रयतेति शङ्कते * ननु माभूदिति * संशयादिप्रतिबद्धभेदनिश्चयत्वेन सन्दिग्धादिगोचरनिश्चयजन्यत्वे गौरवाद्भेदज्ञानमात्रे स हेतुर्वाच्य इति नोक्तदोषपरिहार इति दूषयति * तन्नेति * विपक्षे दण्डं पातयति * एवं सतीति * उक्तरीत्या व्याप्तिनिश्चयोपि तत्संशयादिप्रतिबद्धानुमितिं प्रत्येव हेतुः स्यादिति तस्यानुमितिमात्रहेतुत्वं पराभिमतं न स्यादित्यर्थः । किं च यद्गोचरसंशयादि यत्र प्रतिबन्धकं तद्गोचरनिश्चयाभावोपि नियामकाभावात्तत्र प्रतिबन्धको वाच्यः ततश्च तद्धर्मिकभेदाद्यनिश्चयस्य तत्प्रतियोगिकभेदादिनिश्चयमात्रे प्रतिबन्धकत्वमिति सर्वत्र तन्निश्चये तन्निश्चयो हेतुः स्यात् तथा चोक्तपरस्पराश्रयत्वं दुर्वारमित्याशयेनाह * प्रतिबन्धकेति * किं च स्तम्भात्कुम्भस्य भेद इति प्रतियोगित्वादिविशिष्टस्तम्भादिनिरूप्यो भेदः प्रतीयत इति सर्वजनीनं अन्यथा स्तम्भादाववधित्वादिविषयपञ्चम्यादिप्रयोगायोगात् ततश्च भेदज्ञानात्प्राक् स्तम्भे तत्प्रतियोगित्वं ज्ञातव्यं तच्च भेदनिरूपितमिति ततः प्राग्भेदो ज्ञातव्य इति विधान्तरेण परस्पराश्रयमाह * एवमिति * ननु प्रतियोगितावच्छेदकज्ञानमेव भेदज्ञाने कारणं न प्रतियोगित्वज्ञानमिति नोक्तदोष इत्याशङ्क्याह * प्रतियोगित्वेति * परमते विशेषणज्ञान

पि सत्वेन तस्यापि विनिगमकाभावेन प्रतिबन्धकत्वात् । एवं भेदनिरूपकप्रतियोगित्वादिज्ञानस्यापि भेदज्ञानाधीनतयाऽन्योन्याश्रयः प्रतियोगित्वज्ञानं च विशेषणज्ञानतया कारणं प्रतियोगित्वांशे ज्ञानातिरिक्तसन्निकर्षाभावादपि परमते तत्कारणं क्लृप्तकारणाभावेन कार्य्यं स्वप्नरथादिवन्मायिकमेव प्रतियोगिनो भेदाज्ञानदशायां च तन्न ज्ञायते इति भेदज्ञानन्तत्र कारणम् । अपि च घटात्पटो भिन्न इत्यत्र मत्वर्थो भाति घटस्य भेद इत्यत्र षष्ठ्यर्थः तदुभयभानं च सम्बन्धिनोर्भेदज्ञानाधीनं तदज्ञानदशायां नियमेन तदप्रतीतेः । न च वस्तुसच्छेदसत्वे-

स्य विशिष्टज्ञानहेतुत्वोपगमात्प्रतियोगित्वस्य च भेदज्ञाने प्रतियोगिविशेषणतया प्रतीतेस्तज्ज्ञानमपि तत्कारणं वाच्यमित्यर्थः । भेदज्ञानात्प्राक् तत्प्रतियोगित्वज्ञानं वक्तव्यमित्यत्र हेत्वन्तरमाह * प्रतियोगित्वांश इति * व्यवहितप्रतियोगिकभेदसाक्षात्कारे प्रतीयमानप्रतियोगितद्विशेषणांशे ज्ञानातिरिक्तेन्द्रियप्रत्यासत्तेरयोगात्तत्प्रत्यासत्तितया तज्ज्ञानं प्राग्वक्तव्यमिति परस्पराश्रयात् न भेदसिद्धिरित्यर्थः । कथं तर्हि सर्वेषां भेदप्रतिभास इत्याशङ्क्य स्वप्ने रूपादिप्रतिभासवत्साक्षिमात्रेण मिथ्याभेदप्रतिभासोपपत्तिरित्याह * क्लृप्तेति * प्रतियोगित्वज्ञानस्य भेदधीहेतुत्वेऽपि कथं परस्पराश्रयत्वमित्याशङ्क्य सिंहावलोकनन्यायेनोपपादयति * प्रतियोगिन इति * धर्मिणः सकाशात्प्रतियोगिनोभेदाननुभवे तत्प्रतियोगित्वानुभवाभावात्तस्य च भेदनिरूप्यत्वाद्भेदज्ञानं तज्ज्ञाने हेतुरिति परस्पराश्रयत्वमित्यर्थः । एवं परमते परस्पराश्रयत्वापत्त्या भेदप्रमां निराकृत्यानवस्थापत्त्यापि तां निराकरोति * अपि चेति * घटो भिन्न इति वा घटस्य भेद इति वा भेदप्रतिभासो धर्मिसम्बन्धि-

वापेक्षिता, तदभावेपि तदज्ञानदशायां तत्प्रीतेः तत्सत्वेपि तदज्ञानदशायां यमजयोस्तदप्रतीतेश्च तदज्ञानातिरिक्त-दोषाभावात् एवं विशेषणविशेष्यभावज्ञानमपि तदधीन-मन्यथा विरुद्धयोर्भानासम्भवात् तथा च भेदज्ञानेऽपि भेदज्ञानाऽन्तरमपेक्षणीयमिति तद्भेदज्ञानाय भेदान्तरा-पेक्षायामनवस्थेत्यलं पिष्टपेषणेन। एतेन स्वरूपभेदोपि निरस्तः भेदस्य विशेषणविशेष्यभावतयैव प्रतीतेस्तत्र

तयैव भेदमवगाहते तद्धेतुत्वेन च भेदस्य धर्मिणो भेदज्ञानं वाच्यं तत्र भेदज्ञानाभावे सम्बन्धित्वेन ज्ञानाभावरूपं व्यतिरेकं गमकमाह * तदज्ञानेति * सम्बन्धिनोर्भेदसत्त्वैव सम्बन्धज्ञाने ऽपेक्षिता न तु तज्ज्ञानं गौरवादित्याशङ्क्याह * न चेति * बिम्बप्रतिबिम्बादौ भेद-सत्ताभावेपि तज्ज्ञानादेव सम्बन्धधीदर्शनात्सदृशयोर्यमजयोः स-त्यपि भेदे तज्ज्ञानाभावे सम्बन्धज्ञानाभावाच्च तज्ज्ञानमेव तद्धेतुर्वा-च्यमित्यर्थः। ननु यमजयोः सादृश्यदोषादभेदभ्रमात्सम्बन्धज्ञाना-भावो न भेदज्ञानादित्याशङ्क्य सत्यपि सादृश्ये भेदाज्ञानदशायां स-म्बन्धधीदर्शनात्सादृश्यं नाभेदभ्रमद्वारा तत्प्रयोजकं किं तु भेदाज्ञान-मेव भ्रमादिप्रयोजकमिति दोषतयापि तदेव वाच्यमित्याशयेनाह * तदज्ञानेति * एवं भेदस्य धर्मिसम्बन्धितयैव ज्ञानात्तद्धेतुया प्रा-ग्भेदभेदिनोर्भेदो ज्ञातव्य इत्युक्त्वा भेदतद्धर्मिणोर्विशेषणविशेष्यभावेन प्रतीतिनियमादपि तद्धेतुतया तयोर्भेदः प्राक् ज्ञातव्य इत्याह * एवमि-ति * विशेषणविशेष्ययोर्भेदज्ञानाभावेपि तद्भावावगमः किं नस्यादि-त्याशङ्क्याह *अन्यथेति* अगृहीतभेदयोर्विशेषणविशेष्यभावज्ञानाद-र्शनात्तयोर्गुणत्वप्रधानत्वभूतयोर्विरुद्धतयैकत्रासम्भावितयोर्विशेषण-विशेष्यभेदग्रहं विना दुर्ग्रहत्वाच्च तत्ज्ञानं विशेषणभावादिज्ञाने हेतुरि-त्यभ्युपेयमित्यर्थः। एवं भेदग्रहे तद्धर्मिभेदग्रहापेक्षामुपपाद्य तस्यापि सम्बन्धित्वादिरूपेणैव धर्मिनिरूप्यभेदगोचरत्वात्तद्धेतुतया तयोर्भे-

चोक्तदोषात्। अपिचाभेदविरोधिपदार्थस्यैव भेदपदात्प्रतीतेः।न च घटादिस्वरूपं भेदः,(१)पटादिमात्रात्मकतदभेदविरोधितदुभयसामानाधिकरण्यधर्मधर्मिभावसत्वात्।न च परस्य घटपटादिनिरूपितोऽन्यो भेदो स्ति, सप्रतियोगि-

द्धज्ञानान्तरं वाच्यमित्यनवस्थापत्त्या नैकमपि भेदज्ञानं सिद्ध्येदित्याह * तथा चेति * ननु घटे पटभेदस्य तद्भेदस्य वा प्रथमं स्वरूपेण निर्विकल्पकगोचरस्य पश्चाद्विशेषणाभावादिना सविकल्पप्रतिभासोपपत्तेः कुतोऽनवस्थेत्याशङ्क्याह * अलमिति * तादृशनिर्विकल्पकस्यैवाप्रामाणिकत्वात् परैरप्यभावे निर्विकल्पकगोचरत्वस्यानभ्युपेतत्वाद्धर्म्यादिनिरूप्यस्य तदयोगाच्चैतादृशं समाधानं काशकुशावलम्बनतुल्यमिति तन्निराकरणाय न प्रयत्यत इति भावः। एवं धर्म्यादिनिरूप्यधर्मभेदं निरस्य प्राभाकरादिसम्मतं स्वरूपभेदं निराकरोति * एतेनेति * स्वरूपभेदपक्षे भेदानवस्थाभावेऽप्युक्तरीत्या तज्ज्ञानानवस्थाया दुष्परिहरत्वात् सोपि पक्षो न युक्त इत्यर्थः । किं चाद्वैतवादिभिरपि घटादिस्वरूपमात्रस्वीकारात्तत्र भेदपरिभाषा न तद्विरोधिनीत्यभिप्रेत्य तद्विरोधिभेदपदार्थमाह * अपि चेति * तर्हि घटादिस्वरूपमेव पटाद्यभेदविरोधितया तद्भेद इत्याशङ्क्य किं पटाद्यभेदस्तत्स्वरूपमेव तदन्यो वेति विकल्प्य नाद्यो भेदादि(२)भावेनाभिमतानां स्वरूपाणां सामानाधिकरण्यादिदर्शनेन विरोधाभावादित्याह *न च घटादीति* न च परस्परानात्मत्वं विरोध इति वाच्यम्। तथा सति भिन्नस्वरूपं भेद इत्युक्तं स्यात् भिन्नत्वं चाद्याप्यसिद्धमित्यात्माश्रयापत्तिरिति भावः । द्वितीयं निराकरोति * न च परस्येति* एवं पटाद्यभेदविरोधित्वानिरूपणेन घटादिस्वरूपस्य भेदत्वानुपपत्तिमुक्त्वा प्रकारान्तरेण तामाह *सप्रतियोगीति* न च सर्वस्य भावाभावात्मत्वादेकत्र सप्रतियोगित्वादेरविरोध इति वाच्यम्।तस्याप्रतिपन्नत्वान्निरपेक्षभावस्वरूपस्यैवाभावत्वे तत्सत्तायां परापेक्षायोगेन स्यादस्ति स्यान्नास्तीत्याद्यनेकान्तवादापत्तेश्चेति भावः। स्वरूप-

( १ ) द्यभावेनेति खपु० पा० । ( २ ) भेद इति कपु० नास्ति ।

कभेदस्य निष्प्रतियोगिस्वरूपत्वानुपपत्तेः घटभेदयोर्धर्मधर्मिभावानुपपत्तेश्च तस्मात्परपक्षे भेदप्रतीतिर्निर्विषयैव । सिद्धान्ते तु कथञ्चित्सा सविषया तथाहि इदमिदं नेति प्रतीतिस्तयोरेवेदमिदमिति प्रतीतपदार्थद्वयनिरूपिताभेदाभावं विषयीकरोति, नञर्थस्य तत्सम्बन्धिप्रतियोगिकत्वात् सम्भवति च तदुभयाभेदः, अस्ति हि घटपटादौ

स्यैव भेदत्वे घटो भिन्न इति शब्दप्रत्यययो राहोः शिर इति वद्वैशिष्ट्यरूपालम्बनाभावादप्रामाण्यापात इत्यस्मादिष्टासिद्धिरित्याह * घटभेदयोरिति * धर्मरूपस्य स्वरूपभूतस्य वा भेदस्यासम्भवे कथं तत्र प्रतीतिरित्याशङ्क्य तां स्वमतेनोपपादयितुं वास्तवभेदवादिमते तदनुपपत्तिमुपसंहरति * तस्मादिति * वास्तवाद्वैतमते घटपटादिनिरूपिताभेदप्रतियोगिकानिर्वचनीयभेदविषयतया तत्प्रतीतिरुपपद्यते इत्याह * सिद्धान्त इति * भेदस्याभेदप्रतियोगिकत्वे घटादेस्तत्प्रतियोगित्वेन प्रतीतिः कथमित्याशङ्क्य पदद्वयसामानाधिकरण्यार्थाभेदस्यैव नञर्थभेदप्रतियोगित्वानुभवात्तन्निरूपकतया तत्र घटादिप्रतीतिरन्यथाऽसङ्गेत्याशयेनाभेदाभाव एव भेदप्रतीतेर्विषय इत्युपपादयति *तथा हीत्यादिना *तत्सम्बन्धीति* नञ्सम्बन्धि यत् पदद्वयसामानाधिकरण्यं तदर्थप्रतियोगिकत्वादित्यर्थः । घटपटाभेदस्यैव तुच्छत्वात्तत्प्रतियोगिकभेदोपि तथैवेति कथं तत्प्रतीतिः सविषयेत्याशङ्क्याह * सम्भवतीति * तर्हि भेदाभेदमतादभेदापात इत्याशङ्क्य घटाधिष्ठानसद्रूपाद्वितीयात्मचैतन्यस्यैव प्रसङ्गे सद्बुद्धिगोचरवास्तवस्वरूपत्वेन श्रुतिन्यायसिद्धत्वात्तदतिरेकेण दृश्यस्य स्वतः सत्वाभावाच्च तदेव सर्वाभेद इत्यभ्युपगमान्न मतान्तरप्रवेश इत्याशयेन घटाद्यनुस्यूतमेकं सद्वस्तूपपादयति * अस्ति हीति * सर्वत्रानुगतसद्बुद्धिगोचरसद्व्यक्तेरेकत्वे भिन्नस्य घटादेस्तद्रूपत्वायोगात्सद्विलक्षणस्य तस्य रजतादिवत्सति कल्पितत्वं सिद्धं नैवमात्मनः कल्पितत्वं शक्यं वक्तुं आत्मन्येव सर्वस्य बाधश्रवणेन तस्यै-

सदिदं सदिदमित्यनुवृत्तसत्स्वरूपानुभवः स च घटाद्यधिष्ठानमात्मैवेदं सर्वं इति श्रुतिसिद्धात्मरूपं चैतन्यम् । न च सत्ता सद्बुद्धिविषयो नात्मेति वाच्यम् । सदेव सोम्येदमग्र आसीदिति श्रुत्याऽसम्भावितबाधतया च चैतन्यस्वरूपसद्व्यतिरिक्तसत्तायां प्रमाणाभावात् तस्य च घटाद्युपादानतया श्रुतिसिद्धत्वेन घटाद्यनुगततया तस्य तत्र सद्बुद्धिविषयत्वोपपत्तेः । न च भावार्थः सत्ता कथं प्रकृत्यर्थः स्यादिति वाच्यम् । स्वार्थेऽपि प्रत्ययोपपत्तेः । अन्यथा परमते प्रमेयत्वं प्रमेयं न स्यात् सत्त्वस्यापि

व सर्वाधिष्ठानसद्रूपत्वावधारणात् तस्य दृश्यत्वे सत्यत्वायोगादात्मैव सच्चिद्रूपोऽभ्युपेय इत्याह *सच्चेति* सदाकारानुगतबुद्धेर्गवादिबुद्धिवज्जातिविषयत्वसम्भवात्सद्व्यक्त्यैक्यासिद्धिरित्याशङ्क्याह * न चेति * गवादिव्यक्तीनां प्रत्यक्षादिना भेदस्य निश्चितत्वात्तदेकव्यक्तेः सत्वावधारकागमाभावाच्च तत्रानुगतधीनिर्वाहाय व्यक्त्यतिरिक्तजातिकल्पना युक्ता, प्रकृते तु सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्यादिनाऽऽत्मातिरिक्तसद्व्यक्तिनिषेधात् वाचारम्भणादिश्रुत्या विकारानृतत्वाभिधानाच्च सर्वत्राधिष्ठानसदात्मानुगमादेव सद्बुद्ध्युपपत्तौ सदात्मन एव प्रपञ्चमात्रानुगतसत्तात्मत्वात्तदतिरिक्तसत्ता जातिर्द्रव्यादित्रितयमात्रवृत्तिर्न कल्पनीया प्रमाणप्रयोजनयोरभावादित्याह * सदेवेत्यादिना * ननु सदात्मैव प्रपञ्चसत्तात्मेति कथं सच्छब्दप्रातिपदिकार्थस्य तस्य भावार्थे विहिततल्प्रत्ययान्तसत्ताशब्दार्थत्वायोगादित्याशङ्क्य तदात्म्यमित्यादौ भावार्थप्रत्ययस्य भवितर्यपि प्रयोगदर्शनान्न काचिदप्यनुपपत्तिरित्याह * न चेत्यादिना * किं च प्रातिपदिकार्थस्याप्यन्यानुगततया भावप्रत्ययान्तशब्दार्थत्वमविरुद्धं इतरथा परमतेऽपि प्रमेयसत्पदार्थयोः प्रमेय-

सदात्मत्वं न स्यात् । अत एव सत्वविशिष्टमेव सदिति परास्तम् । सत्वस्य सद्भेदेऽसत्त्वापत्तेश्च । तदुक्तं वार्त्तिके- 'प्रकृत्यर्थातिरेकेण प्रत्ययार्थो न विद्यते । सत्तेत्यत्र ततः स्वार्थस्तद्धितोऽत्र भवन् भवेदिति' । तदेव च घटादि-स्वरूपं सदन्यस्य सदिति प्रतीयमानस्वरूपत्वायोगात् स्वरूपमेव चाभेदः । एवं प्रपञ्चमात्रस्यात्मस्वरूपमात्र-मभेदः एवं च घटपटादिनिरूपिताभेदात्यन्ताभावोऽवि-

त्वसत्वशब्दार्थत्वं न स्यादित्याशयेनाह * अन्यथेति * आत्मस्वरूपस्यैव सत्तारूपत्वे तस्य सच्छब्दार्थत्वं न स्यात्सत्वविशिष्टस्यैव तदर्थत्वादित्याशङ्क्य पराभिमतसत्ताया अपि सत्पदार्थत्वोपगमान्नै-वमित्याह * अत एवेति * सत्वमपि सत्वविशिष्टत्वात्सन्नेति वदन्तं प्रत्याह * सत्वस्येति * सत्वस्यासत्वे तद्वैशिष्ट्यस्य काप्यसम्भवात्सर्वमसदेव स्यादिति भावः । सदात्मचैतन्यमेवाधिष्ठानतयाऽनुगतं सत्ता न तदतिरिक्तेत्येतत्सुरेश्वराचार्यैरप्युक्तमित्याह * तदुक्तमिति * एवं चिदात्मन एव सद्रूपत्वमुपपाद्य तत्स्वरूपमेवाधिष्ठानतया घटाद्यनुगतं सन् घट इत्यादौ घटाद्यात्मतया भासमानं घटादेः पारमार्थिकस्वरूपमिति निगमयति *तदेव चेति* आत्मन एव सद्रूपेण घटादिस्वरूपत्वसाधनफलमाह * स्वरूपमेव चेति* परैरपि तत्स्वरूपमेव तदभेद इति स्वीकारात् 'घटादिवास्तवस्वरूपात्मैव तदभेद इत्यर्थः । एवं घटपटाभेदस्तदधिष्ठानसदात्मैवेत्येतदन्यत्राप्यतिदिशति स एव सर्वत्र भेदप्रतियोगीति वक्तुम् * एवं प्रपञ्चेति* एवं सर्वत्रापि भेदप्रतियोगिनंवास्तवमभेदं प्रदर्श्य तत्प्रतियोगिकाभाव एवेदमिदं नेति प्रतीत्यालम्बनमित्याह *एवं चेत्यादिना* घटादेर्भेदप्रतियोग्यभेदनिरूपकत्वात्तत्प्रतियोगिकोटौ प्रतिभासो न प्रतियोगित्वेनेत्याशयेन घटपटादिनिरूपितेत्युक्तम् । पराभिमतान्योन्याभावं व्यावर्त्तयितुमत्यन्ताभाव इत्युक्तम् । तस्य वास्तवाभेदप्रतियोगिकस्य वास्तत्वासम्भवादनिर्वचनीयत्वमाह * अविद्ययेति *

द्वया क्लृप्तः घटपटाद्याश्रितो घटः पटो न भवतीति प्रतीयते जीवेश्वरयोरिव बिम्बप्रतिबिम्बमुखयोरिव वा स एव घटात् पटो भिन्न इत्यपि प्रतीयते उभयाश्रितविभाग इवेदमस्माद्विभक्तमिति । एवं सति यत्संशव्यतिरेकनिश्चय इत्यादिदोषोपि नावतरति ग्राह्यसंशयातिरिक्तभेदसंशयाद्यभावात् भेदश्चास्माकं साक्षिभास्य इति न तत्र प्रतियोगित्वादिज्ञानापेक्षा धर्मिप्रतियोगिस्वरूपानिरूप्यत्वाच्च नातिप्रसङ्गः धर्म्यादौ प्रमाणस्यापेक्षितत्वात् । अत

स च पराभिमतधर्मिप्रतियोगिनोरेक एवेत्याह *घटपटाश्रित इति* तद्भेदप्रतियोगिकक्लृप्तभेदप्रतिभासे स्वमतेनोदाहरणमाह *जीवेश्वरयोरिति* भेदस्योभयाश्रितत्वे घटात्पटो भिन्न इति कथमेकस्य तदवधित्वेन प्रतिभास इत्याशङ्क्य विभागस्योभयाश्रितत्वेपि एकस्य तदवधित्वेन प्रतिभासवत्तदुपपत्तिरित्याह *स एवेति* धर्मिप्रतियोगिनोर्भेदस्यैकत्वे तद्धर्मिकभेदनिश्चये तत्प्रतियोगिकभेदसंशयः परमत इव न प्रतिबन्धकः तदुभयभेदस्यैकत्वेन तत्संशयस्य ग्राह्यसंशयत्वात्ततश्च यत्संशयव्यतिरेकेत्यादिन्यायानवतारान्नात्र परपक्षोक्तान्योन्याश्रयदोषापीत्याह *एवं सतीति* ननु भेदप्रतियोगिनो घटपटाद्यभेदस्य भेदप्रतीतेः प्राक् प्रत्यक्षादिना प्रतीत्ययोगात् कथं प्रतियोगिग्रहाधीनो भेदग्रहस्तत्रापि स्यात इत्याशङ्क्याह *भेदश्चेति* तर्हि साक्षिणो नित्यत्वात सदा भेदः प्रतिभासेतेत्याशङ्क्याह *धर्मिप्रतियोगीति* यथाऽऽकाशः साक्षिमात्रभास्योपि स्वावच्छेदकालोकाद्याकारचाक्षुषवृत्तौ सत्यामेव तदभिव्यक्तसाक्षिणा भासते नान्यदा एवं प्रमाणेन भेदप्रतियोग्यभेदनिरूपकघटपटाद्यसाधारणस्वरूपोपस्थितावेव भेदः साक्षिभास्य इति न सर्वदा तत्प्रतिभासो न वा शुक्तिरजतयोर्भेदप्रतिभासप्रसङ्ग इति भावः । प्रतियोगिज्ञानं भेदज्ञाने न हेतुः तज्ज्ञानदशायामेव च भेदो

एवं समूहालम्बने भेदोऽपि भेदिभिः सहैवावभासते ।
तस्मात्तत्त्वमसीत्यादेः सत्यज्ञानसुखात्मकः ।
जीवो ब्रह्मेति संसिद्धमागमान्तविदां मतम् ॥ ११ ॥
आस्तामन्यप्रमाणत्वमभेदे सर्ववस्तुनः ।
भेदप्रमाणमेवैतदद्वैतं साधयत्यलम् ॥ १२ ॥

भातीत्यत्र गमकमाह * अत इति * धवखदिरपलाशा इत्यादिरूपस्य गृहीतविवेकानेकविशेष्यकैकज्ञानस्य समूहालम्बनत्वात् प्रतियोगिग्रहस्य विवेकग्रहहेतुत्वे तदनुपपत्तेः प्रतियोग्यादिना सहैव भेदग्रहो वाच्य इति भावः । एवं सजातीयविजातीयस्वगतभेदानां स्वरूपप्रमाणधर्मिप्रतियोग्याद्यनिरूपणेन वास्तवत्वायोगात् तत्प्रतीतिराविद्यकानिर्वचनीयभेदगोचरा इति प्रतिपादनफलमाह * तस्मादिति * जीवब्रह्मणोर्वस्तुतः सत्यज्ञानसुखात्मतया श्रुतिस्मृतिन्यायसिद्धत्वात्तद्विरुद्धरूपस्य भेदस्योक्तविधया मिथ्यात्वाच्च तदैक्यं तत्त्वमस्यादिवाक्यप्रतिपाद्यमिति ब्रह्मविदां मतमनवद्यमित्यर्थः विमलमतीनां युक्तिशूराणां श्रुतिमन्तरेणाप्यद्वैतं सुबोधमित्याशयेनोक्तविधया भेदप्रतिभास एव तत्प्रतियोगितया अद्वैतं वस्तु साधयतीत्याह * आस्तामिति * सर्ववस्तुनः सर्वस्य नामरूपात्मकप्रपञ्चस्य वास्तवं यत्स्वरूपं तस्याभेदे एकत्वे विषयेऽन्यस्य श्रुत्यादेः प्रमाणत्वमास्तां तिष्ठतु तत्परामर्शो यत्नो न कार्य इति यावत् भेदप्रमाणं तत्प्रतिभास एवायं सर्वजनीनो विचार्य्यमाणोऽलमत्यर्थमद्वैतं साधयति भेदप्रतियोगिनोऽन्यस्यानिरूपणाद्द्वयं वस्त्वेव तत्प्रतियोगीति वाच्यमित्यर्थः । एवं द्वैतापवादेनाद्वैतब्रह्मनिरूपणे निपुणाचार्य्यपरम्परागतमस्माभिरप्यनन्यथासिद्धयुक्तिभिरुपपादितं पुरुषार्थार्थिभिरापातदृष्ट्या नोपेक्षणीयं किं तु यत्नतो गुणदोषौ विचार्य्य श्रुत्यनुगुणमिदमेव वैदिकैरादरणीयमित्याह * गुरुचरणेति* गुरूणां चरणपरिचरणमहिम्नैव सकृच्छ्रवणादिनैव हृदि अन्तःकरणे गतं साक्षात्कृतं शिष्यानुकम्पया निर्गतं ग्रन्थरचनया बहिः प्रकाशितं यत्तत्वं तद्विगुणं पुरुषार्थानुपयोगि तदनुगुणं वेति वीक्ष-

गुरुचरणसकाशात् हृद्गतं निर्गतं त-
द्विगुणमनुगुणं वा वीक्षतां तत्क्षमात्मा ।
अपि विसृजति कश्चित्काचमालावमत्या
शतमखमणिमालां शारदाकाशकल्पाम् ॥ १३ ॥

इति श्रीमत्परमहंसपरिव्राजकचार्य्यश्रीमज्जगन्नाथाश्रम-
श्रीमत्पूज्यपादशिष्यश्रीमद्वेदान्तसिद्धान्तसा
राभिज्ञश्रीनृसिंहाश्रममुनिविरचितो
भेदधिकारः सम्पूर्णः ।

तां विचारयतु, कः तत्क्षमात्मा तद्विचारे क्षमः समर्थः आत्मा अन्तःकरणं यस्य सः विचारे सत्यत्र किंचिदपि वैगुण्यं नेति भावः । अत्र विचाररहितानामनपेक्षामात्रेण वैगुण्यं न सम्भावनीय-मित्यत्र दृष्टान्तमाह *अपीति* स्वच्छामिन्द्रनीलमणिमालां कश्चिद-विचार्य्य काचमणिमालाभ्रान्त्या त्यजत्यपि नैतावता सा प्राज्ञैरुपे-क्ष्यत इत्यर्थः ।

वेदान्तवृन्दविपिने विततं विशुद्धमद्वैतमार्गमपवर्गपदाधि-रोहम ।
श्रीमद्गुरूक्तनयनुन्नसमस्तशङ्कमास्थाय यान्तु पदमुत्तममस्तदोषाः ।

इति श्रीनृसिंहाश्रमश्रीचरणपरिचरणनिरतनाराय-
णाश्रमविरचिता भेदधिक्कारसत्क्रिया समाप्ता ।

श्रीगुरुर्जयति ।

समाप्तो भेदधिक्कारः सव्याख्यः ।

---

# BENARES SANSKRIT SERIES;

A

## COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M. A., C. I. E.

AND

G. THIBAUT, PH. D.

*No. 86 & 92.*

---

# भेदधिक्कारः

श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमन्नृसिंहाश्रममुनिप्रणीतः ।

तदीयशिष्यश्रीनारायणाश्रमविरचितभेदधिक्कार-

सत्क्रियाख्यव्याख्यासनाथः ।

श्रीमदप्पयदीक्षितकृत उपक्रमपराक्रमश्च ।

काशीस्थद्राविडोपाह्व पण्डितलक्ष्मणशास्त्रिणा विषमपदटिप्पणीपूर्वकं संशोधितः ।

# BHEDADHIKKÂRA

BY,

*SREE NRISIMHASRAMAMUNI,*

*With a Commentary by the Author's Pupil*

Sree Narayanasrama.

And Upakaramaparkrama,

BY APPAYYADIKSHITA.

EDITED AND ANNOTATED BY

PANDIT LAKSHMANA SASTRÎ DRÂVIDÂ,

PROFESSOR OF VEDÂNTA, CENTRAL HINDU COLLEGE, BENARES.

BENARES.

*Published by the Proprietors Messrs. Braj B. Das & Co.,*

AND SOLD BY H. D. GUPTA

*Secretary, Chowkhamba Sanskrit Book Depot.*

---

Printed at the Vidyâ vilâs Press & Tara Printing Works,

BENARES.

---

1904.

॥ श्रीगुरुः शरणम् ॥

## ॥ सव्याख्यभेदधिक्कारभूमिका ॥

अथैष उपक्रम्यते भेदधिक्कारनामा ग्रन्थो मुद्रयित्वा प्रकाशयितुम् ।

अस्य किल प्रणेता श्रीमदद्वैतविद्याचार्यश्रीनृसिंहाश्रमस्वामियतीन्द्रो द्राविडदेशीयः श्रीनीलकण्ठशिवावतारश्रीमदप्पयदीक्षितेन्द्राणां गुरुभूतः स्वसमये महामान्योविराजते स्मेति सङ्गिरन्ते तद्देशीयाः । परमसौ कस्मिन् काले कुत्र समजायत तुरीयाश्रमस्वीकरणात्प्राक् किंनामधेय आसीदित्यादि सुव्यक्तं न विज्ञातुं पार्यते केवलमप्पयदीक्षितगुरुभूतत्वकथनेन तत्समकालिक एव स्यादिति निश्चीयते । एतत्प्रणीतग्रन्थास्तु भेदधिक्कारविवरणभावप्रकाशिकावेदान्तसारटीकाप्रभृतयः समुपलभ्यन्ते तेषु भेदधिक्कारो भेदवादिसमुत्प्रेक्षितातिजटिलतर्कशतसमुत्सारणविचक्षणः समूलघातं भेदवादिपक्षमुपघ्नन् भवति विपश्चितां परमादरभूमिः तथैतस्य टीकाऽपि एतदीयशिष्यनारायणाश्रमविरचिता भेदधिक्कारसत्क्रियाख्या मूलार्थविशदीकरणपटीयसी विराजते तमिमं सव्याख्यं भेदधिक्कारमेकदा कृतमुद्रणमपि अशुद्धिबहुलमस्पष्टाक्षरमवलोक्य दूयमानमानसैर्मदीयमित्रैर्भृशमुत्साहितोऽहं श्रीमत्परमहंसपरिव्राजकपरिवृढश्रीमत्तारकाश्रमस्वामिप्रतिष्ठापितपुस्तकालयस्थं सव्याख्यभेदधिक्कारपुस्तकं नूतनलिखितमपरं च मदीयं परमशुद्धमतिप्राचीनमिति पुस्तकद्वयसाहाय्येन यथामति संशोध्य क्वचित्क्वचिट्टिप्पणया संयोज्य प्रकाशितवानास्मि एतद्ग्रन्थरत्नम् । तदत्र महति कार्ये मादृशाल्पज्ञजनमतिमान्द्यात् सीसकाक्षरयोजकदोषेण वा समुपजाता अशुद्धीस्समुपेक्ष्य गुणगृह्या विपश्चितो विद्वांसो दृष्टिप्रसादं करिष्यन्तीत्याशास इति शुभम् ॥

| | |
|---|---|
| कार्तिक शु० ५ शनौ | जटापाठ्युपाख्यो |
| सं १९६१ | लक्ष्मणशास्त्री द्राविडः |

॥ श्रीः ॥

# सव्याख्यभेदधिक्कारस्य विषयसूचीपत्रम् ।

पृष्ठाङ्काः ।



॥ समाप्तं सव्याख्यभेदधिक्कारस्थविषयसूचीपत्रम् ॥



# उपक्रमपराक्रमः ।

श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्य
श्रीरङ्गराजाध्वरिवरसून्वप्पय्यदीक्षितविरचितः

वाराणसेय सेंट्रलहिन्दूकालेजसम्बन्धिरणवीरसंस्कृतपाठशालायां
श्रीगौरीशङ्करनाम्ना संस्थापितवेदांतशास्त्राध्यापनपदमल-
ङ्कुर्वाणेन द्राविड श्रीलक्ष्मणशास्त्रिणा परिशोधितः ।

यह पुस्तक ब्रजभूषणदास और कम्पनी के
पुस्तकालय में मिलेगी ।

बनारस ।

Published
by
BRAJ B. DAS & CO.
BENARES.
VIDYÂVILAS PRESS.
1904.

॥ श्रीगुरुः शरणम् ॥

## ॥ उपक्रमपराक्रमस्य भूमिका ॥

इह खलु ऐहिकामुष्मिकार्थसाधनप्रकाशनसमर्थं वेदतत्त्वमेव सर्वैरास्तिकैः समाद्रियते। परं तदर्थतत्त्वं साधारण्येन सर्वैर्ज्ञातुमशक्यमिति विचारादिपुरस्सरमेव ज्ञातव्यं भवति सच विचारप्रकारः महर्षिभिर्जैमिन्यादिभिः पूर्वोत्तरमीमांसयोर्बाहुल्येन निरूपितः । तत्र सर्वेषां वाक्यानां तत्र तत्रार्थे तात्पर्यनिर्णयोपयोगिलिङ्गषट्कं निरूपितम् तथाचोक्तम्।

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णय इति ॥

अत्रोपक्रमोपसंहारपदाभ्यां तत्तद्विचार्यवाक्यीयाद्यन्तभागनिष्ठमेकार्थपर्यवसायित्वं लक्षणया बोध्यते । अभ्यासोनाम अनन्यपरं पुनः श्रवणं। अर्थवादश्च स्तुतिनिन्दान्यतरबोधकं वाक्यं। एतत्त्रयं शाब्दघटितत्वाच्छब्दनिष्ठं लिङ्गमित्युच्यते। अपूर्वत्वं प्रकृतवाक्यात् प्रकृतार्थविषयकज्ञानोत्पादात्पूर्वं केनाऽपि प्रमाणान्तरेणाज्ञातत्वं । फलं प्रकृतवाक्यार्थविषयकज्ञानस्य फलवत्त्वम्। उपपत्तिश्च प्रमाणान्तरेण प्रकृतवाक्यार्थस्याबाधितत्त्वम्। एतत्त्रयन्तु अर्थनिष्ठम। तत्रोपक्रमोपसंहारयोरेकार्थनिष्ठत्त्वस्यैकार्थतात्पर्यनिर्णायकत्वेन लिङ्गत्वमेकस्य वाक्यस्यानेकत्र तात्पर्यसंशये सति यस्मिन्नर्थे आद्यन्तभागयोः पर्यवसानं स एव तात्पर्यविषय इति निर्णयात् अन्यथा तस्य वैयर्थ्यं प्रसज्येत क्वचिच्चानुवादकत्वशङ्कापसारकतयाऽपि तस्य लिङ्गत्त्वं यदि हीदं वाक्यमेतमर्थमनुवदेद्व्यर्थमेव स्यादित्यापत्तिसम्भवात् । अनन्यपरपुनःश्रवणरूपस्याभ्यासस्यादरज्ञापनद्वारा तात्पर्यलिङ्गत्त्वं तथाचोक्तं अभ्यासेहि भूयस्त्वमर्थस्य भवति यथाऽहो दर्शनीया अहो दर्शनीयेत्यादि। आदरश्च यद्यपि प्राशस्त्यरूपो ऽभ्यस्यमानस्यार्थस्य विधेयत्वानुमानद्वारा तात्पर्यविषयत्त्वं बोधयति अर्थवादोऽपि तथेति नानयोर्भेदसम्भवस्तथाऽपि अर्थवादज्ञाप्यं प्राशस्त्यं बलवदनिष्टाजनकत्त्वरूपमभ्यासबोध्यन्तु अर्थान्तरादुत्कृष्टत्वरूपमिति नाभ्यासार्थवादयोरैक्यम, अर्थवादस्यापि विधेयप्राशस्त्यनिषेध्यनिन्दाधीद्वारा विधिनिषेधवाक्याधीनज्ञानोत्पादसहकारितया ऽऽवश्यकत्त्वमितरथा प्रप्रवर्तनानिवर्तनारूपयोस्तदर्थयोस्तादृग्धीरूपेतिकर्तव्यत्वानन्वयात् शाब्दबोध एव न पर्यवस्येत् तत्र शब्दनिष्ठलिङ्गत्रयस्यापि अतिप्रसङ्गवा-

रकतया तात्पर्यलिङ्गत्वमेष्टव्यमन्यथा वेदान्तानामद्वितीये ब्रह्मणीव सत्यकामत्वादिविशिष्टेऽपि अबाधितत्वादित्रिकं सम्भवति श्रुतिबोधितत्वेनाबाधितत्वस्योपासनाविषयत्वेन प्रयोजनवत्त्वस्य च सम्भवादतस्तत्राऽपि तात्पर्यं प्रसज्येतेत्यभ्यासादेरद्वितीय एव विद्यमानत्वेन तत्रैव तात्पर्यमिति निर्णीयत इत्येवं रीत्या तस्योपयोगः। अर्थनिष्ठलिङ्गत्रयस्य तु प्रामाण्यशरीरनिर्वाहकतया तात्पर्यं प्रति व्यापकतया लिङ्गत्वं यथा यज्ञोपवीतादिकं ब्राह्मण्यं प्रति, तत्राऽनुवादकवाक्यस्य स्वार्थे प्रामाण्यवारणायापूर्वत्वमभ्युपगतम्। उत्ताना वै देवगवा वहन्तीत्यादिवाक्यस्य प्रामाण्यवारणाय फलवत्त्वमुपात्तम्। ग्रावाणः प्लवन्त इत्यादिवाक्यानां प्रामाण्यवारणायाबाधितत्वमभ्युपात्तम्। न चोत्तानादिवाक्यस्य निष्प्रयोजनार्थपरत्वे तदध्ययने प्रवृत्त्यनुपपत्तेः स्वार्थे तात्पर्याभावेऽपि प्रामाण्यशरीरे प्रयोजनवत्त्वनिवेशो व्यर्थ इति चेन्न। यादृशं ज्ञानं प्रवृत्तिनिवृत्तिद्वारा साक्षाद्वा प्रमातुरिष्टप्रयोजकं तस्यैव प्रमात्वेन लोके व्यवहारेण निष्प्रयोजनस्याप्रमात्वात्। कदाचिन्निष्फलार्थे प्रत्यक्षादेः प्रामाण्यसम्भवेऽपि न श्रुतेस्तत्सम्भवः फलवदर्थज्ञानमुद्दिश्याध्ययनसंस्कृतश्रुतीनां विनियोगेन निष्फलार्थे तात्पर्याभावनिश्चयात् इत्येवं रीत्या सर्वेषामुपयोगित्वं वर्तते। तत्र लिङ्गषट्के उपक्रमोपसंहारयोः परस्परविरुद्धत्वे कतरद्बाध्यमित्याकाङ्क्षाया उदयात् तन्निवर्तकविचारस्य पूर्वोत्तरमीमांसयोः कुत्रचित्कृतत्वेऽपि अनतिविशदतया यथावद्बोधानौपयिकतामालक्ष्य पूर्वोक्तविचारप्रधानमेव शब्दसङ्क्षिप्तमर्थबहुलमुपक्रमपराक्रमं नाम ग्रन्थं जग्रन्थ चतुरधिकशतप्रबन्धनिर्माता श्रीमानप्पयदीक्षितवरः। तमिमं ग्रन्थं प्रकाशयितुं कृतमतिः श्रीयुतहरिदाससुतेन भूयोऽभ्यर्थितोऽहमतन्मुद्रणकार्ये प्रावर्तिषि शोधनकार्ये च विविधविद्याविलाससदनश्रेष्ठिश्रीयुतगोविन्ददासमहाशयस्यैकं नवीनं नातिशुद्धमपरं च श्रीमत्परमहंसपरिव्राजकपरिवृढश्रीमत्तारकाश्रमस्वामिप्रतिष्ठापितपुस्तकालयस्थं प्रायशः शुद्धं स्थले स्थले सन्दिग्धं इति पुस्तकद्वयसाहाय्यं सम्पाद्य स्वशक्त्यनुसारेण समापयम्। तदत्र मदीयमतिदोषात्सञ्जातानि स्खलितान्युपेक्ष्य गुणगृह्या विपश्चितो दृष्टिप्रसादेन समीकुर्युरित्याशासे इति शुभम्।

आश्विनशुक्ल ४ बुधवासरे — जटापाठ्युपनामको
संवत् १९६१ — लक्ष्मणशास्त्री द्राविडः

# उपक्रमपराक्रमस्य विषयसूची ।



॥ समाप्तमुपक्रमपराक्रमस्य विषयसूचीपत्रम् ॥

## ॥ उपक्रमपराक्रमः ॥

श्रीगणेशाय नमः ।

उपक्रमस्य प्रबलत्वमूचिरे ययोपसंहारविरोधिनो बुधाः ।
प्रतिक्षिप्तां तामिह तर्कसन्ततिं प्रबोधयामः प्रतिकूलजल्पितान् ॥१॥

मीमांसकास्तावदुपक्रमोपसंहारयोर्विरोधे सत्युपक्रमस्य प्राबल्ये न्यायमाहुः । सर्वस्यापि शब्दस्य स्वार्थलङ्घने विरोधः कारणम् । स च प्रतियोगिनि दृष्टे ज्ञायते । न चोपक्रमदशायामुपसंहारो विरोधी ज्ञायत इत्युपक्रमो मुख्यवृत्तिरेव युक्तः । उपसंहारो मुख्यवृत्तिश्चेन्न तेन सम्बध्यते आकाङ्क्षावशेन हि सम्बन्धः । न च पूर्वं प्रतीतस्य स्वविरुद्धार्थे भवत्याकाङ्क्षा अत उपसंहारस्तदनुरोधेन बलाल्लक्षणादिकं प्रतिपद्यते । अत एव वेदोपक्रमाधिकरणेऽश्वप्रतिग्रहेष्ट्याद्यधिकरणे चोपक्रमानुसारेणोपसंहारो नीतः । तद्यथा । तृतीयेऽध्याये चिन्तितम् । * श्रुतेर्जाताधिकारः स्यात् * ज्योतिष्टोमे प्रजापतिर्वा इदमेक आसीत्स तपोऽतप्यत तस्मात्तपस्तेपानात्त्रयो देवा अजायन्ताग्निर्वायुरादित्यस्ते तपोऽतप्यन्त तेभ्यस्तपस्तेपानेभ्यस्त्रयो वेदा अजायन्त अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद इत्युपक्रम्य श्रूयते तस्मादुच्चैर्ऋचा क्रियते उपांशु यजुषा उच्चैः साम्नेति । तत्र संशयः । किमुच्चैष्ट्वादिविधावृगादिशब्दैस्तदभिधेयानां ग्रहणमुत वेदानामिति उपक्रमे वेदशब्दश्रवणादुपसंहारे ऋगादिशब्दश्रवणाच्च । वेदशब्दो हि मन्त्रब्राह्मणसमुदायात्मकस्य काठकादिग्रन्थविशेषस्य वाचकः * वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रम * मित्यादिव्यवहारात् । ऋग्यजुस्सामशब्दास्तु *तेषामृग्यत्रार्थवशेन पादव्यवस्था । शेषे यजुः शब्दः । गीतिषु सामाख्या * इति सूत्रैः सपादबद्धापादबद्धमन्त्रविशेषवाचकत्वेन निर्णीता अतो वेदशब्दस्य ऋगादिशब्दानां च विभिन्नार्थकत्वाद्भवति संशयः उपक्रमोपसंहारयोर्विप्रतिपत्तेरेकवाक्यत्वाच्च उभयोरेकविषयत्वे अवश्यम्भाविनि किमुपसंहारविध्युद्देशवशात् उपक्रमस्थार्थवादगतवेदशब्दो वेदैकदेशऋगादिपरो भवतु, किं वोपक्रमगतार्थवादवशादुपसंहारस्थविध्युद्देश्यगतमृगादिपदमृगादिप्रायवेदपरं भवति-

ति । पूर्वपक्षे यस्माहगादयः प्रजापतिजातेभ्योऽग्न्यादिभ्यो जातास्तस्मात्प्रशस्तैस्तैरुच्चैष्ट्वादिनियतस्वरयुक्तैरेव कर्म कर्तव्यमिति कर्माङ्गभूतानामृगादीनां वेदविशेषानादरेण यत्किञ्चिद्वेदस्थानामुच्चैष्ट्वादिविधानम्। सिद्धान्ते तु यस्मादुक्तरूपेभ्योऽग्न्यादिभ्य ऋग्वेदादयो जातास्तस्माद्यहग्वेदादिभिः क्रियते कर्मवृन्दं तस्य प्रशस्तस्योच्चैष्ट्वादि कर्तव्यमिति तत्तद्वेदविहितकर्मराशिगुणत्वेनोच्चैष्ट्वादिविधानमिति फलभेदः । ननु विध्युद्देशस्य प्रधानत्वादप्राप्तविषयत्वेन * न विधौ परः शब्दार्थः * इति न्यायाच्च न तत्र लक्षणा किन्त्वर्थवादस्य गुणत्वादनुवादत्वेन लक्षणासहिष्णुत्वाच्च तत्रैव लक्षणा युक्तेति ऋगादिशब्दैः स्वाभिधेयानां ग्रहणमिति पूर्वः पक्षः । सिद्धान्तस्तु लब्धात्मनः प्रधानस्य गुणादुर्बलीयस्त्वम् । विध्युद्देशस्त्वहर्गादिविषयत्वेनात्मानं न लभते । उपक्रमगतं हि वेदशब्देऽसञ्जातप्रतिपक्षे यथाश्रुतार्थेऽवगते तदुपसंहारगतमुपजातप्रतिपक्षमृगादिपदं यथाश्रुतार्थं सत्तदेकवाक्यतां न प्रतिपद्यते । न हि सम्भवत्येवं स्तुतिविधानयोरन्वयः यस्मादेवमेते वेदा जातास्तस्मादृग्वेदादीनामुच्चैष्ट्वादिकर्तव्यमिति । तेनर्गादिशब्दलक्षणया तस्योच्चैर्ऋग्वेदेन क्रियत इत्यादिरूपेण तदनुगुणतयैवात्मलाभः । अतः प्रधानत्वेपि विध्युद्देशस्यार्थवादानुसारेणैव लब्धात्मकस्योपक्रमविरोध्यर्थोपस्थापकत्वाभावान्न तदनुसारेण उपक्रमगतवेदशब्दस्यर्गादिलक्षणा कल्पनीया । नापि वेदस्तुतेरेव लक्षितलक्षणादिना तदवयवभूतर्गादिस्तुतौ पर्यवसानं कल्पनीयम् । अप्राप्तविषयत्वं त्वसिद्धम् । उपक्रमे वेदानां प्रस्तावेन वेदसंस्पर्शेन किञ्चिद्विधास्यत इत्यवगते किं तद्विधेयमित्येतावदनवगतमपेक्षितं च विध्युद्देशाद् गृह्यत इति विध्युद्देशस्थितानामप्यृगादिशब्दानामवगतविषयत्वात् तस्मात्तैर्लक्षणया वेदानां ग्रहणमिति ।

तथा तृतीये चिन्तितम् । * अचोदितकर्मभेदात् * प्रजापतिर्वरुणायाश्वमनयत्स स्वां देवतामार्छत्स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत्तं निरवपत्ततो वै स वरुणपाशादमुच्यत वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणान् चतुष्कपालान्निर्वपेद्वरुणमेव स्वेन भागधेयेनोपधावति स एवैनं वरुणपाशान्मुञ्चति * इति श्रूयते । अत्र किमश्वदातुरिष्टिर्विधीयते उत तत्प्रतिग्रहीतुरिति सन्देहः । उपक्रमे हि प्रजापतिर्वरुणाय

प्रतिग्रहीत्रेऽश्वमनयद्ददौ सोऽश्वदाता प्रजापतिः स्वां देवतामश्वदाने सम्प्रदानत्वेनात्मीयदेवतारूपं वरुणमार्च्छत्प्राप्त् अश्वं दत्वा वरुणग्रहं जलोदरव्याधिपर्यायं प्राप्तवान्स प्रजापतिः पर्यदीर्यत तेन व्याधिना परितो दीर्णोऽभूदिति प्रजापतेरश्वदानेन दोषं सङ्कीर्त्य तस्य दोषनिर्हरणार्थमिष्ट्यनुष्ठानकीर्तनादश्वदातुरियमिष्टिर्विधित्सितेति गम्यते उपसंहारे च तत्प्रतिग्रहीतुर्विधीयमाना दृश्यते । न च स स्वां देवतामार्च्छदित्यादौ तच्छब्दानां वरुणपरत्वकल्पनायामुपक्रमे प्रतिग्रहीतुरेवेष्टिर्विधित्सिता गम्यते इति शक्यं वक्तुमिति वाच्यम् । विभक्त्यैक्यरूपेण तेषां प्रजापतिपरत्वौचित्यात् स्वां देवतामिति च वरुणं प्रत्येव वरुणस्य देवतात्वोक्त्ययोगात्तं निरवपदिति वरुणस्य वरुणोद्देशेन त्यागासम्भवाच्च, आत्मने सङ्कल्प्यमानस्य द्रव्यस्य स्वत्वनिवृत्त्यसम्भवात् । तस्मादस्ति तावदुपक्रमोपसंहारयोर्विरोधस्फूर्तिः भाव्यं च तयोरविरोधेनैकवाक्यतया । अतः किं विध्युद्देशानुसारेण प्रतिग्रहीतुरियमिष्टिः अर्थवादस्तु तथाश्वो दानप्रतिग्रहसम्बन्धे गर्हितो यदा दातुरपीयमिष्टिः स्यात्किमुत प्रतिग्रहीतुरिति कैमुत्यतात्पर्येण दूरं नेतव्यः किं वोपक्रमानुसारेण दातुरेव, प्रतिगृह्णातिस्तु कथंचिद्दान एव योजनीय इति सम्भवति संशयः । तत्र पूर्वः पक्षः । वेदोपक्रमाधिकरणे उपक्रमप्राबल्ये स्थितेऽपि नेह ततो निर्णयो युक्तः तत्रोपक्रमसङ्कीर्तिता वेदा उपसंहारगतैर्ऋगादिशब्दैरनुवदितुं शक्यन्ते वेदैकदेशत्वात् । ऋगादीनामुपक्रम एवोग्नेर्ऋग्वेद इत्यादिनावेदानामृगादिसम्बन्धस्य कीर्तितया नात्यन्तपरित्यक्तोपक्रमार्थत्वाच्च । * ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अन्हः । सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्य* इत्यादौ केवलानामृगादिशब्दानामृग्वेदादिषु लक्षणया वेदे दृष्टत्वाच्च । ऋचः सामानि यजूंषि प्रकृत्य सैषा त्रय्येव विद्येतिनिर्दिष्टस्य शब्दस्य त्रैविद्योयं ब्राह्मण इति वेदत्रयाभिज्ञनिर्देशे वेदत्रयपरतया लोकानां प्रयोगेण ऋगादिशब्दानां वेदेषु लक्षणाया लोकसम्मतत्वाच्च । अत एव तस्मिन्नधिकरणे * वेदो वा प्रायदर्शनादिति * सिद्धान्तसूत्रेण उपक्रमप्राबल्योक्त्यनन्तरं *लिङ्गदर्शनाच्च* त्रैविद्याख्याच तद्विदेति* सूत्राभ्यां वेदे लोके च प्रयोगेण लक्षणाया निरूढत्वं दर्शितम् । न चेह तथा प्रतिगृह्णातेर्दाने दृष्टप्रयोगः प्रत्युत तदत्यन्त-

विरुद्धार्थ एव । तेन तत्रोपक्रान्तमर्थमुपसंहारगतशब्दोऽनुवदितुमर्हतीति तत्रोपक्रमानुरोधेऽपि अत्र न तथेति विध्युद्देशस्य प्राधान्याप्राप्तविषयत्वाभ्यामवगतं प्राबल्यमव्याहतमिति तदनुरोधेनैवोपक्रमो नेतव्य इति। सिद्धान्तस्तु उपक्रमप्राबल्यन्यायेनैवालब्धात्मनि प्राधान्यस्य प्रयोजकत्वादप्राप्तविषयत्वस्य चासिद्धेः उपक्रम एवाश्वदातुः प्रजापतेर्वरुणग्रहनिर्मोचनहेतुत्वेनेष्टेः प्रशंसावशादश्वदातुरियमिष्टिर्विधास्यत इत्यवगतत्वात् । ततश्चार्थवादस्य विधिशक्त्यभावात्तावन्मात्रं ततोऽनवगतं विध्युद्देशाद्ग्राह्यं विधिविषयांशस्त्वर्थवादगत एवेति दान एव प्रतिगृह्णातिर्योजनीयः । प्रतिगृह्णातीति प्रतिग्रहकर्तोच्यते यः प्रतिग्रहहेतुभूतं दानमाचरति सोऽपि प्रतिग्रहकर्तेति व्यपदिश्यते एव । हेतुकर्तर्यपि स्वव्यापारद्वारा प्रयोज्यव्यापारकर्तृत्वसत्त्वात् । तत्र प्रयोजकव्यापारकर्तृत्वरूपहेतुकर्तृत्वाविवक्षायां णिजन्तप्रयोगनियमेऽपि तद्द्वारकप्रयोज्यव्यापारकर्तृत्वविवक्षयाऽणिजन्तप्रयोगोऽपि न विरुध्यते । न च साक्षात्कर्तृत्व एव तच्छक्तिः लुङ्लृटोरनद्यतनाद्यतनसाधारण्येन भूतभविष्यन्मात्र इव कर्तृप्रत्ययानां साक्षात्परम्परासाधारण्येन कर्तृत्वमात्रे शक्त्युपगमात् । दृष्टश्च हेतुकर्तर्यप्यणिजन्तप्रयोगः यथा स्वामिनि सावधानमात्रकर्तरि साक्षाद्विलेखनमकुर्वत्यपि षड्भिर्हलैः कर्षतीति । ततश्च प्रतिगृह्णातेः कर्षतेरिव साक्षात्कर्तृवचनत्वस्य मुख्यस्वानन्त्यविषयतयौत्सर्गिकत्वेऽपि कर्षतेः षड्हलोपादानसामर्थ्यात्प्रयोजककर्तृपरत्ववदस्यापि उपक्रमैकवाक्यतासामर्थ्यात्तत्परत्वमुपपद्यते । तेन यद्यपि वेदोपक्रमाधिकरणोक्तान्यत्रदर्शनरूपाभ्युच्चययुक्तिरिह नास्ति तथापि कर्षतिन्यायेन प्रयोगनिर्वाहादुपक्रमानुरोधेन निर्णयो युक्तः । किं च तत्र स वक्तव्योऽभ्युच्चयः उपक्रमे प्रजापतेस्तत्स्रष्टृतयाऽग्न्यादीनां तत्स्रष्टृतया वेदानां च कीर्तितत्वेनोपक्रमो वेदविषय एवेति निश्चेतुमशक्यत्वात् । तत्र वेदजनकाग्न्यादिजनकत्वेन प्रशंसया प्रजापतेर्वा प्रजापतिजातत्वेन वेदजनकत्वेन च प्रशंसयाऽग्न्यादीनां वा प्रजापतिसुताऽग्न्यादिजातत्वेन प्रशंसया वेदानां वा किञ्चिद्विधास्यत इत्यवगते उपसंहारगतानामृगादीनां च तेषामन्यतमत्वाभावेनर्गादिशब्दानां यथाश्रुतार्थसम्भवे तेषामुपक्रान्तेषु प्रजापत्यादिषु किम्परत्वमवसेयामित्यत्र नियामकत्वेन तेषां वेदेषु लक्षणानिरूढिप्रदर्शनापेक्षणात् । न

त्वत्र तदपेक्षास्ति। अत्रोपक्रमे वारुणेष्टिर्वरुणग्रहनिर्मोचनहेतुत्वेन प्रशस्यत इति व्यवस्थितस्तुत्यवगमात्। तस्मादिहाप्युपक्रमानुरोधेन निर्णय इति उपसंहारादुपक्रमः प्रबल इति।

अत्र केचिदर्वाचीनाः कल्पयन्ति। उपक्रमादुपसंहारो बलीयान् तद्व्याख्यानरूपत्वात्। एकस्मिन्वाक्ये हि प्रथमभागेन कचिदर्थे धीस्थे चरमभागस्य तद्विरोधिनोऽवैयर्थ्याय तद्व्याख्यानरूपत्वं कल्पनीयं व्याख्यानस्य पाश्चात्यत्वनियमात्। लोके गामानय बलीवर्दमानयेत्यादौ तथा दर्शनाच्च। व्याख्येयस्य च निश्चितप्रामाण्यव्याख्यानुसारेणार्थनिर्णयो युक्तः व्याख्यानतो विशेषप्रतिपत्तिरिति प्रसिद्धेः। वेदे * प्युग्रं वचो अपावधी * मित्यादिमन्त्राणामशनया पिपासेह वा उग्रं वच इत्यादिव्याख्यानरूपब्राह्मणानुसारेणार्थाङ्गीकाराच्च। तथा परत्वादप्यपच्छेदाधिकरणन्यायेनोपक्रमादुपसंहारो बलीयान्। षष्ठे *पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवदिति*। अपच्छेदाधिकरणे ज्योतिष्टोमे अध्वर्युं प्रस्तोताऽन्वारभते प्रस्तोतारमुद्गाता उद्गातारं प्रतिहर्तेत्यादिक्रमेण अन्वारभ्य प्रसर्पतामध्वर्य्वादीनां मध्ये यदि कदाचिदुद्गातृप्रतिहर्त्रोः क्रमेण अन्वारम्भविच्छेदः स्यात् तदा तन्निमित्तयोः प्रायश्चित्तयोर्यद्युद्गाताऽपच्छिद्येत अदक्षिणो यज्ञः संस्थाप्य इति यदि प्रतिहर्ताऽपच्छिद्येत सर्ववेदसं दद्यादिति विहितयोरदक्षिणक्रतुसमापनसर्वस्वदक्षिणादानरूपयोर्विरुद्धयोः समुच्चित्याऽनुष्ठानाशक्तेरन्यतरस्मिन्ननुष्ठेये किं पूर्वनिमित्तकमनुष्ठेयं उतोत्तरनिमित्तकमिति संशय्यानुपसञ्जातविरोधित्वात्पूर्वनिमित्तकमनुष्ठेयमिति प्राप्ते परनिमित्ते सति तन्निमित्तशास्त्रस्य दुर्निवारप्रवृत्तिनिमित्तत्वात् तस्य च पूर्वाबाधेनानुत्पत्तेः पूर्वोपमर्देनैवोत्पत्तिनियमात्परनिमित्तमेवानुष्ठेयमिति सिद्धान्तितम्। उक्तं च। पूर्वं परमजातत्वादबाधित्वैव जायते। परस्यानन्यथोत्पादान्नाद्याबाधेन सम्भव इति।

यत्त्वनुपजातविरोधित्वादुपक्रमस्य प्राबल्यमुक्तं तन्न। सर्वत्रापातजप्रत्ययस्यैवप्राबल्यप्रसङ्गेन विमर्शवैयर्थ्यापत्तेः अतो नोपक्रमस्य प्राबल्यं युक्तम्। नचैवं वेदोपक्रमाधिकरणविरोधः। न हि तत्रोपक्रमानुरोधेन स्वराणां वेदधर्मत्वनियमः किं तु तस्यर्गादिधर्मत्वे ऋच्यध्यूढं साम गीयत इति वचनादृगाधारगीतिरूपे साम्न्यप्युच्चैष्ट्वमु-

वैश्यर्चाक्रियत इति अत एव सिध्यतीत्युच्चैस्त्वाम्नेत्यस्य वैयर्थ्यापत्तेः पश्चात्तनतद्विध्यनुरोधेन । अतएव वेदोवा प्रायदर्शनादिति प्राथम्यरूपप्रायदर्शनेऽपरितोषेण धर्मोपदेशाश्चेतिसूत्रे इत्थमेव हेतूक्तम् । किञ्चोपक्रमे वेदशब्दस्त्रयो वेदा अजायन्त अग्नेर्ऋग्वेदो वायोर्यजुर्वेदः आदित्यात्सामवेद इत्यभ्यस्तमभ्यासश्चोपसंहारात्प्रबलः बहुबाधस्यान्याय्यत्वादिति तत एव निर्णयोस्तु । एवं च प्रायोवचनाश्चेत्यादाविव सूत्रस्थप्रायशब्दस्य बाहुल्यमर्थो लभ्यत इति न प्राथम्यं क्लिष्टतया तदर्थं इति कल्पनीयम् । अपिचर्ग्वेदमधीतवानित्यादिलौकिकप्रयोगादृग्भिः पूर्वाह्ण इति वैदिकप्रयोगाच्चर्गादिशब्दास्तत्तद्वेदवाचका इति नात्रोपक्रमोपसंहारवैरूप्यमपि येनोपक्रमानुसारेण निर्णयः शङ्क्येत । तस्माद्वेदोपक्रमाधिकरणविरोधः नाप्यश्वप्रतिग्रहेष्ट्यधिकरणविरोधः । तत्रापि नोपक्रमानुसारेण दातुरिष्टिरिति निर्णयः किंतु कर्माङ्गत्ववशेन । तथा हि । अस्मादधिकरणात्पूर्वतने *दोषात्त्विष्टिर्लौकिके स्या*दित्यधिकरणे इयमिष्टिरश्वप्रतिग्रहवतः कर्मणोऽङ्गं न स्वतन्त्रेतिस्थितम् । यदेवं स्थितं तदाऽङ्गप्रधानानामेकदेशकालकर्तृकत्वस्यापाताद्यः क्रतोः कर्ता तेनैवेयमपि कर्तव्या सिद्ध्यति । क्रतोः कर्ता स्वामी कर्मपरिक्रयादिति न्यायात् अश्वस्य दाता न प्रतिग्रहीता तस्मात्कर्माङ्गवशेन निर्णयो न तूपक्रमानुसारेण कथमन्यथा मैत्रायणीयशाखायां स एषोऽश्वः प्रतिगृह्यत इति । यद्वा तूपक्रमं विनाऽऽम्नातेयमिति दातुरिति सिद्ध्येत् । उक्तं च तन्त्रसारे । मैत्रायणीयशाखायां दात्रुपक्रमताश्रुतेः । कर्माङ्गत्ववशाच्चेय दातुरिष्टिः प्रतीयत इति । वार्तिककृतापि सा लिङ्गादार्त्विजे स्यादित्यधिकरणे सिद्धान्तसूत्रे लिङ्गपदमङ्गस्य प्रधानेनैककर्तृकस्य सत एव यदुपकारजननसामर्थ्यन्तत्परमिति व्याकृत्य कर्माङ्गत्वेन दातुरिष्टिरिति निर्णयः कृतः । गुरुणाप्यधिकारान्तराकल्पनालाघवानुसारेण दातुरिष्टिरिति निर्णयः कृतः । न तूपक्रमप्राबल्येन यद्युपक्रमगतस्य दातुरिष्टिः स्यात्तदाऽश्वदानप्रयुक्तपौण्डरीकानुप्रवेशात्तत्फलेनैव फलवत्त्वमित्यधिकारान्तरस्याकल्पनीयत्वाल्लाघवं प्रतिग्रहीतुश्चेत्तस्य फलान्तरं कल्पनीयमिति गौरवं स्यादिति ।

यद्वा भाष्यकारान्तरैरत्र प्रतिग्रहीतुरेवेयमिष्टिर्व्यवस्थापितेति वार्तिकादिषूक्तत्वात् प्राभाकरैरपि पौण्डरीके भूय-

त इति कृत्वाचिन्तयेदमधिकरणं अन्यथा दातुरिष्टिरिति सिद्धान्तासिद्धेरितिवदद्भिः वस्तुतः प्रतिग्रहीतुरेवेयमिष्टिरित्याशयस्य स्फुटीकरणात्। याज्ञिकैरपि तथैव स्वीकृतत्वाच्च प्रतिग्रहीतुरेवेयमिष्टिरस्तु। अतो न कापि परेषामुपक्रमप्राबल्यशङ्का तेषामप्युपसंहारप्राबल्यानुपगमेऽक्ताधिकरणादिसिद्धान्तनिर्वाहो न स्यात्। अक्ताधिकरणे अक्ताः शर्करा उपदधाति तेजो वै घृतमित्यत्र येन केन चिद् घृततैलवसादीनामन्यतमेन द्रव्येणाञ्जनं कर्तव्यं विधौ विशेषाश्रवणादिति प्राप्ते वाक्यशेषे घृतसङ्कीर्तनात्तेनैवेति सिद्धान्तितम्। इदमुपसंहारप्राबल्यानभ्युपगमे न निर्वहति। उपक्रमप्राबल्ये ह्युपक्रमेऽञ्जनक्रियाक्षिप्तद्रवद्रव्यसामान्यनिश्चयाद्वाक्यशेषस्थस्य घृतपदस्य गुणेत्वन्याय्यकल्पनेति घृताघृतलक्षकत्वं वा घृतस्तुतेरेवाष्टाकपालादिस्तुतेरेवयवद्वाराऽवयविद्वादशकपालस्तुतौ पर्यवसानवद्विशेषणद्वारा सामान्यस्तुतौ पर्यवसानं वा कल्प्येत* विप्रतिपत्तौ विकल्पः स्यादसमत्वादुगुणे त्वन्याय्यकल्पनैकदेशत्वादिति*नार्यमिकाधिकरणेह्यग्नीषोमीयपशौ श्रुतस्यादितिः पाशान्प्रमुमोक्तिविति मन्त्रस्य पाशबहुत्वानुसारेण बहुपशुकेपूत्कर्षे प्राप्ते प्रधानस्य प्रातिपदिकार्थस्य पाशस्य विभक्त्यर्थस्य कर्मकारकस्य च प्रकृते सम्भवादुगुणभूतायास्तद्बहुत्वसङ्ख्यायास्तत्रासम्भवे पि गुणानुसारेण नोत्कर्षो युक्त इति कथञ्चित्पाशावयवबहुत्वाभिप्रायेण छान्दसतया बहुवचनं नेतव्यमित्युक्तम्। तथा *पूर्ववन्तोविधानार्था* इति प्रमाणलक्षणाधिकरणे वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति यन्नवकपालस्त्रिवृतैवास्मिन्तेजो दधाति यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति यद्द्वादशकपालो जगत्यैवास्मिन्पशून्दधाति यस्मिन्जातएतामिष्टिंनिर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान्भवतीति जातेष्टिविधावष्टाकपालादिशब्दा किं जातेष्टिमाश्रित्य ब्रह्मवर्चसादिफलादेशेन गुणविधायका उत द्वादशकपालस्तुत्यर्था अर्थवादा इति संशय्य द्वादशसु कपालेषु संस्कृतस्य पुरोडाशस्य द्वादशकपालशब्दाभिधेयस्य विहितस्याष्टाकपालादिशब्दैर्ग्रहणासम्भवेन तत्स्तुत्ययोगादष्टाकपालादिशब्दार्थस्याष्टाकपालादिसंस्कृतपुरोडाशस्याविहितत्वेन स्तुत्ययोगाच्चार्थवादत्वासम्भवेन गुणफल-

विधय इति पूर्वपक्षे प्राप्ते वैश्वानरं द्वादशकपालमित्युपक्रान्ताया इ-ष्टेर्यस्मिन्जात इत्यादिनोपसंह्रियमाणतयोपक्रमोपसंहारैकरूपावग-मितप्रधानभूतैकवाक्यत्वभङ्गप्रसङ्गान्न मध्ये गुणविधयोक्ताः कथं चिदष्टसंख्याऽवयवद्वारावयविद्वादशकपालस्तुत्यर्था एतेऽर्थवादा इ-त्युक्तम् । *सन्दिग्धे तु वाक्यशेषा*दित्यक्ताधिकरणे ऽक्ताः शर्करा इत्युपक्रमगतं सन्दिग्धमक्तपदं वाक्यशेषगतेन घृतपदेन निर्णीयते न तु बाध्यत इति चेन्न । अक्तपदस्याक्षादिपदवन्नानार्थत्वाभावेनार्थस-न्देहाभावाद्विशेषसन्देहस्य घृतस्य नवपुराणादित्वादिसम्भवेन तादवस्थ्यात् । ननु तथापि सामान्यस्य विशेषपर्यवसानौचित्याद्वि-शेषविषयत्वादिहार्थवादानुसरणं नतूपसंहारवत्वादिति चेन्न । वि-शेषस्यापि सामान्योपलक्षकत्वसम्भवेन सामान्यस्य विशेषपर्यवसा-ननियमाभावाद्विशेषेणोपक्रम्य सामान्येनोपसंहारेष्युपसंहारानुसा-रेणोपक्रमस्थविशेषशब्दस्य सामान्यपरतया विष्णुशर्मा भोज्यतां ब्रा-ह्मणः प्रशस्त इत्यादौ सिद्धत्वाच्च । ननु सामान्यशब्दस्योपसंहारा-नुसारेण सङ्कोचमात्रं न तु बाध इति चेन्न । सङ्कोचस्याप्येकदेशबा-धत्वात् । अन्यथा पदशास्त्रेणाहवनीयशास्त्रस्य वाक्यादिना प्रकरणा-देश्च सङ्कोचो बाधो न स्यात् । नन्वक्ताः शर्करा उपदधातीति वर्त-मानापदेशेन प्रत्यक्षस्य विधेः स्तुत्युन्नेयत्वादुपजीव्यस्तुतिसमर्पक-तया इहार्थवादोऽनुसृतो न तूपसंहारत्वादिति चेन्न। आख्यातश्रवण-काले वर्तमानोपधानाभावेन पञ्चमलकारकल्पनया वसन्ताय कपि-ञ्जलानालभत इत्यादिभिरर्थवादवाक्य इवस्तुतिमनपेक्ष्यैव विधिसि-द्धेः इमां स्पृष्ट्वोद्गायेत् इमां ह्यौदुम्बरीं विश्वा भूतान्युपजीवन्तीति विषयवाक्यान्तरे लिङ एव श्रवणाच्च । ननु शब्दभावनेति कर्तव्य-तारूपां प्ररोचनां विना प्रवर्तकस्य विधेरपर्यवसानाद्विधिना स्वस-माप्त्यर्थमपेक्षितत्वादिहार्थवादोऽनुसृतो नतूपसंहारादिति चेन्न । उ-पक्रमप्राबल्ये गुणभूतार्थवादस्थघृतशब्दस्य घृताघृतलक्षकत्वादिना स्तुतिपरत्वकल्पनेनैव निर्वहणीयत्वप्रसङ्गात् । तस्मात्प्रकारान्तरायो-गादुपसंहारप्राबल्यादेवाधिकरणसिद्धान्तो निर्वाह्यः । तथा षष्ठे पशुचोदनायामनियमो विशेषा*दित्यधिकरणे यदग्नीषोमीयं पशुमा-लभेतेति विधौ विशेषाश्रवणाद्यः कश्चित्पशुरालब्धव्य इति प्राप्ते छा-गस्य वपाया मेदसोनुब्रूहीति मन्त्रे छागरूपविशेषश्रवणात्स एवाल-

ध्यव्य इति विधिप्रापितकर्मसमवेतद्रव्यप्रकाशकतया तदुपसंहार-रूपमन्त्रानुसारेण(१)सिद्धान्तोऽप्युपसंहारप्राबल्येन निर्वाह्यः। उपक्रमप्राबल्ये विधौ पशुसामान्यालब्धव्यत्वनिश्चयात्तदनुसारेणोपसंहार-मन्त्रस्थछागशब्दस्यापि तत्सामान्योपलक्षणत्वप्रसङ्गात् । तद्व्यपदेशाधिकरणे श्येनेनाभिचरन्यजेतेति विधौ श्येनशब्दमुख्यार्थत्वाय श्येनद्रव्यको यागः कर्तव्य इति प्राप्ते 'यथा वै श्येनो निपत्यादत्त एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते' इति वाक्यशेषे मुख्यश्येनेऽसम्भवतः श्येनसादृश्यस्य वर्णनानुरोधेन श्येनशब्दस्य याग एव गौणी वृत्ति(२)र्वाक्यशेषानुसारेणेति सिद्धान्तोऽप्युपसंहारप्राबल्येन निर्वाह्यः। उपक्रमप्राबल्ये तत्स्थश्येनपदमुख्यार्थानुरोधेन वाक्यशेषस्य रामरावणयोर्युद्धं रामरावणयोरिवेति वत्कथञ्चिदभेदेपि सादृश्य(३)-वर्णनप्रसङ्गात् ।

तथा चतुर्थे * फलसंयोगस्त्वचोदिते न स्यात् तस्याशेषभूतत्वा * दित्यधिकरणे जातेष्टेः पूत एव तेजस्वीत्यादिवाक्यशेषोक्तं फलमिष्टिकर्तुः पितुरेव न पुत्रस्यान्यगामिफले कर्मण्यन्यस्य प्रेरणानुपपत्तेरिति प्राप्ते येन वाक्यशेषानुसारेण फलमेतदुपनीयते तेन पुत्रगतमेवोपनीयते इति वचनप्रामाण्यात्पुत्रस्यैव फलमिति सिद्धान्तोप्युपसंहारप्राबल्येनैव निर्वाह्यः । अन्यथोपक्रमे पुत्रे जात इत्यसंवलितनैमित्तिकाधिकारतया प्रतीतायास्तस्या वाक्यशेषानुसारेण पुत्रगतपूतत्वादिफलकामसंवलितस्याप्राप्तेः तदा हि वाक्यशेषोऽर्थवादमात्रमेव स्यात् । किञ्चोपक्रमप्राबल्यवादे किमुपक्रमे प्रतीतमात्रस्य ग्राह्यत्वं किं वोपसंहारपरामर्शेन व्यवस्थितस्य, आद्ये श्येनादिवाक्ये श्येनादेर्ग्राह्यत्वापत्तिः द्वितीये उपसंहारस्यैव प्राबल्यं सिध्येदिति पूर्वः पक्षः ।

अत्र ब्रूमः । यत्तावदुपसंहारे प्राबल्ये कारणमुक्तं व्याख्यानरूपत्वम् । तन्न । तत्र किं (४) व्याख्येयपदोपादानेन स्पष्टं व्या-

---

( १ ) नेति अधिकं खपुस्तके । ( २ ) वृत्तिरिति खपु० पा० ।

( ३ ) सादृश्यपरत्वमिति खपु० पा० ।

( ४ ) विरोधात् व्याख्यानरूपत्वमुत व्याख्येयपदोपादानेन व्याख्यानरूपत्वमित्याशयः आद्ये तत्तु न स्पष्टं परस्परविरोधपरिहाराय कल्प्य मिति चेन्नाद्यः इति खपु० पा० ।

ख्यानरूपत्वमित्याशयः उत परस्परविरोधपरिहाराय कल्प्यमिति । नाद्यः अप्रसिद्धेः । द्वितीये प्रथमश्रुतस्यैव चरमश्रुतव्याख्यानरूपत्वं किमिति न कल्प्यम् । व्याख्येयोपस्थितिसापेक्षत्वाद्व्याख्यानप्रवृत्तेस्तस्य पाश्चात्यत्वं नियतमिति चेन्न । पाश्चात्यभागश्रवणानन्तरमन्यतरस्य व्याख्यानरूपत्वकल्पकं विरोधप्रतिसन्धानं यदाऽवतरति तदा विरोधप्रतियोगित्वेन भागद्वयस्याप्युपस्थितत्वाविशेषेण प्रथमभागस्यापि पाश्चात्यभागव्याख्यानरूपत्वकल्पनोपपत्तेः । लोके पुङ्गवं पश्य देवनायाश्वमानयेत्यादौ प्रथमश्रुतस्यापि चरमश्रुतव्याख्यानरूपत्वदर्शनात् । व्याकरणे च वृद्धिरादैजित्यादेः सिचि वृद्धिरित्यादिचरमश्रुतसूत्रस्थवृद्ध्यादिपदव्याख्यानरूपत्वदर्शनात् । तस्मात्परस्परविरोधस्थले परस्परव्याख्यानरूपत्वकल्पनमप्रमाणमिति नोपसंहारप्राबल्ये व्याख्यानरूपत्वं कारणम् । यत्तत्र परत्वं कारणमुक्तं पूर्वोपमर्देन परस्योत्पत्तिरिति । तदपि तुच्छम् । यदि हि परमुत्पद्येत तर्ह्येव तस्य पूर्वोपमर्देनोत्पत्तिरिति स्यात् न त्वत्र तस्योत्पत्तिः सम्भवति । तथा हि । किमत्रोपक्रमबाधकत्वेनाभिमतमुपसंहारार्थगोचरज्ञानमुपक्रमान्वितस्वार्थगोचरमु(१)पयते तदनन्वितस्वार्थगोचरं वा । नाद्यः । परस्परविरुद्धयोरुपक्रमोपसंहारयोरन्यतरस्य लक्षणया विरोधसमाधानात्प्राक्सम्भूयकारित्वासम्भवेन तदयोगात् । उपक्रमस्य लक्षणाऽभ्युपगम्यत इति चेन्न । उपक्रमबाधकत्वाभिमतोपसंहारार्थविषयज्ञानोदयात् प्रागुपक्रमप्रतीतार्थपरित्यागे कारणाभावेन तल्लक्षणाकल्पनस्य तद्बाधकत्वाभिमतज्ञानोदयस्य च परस्पराश्रयग्रस्तत्वेनैकस्याप्यसम्भवात् । न द्वितीयः । एकस्मिन्वाक्ये पूर्वपूर्वभागार्थान्वितस्वार्थबोधकत्वस्यैव व्युत्पत्तिसिद्धतया तदनन्वितोपसंहारार्थविषयज्ञानासम्भवात् । तथा व्युत्पत्तिनियमानभ्युपगमेऽप्युपक्रमोपसंहारयोर्विध्यर्थवादत्वादिरूपेणैकवाक्यत्वमनुसन्दधतामुपक्रमैकवाक्यत्वानुपपत्त्योपसंहारस्य लक्षणाकल्पनां विना मुख्यार्थबोधासम्भवात् । उपक्रमस्याप्युपसंहारैकवाक्यत्वानुपपत्तिस्तुल्येति चेत् । सत्यम् । उपक्रमदशायामुपसंहारो विरोधी नोपस्थित इति तदेकवाक्यत्वानुपपत्तिस्स्वरूपसती न प्रति-

(१) मुपयमिति खपु० पा० ।

बन्धिका। इह तु ज्ञाताऽनुपपत्तिः प्रतिबन्धिकेति विशेषः। उपसंहारादप्युपक्रमैकवाक्यत्वमननुसन्दधतां मुख्यार्थबोधः सम्भवतीति चेन्न। तथाप्युपक्रमैकवाक्यत्वे उपसंहारादर्थप्रत्ययकाले वेदपाठक्रमानुसारेण नियमतोऽनुसन्धातुं योग्ये विद्यमाने उपक्रमाश्रवणतदर्थानवगमतद्भिन्नवाक्यत्वभ्रमात्पुरुषदोषमात्रेणाननुसन्धीयमाने सम्भवतः तस्मिन्ननुसन्धीयमानेऽसम्भवतः प्रत्ययस्यापातप्रत्ययत्वेन तस्योपक्रमबाधकत्वायोगात्। अन्यथा परप्राबल्येऽप्युपक्रमस्य पूर्वत्वमननुसन्दधतां पश्चाच्छ्रुतात्तस्मात्प्रथमश्रुतोपसंहारैकवाक्यत्वाननुसन्धानेन जातस्य ज्ञानस्योपसंहारबाधकत्वापत्त्योन्मत्तोक्तित्वप्रसङ्गात्। न ह्युद्गातृप्रतिहर्त्रपच्छेदयोरिवोपक्रमोपसंहारयोर्यदा यः पश्चादुपस्थितस्तदा तत्पूर्वस्य बाध इत्यनियतो बाध्यबाधकभावः परेणाप्यङ्गीक्रियतेऽतोऽत्र न परप्राबल्यन्यायावतारः किन्तु यत्रापच्छेदादौ वस्तुतोऽप्येकवाक्यत्वाभावात्तदनुपपत्त्यभावेन परं निर्दोषं ज्ञानमुत्पद्यते तत्रैव तस्य परत्वेन पूर्वबाधकत्वम्। य(१)त्वेकवाक्यत्वं तत्र वेदपाठक्रमानुसारेण प्रथमोपस्थितोपक्रमार्थज्ञानानन्तरन्तदेकवाक्यतयोपनिपतन् उपसंहारस्तद्विरुद्धार्थश्चेन्न मुख्यार्थतया तेनान्वेतुमुक्त इति लक्षणाकल्पनापूर्वकं तदेक(२)कवाक्यतयैव तस्यार्थबोधकत्वं न तु तद्विसम्प्रतिपत्त्योपक्रमाननुसन्धाने तद्विसम्प्रतिपत्त्या बाधकत्वमसम्भवेऽपि तदानीन्तनज्ञानं दोषजन्यमापातप्रत्ययरूपमेवेति तद्विरुद्धार्थनिर्दोषज्ञानोदयाभावात् न तस्य परत्वेन बाधकत्वशङ्का। अनेनोपक्रमप्राबल्ये आपातप्रत्ययस्यैव सर्वत्र प्राबल्यापत्त्या विमर्शनैयर्थ्यापत्तिरित्यपि परास्तम्। पूर्वेण परमुत्पत्तिप्रतिबन्धेन हि बाधनीयं न चोपसंहारप्रत्यये उपक्रमैकवाक्यत्वानुपपत्तिवत् श्येनादिवाक्यादापातप्रत्ययानन्तरं न्यायानुगृहीतवाक्यार्थज्ञानोत्पत्तौ किंचित्प्रतिबन्धकमस्ति ततश्च न्यायेन निरुपपत्तिकं पूर्वप्रत्ययं निरस्कुर्वत्परमुत्पद्यत इति न पूर्वप्राबल्ये पताहशशङ्कावकाशः।

किं च प्राबल्येऽपि न्यायानुगृहीतवाक्यार्थज्ञानानन्तरं न्यायाभासभ्रमितचित्तस्य तदेवापातज्ञानं पुनरपि सम्भवतीति तेन तस्य बाधः किन्न स्यात्। न च तत्रापि बाधाभिमान इष्ट इति वाच्यम्। वस्तुतो

---

(१) यत्रत्वेकेति खपु० पा०। (२) तदेकवाक्यतयैवेति खपु० पा०।

बाधप्रयोजके परत्वे सति तेनैव भाव्यनयाऽभिमानमात्रेणा चरितार्थ-त्वात् सन्न्यायोपबृंहितवाक्यार्थज्ञानस्य तद्विरोधिज्ञानं परत्वेपि न बाधकमिति चेत् पूर्वत्वेप्येवं वक्तुं शक्यमिति किमिति नावबुध्यसे । यत्तूपक्रमाधिकरणे उपक्रमप्राबल्यमनपेक्ष्य न्यायान्तरेण स्वराणां वेदधर्मत्वनिर्णय इत्युक्तम्।तत्र न तावदृगादिधर्मत्वे उच्चैः साम्नत्यस्य वैयर्थ्यापत्तेस्तेषां वेदधर्मत्वनिर्णय इत्यु(१)क्तम् । ऋगा(२)ध्यारूढेषु स्तोभाक्षरनिर्वर्त्यगीतिभागेषूच्चैष्ट्वसिद्ध्यर्थतया तस्य सार्थकत्वात् । ननु पूर्वपक्ष्युपपादितरीत्यर्चामुच्चैष्ट्वे तदारूढे साम्नि स्वरान्तरं कर्तुं न शक्यत इति ततः साम्न्युच्चैष्ट्वसिद्धिरुच्यते चेत्तदनध्यारूढेषु स्तोभगीतिभागेषु स्वरान्तरस्य कर्तुमशक्यतया तत्प्रसक्तौ तत्रूच्चैष्ट्वनियमसिध्यर्थत्वेनोच्चैस्साम्नेत्यस्य सार्थकत्वं स्यादिति दूषणं भवतु नाम । मीमांसकमर्यादा तु न भविष्यति । उच्चैर्ऋचा क्रियत इति ऋक्करणकभावनायां विधीयमानस्योच्चैष्ट्वस्योच्चैः प्रवर्ग्येण चरन्तीति प्रवर्ग्यकरणकभावनायां विधीयमानस्येवाङ्गप्रधानार्थतयाऽक्षराभिव्यक्तिद्वारा ऋगङ्गे साम्नीव गीतिकालपरिच्छेदकत्वेन तदङ्गेषु स्तोभगीतिभागेष्वपि तत एवोच्चैष्ट्वलाभात् ।

सत्यम् । एवमपि प्रजापतेर्हृदयादिसामसु ऋगङ्गेषु उच्चैस्साम्नेत्यस्य सार्थकत्वं न निवार्यते।प्रजापतेर्हृदयादि ज्योतिष्टोमे नास्तीति चेन्माभूत् यत्रास्ति तत्र सार्थक्यं भविष्यति।तथासति प्रकरणादुत्कर्षःस्यात् इति चेत् ।तत्किं सिद्धान्ते नास्ति तत उत्कर्षः। अवश्यं हि तस्य सिद्धान्तेप्युत्कर्षो वाच्यः । ज्योतिष्टोमस्य* भूयस्त्वेनोभयश्रुती* त्यधिकरणे याजुर्वेदिकत्वव्यवस्थापनेन तदङ्गानां केषां चित्सामवेदाविहितत्वेपि वेदान्तरविहितानामङ्गानां साङ्गप्रधानविधायकप्रधानवेदस्वर एव नाङ्गवेदस्वर इति * गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोग * इत्यधिकरणे व्यवस्थापनेन च ज्योतिष्टोमतदङ्गेषु सामवेदस्वरस्य निरवकाशत्वात् । त्रयाणामपि वेदस्वरविधीनां प्रकरणाद्दुर्बलीयोभिर्वाक्यै स्तत्तद्वेदविहितसकलकर्मविषयत्वमभ्युपगम्यैव गुणमुख्यव्यतिक्रमाधिकरणे याजुर्वेदिकाधानाङ्गस्य

---

(१) इति युक्तमिति खपु० पा० ।
(२) ऋगनध्यारूढेषु इति ख० पु० पा० ।

सामवेदोत्पन्नस्य वारवन्तीयसाम्नः प्रधानवेदस्वर एव नोत्पत्तिवेदस्वर इति निर्णीतत्वाच्च । अपि च स्वरविधीनामृगादिधर्मत्वपक्षे उच्चैस्साम्नेत्यस्यानुत्कर्षो वक्तुं शक्यः । प्रजापतेर्हृदयेनापि पक्षं प्रत्युपतिष्ठत इत्यग्नौ श्रवणात् । अग्नेश्च प्रकृतौ ज्योतिष्टोमे ऽपि सन्निधानस्य दाशमिके* अग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्ति* रित्यधिकरणे समर्थितत्वात् । ननु च प्रजापतेर्हृदयादिमात्रविषयत्वे उच्चैः साम्नेति स्वरविधानमल्पविषयमनर्थकप्रायं स्यात् अत एव प्रजापतेर्हृदयादिविषयत्वे इदमेव दूषणं वार्तिके दर्शितमिति चेन्न । वेदधर्मत्वपक्षे पि त्रयाणामपि स्वरविधीनां वाचनिकस्वरान्तरविधानादिविषयपरिहारेण उपक्रमप्राबल्यमेव मूलयुक्तिः धर्मोपदेशादित्यभ्युच्चयमात्रमिति दर्शयितुमेव वार्तिके प्रजापतिहृदयविषयत्वेन सार्थकत्वशङ्कामुद्भाव्य तत्र तात्कालिकं समाधानाभासं प्रदर्श्य तदाभासत्वमप्यग्रे स्वयमेवाविष्कृतम् । तस्माद्धर्मोपदेश इत्यभ्युच्चय इति न ततो वेदधर्मत्वनिर्णय इत्यु(१)क्तं नाप्यभ्यासात्तन्निर्णय इत्युक्तम् । बहुबाधस्याप्यन्याय्यत्वादिति हि तत्रमूलम् । नचाभ्यस्तवेदशब्दार्थबाधे बहुबाधः चतुर्णामेव हि वेदशब्दानां तदा लक्षणा स्यात् ऋगादिशब्दार्थबाधे त्वग्नेर्ऋग्वेद इत्यादावुच्चैर्ऋचा क्रियत इत्यादौ च श्रुतानां षण्णामृगादिशब्दानां लक्षणेति तत्रैव बहुबाधः स्यादिति नात्राभ्यासप्राबल्यं वेदशब्दार्थबाधे ह्यग्नेर्ऋग्वेद इत्यादावप्यृगादिशब्दार्थबाध आवश्यकः भिन्नार्थयोः सामानाधिकरण्यस्यान्यतरलक्षणया समर्थनीयत्वात् । किंचाग्नेर्ऋग्वेद इत्यादौ तस्मादृचा क्रियत इत्यादौ चर्गादिशब्दस्याप्यस्त्यभ्यासः । न च वेदशब्दश्चतुर्वारमावर्त्तितः ऋगादिशब्दास्तु द्विवारमित्यृगादिशब्दाभ्यासाद्वेदशब्दाभ्यासो गरीयानिति वाच्यम् । उच्चैष्ट्वमृग्धर्मो वेदविशेषधर्मो वोपांशुत्वं यजुर्धर्मो वेदविशेषधर्मो वे(२)त्यादिसन्देहत्रयापाकरणाय प्रत्येकं वेदशब्दाभ्यासे वक्तव्ये त्रयो वेदा अजायन्तेति साधारणोपक्रमगत एकस्तत्तदृगादिशब्दसमानाधिकृत एक इति प्रत्येकं वेदशब्दद्वयस्यैव सम्भवेन साम्याद्यजुरादिशब्दसमानाधिकृ-

(१) इति न युक्त मिति खपु० पा० ।

(२) उच्चैष्ट्वं सामधर्मो वा वेदशेषधर्मोवेति उपांशुत्वादित्रयसन्देहेत्याद्यधिकं खपु० पाठे ।

तत्वेदशब्दस्य भिन्नविषयस्य गोदिशब्दार्थनिर्णयेऽनुपयोगात् । तस्मान्नाभ्यासाद्वेदधर्मत्वनिर्णयः शक्यःकर्तुमिति सूत्रस्थप्रायशब्दस्य बाहुल्यार्थो भाष्यकारादिभिर्न स्पृष्टः ।

यत्त्वृगादिशब्दानामपि वेदवाचकत्वादुच्चैष्ट्वादीनां वेदधर्मत्वनिर्णय इत्युक्तम् । तत्तुच्छम् । तेषां मुख्यत्रार्थवशेन पादव्यवस्थेत्यादिशब्दार्थनिर्णयाभियुक्तानादिवृद्धव्यवहारानुसारेणर्च एव मधुकृत ऋग्वेद एव पुष्पं यजूंष्येव मधुकृतो यजुर्वेद एव पुष्पं सामान्येव मधुकृतस्सामवेद एव पुष्पमित्यादिवैदिकप्रयोगानुसारेणगोदिशब्दानां मन्त्रविशेषादिवाचकत्वेऽवश्याङ्गीकर्तव्ये तत्सम्बन्धविशेषादेव तेषां वेदविशेषेषु लक्षणया प्रयोगोपपत्त्याऽनेकार्थकल्पनस्यान्याय्यत्वात् । यत्तु क्वचिदुक्तं निगदाधिकरणोदाहृतेन वेदोपक्रमरहितेनोच्चैर्ऋचा क्रियते नीचैस्साम्नोपांशु यजुषोच्चैर्निगदेनेति वाक्येनोच्चैस्त्वादेर्मन्त्रधर्मतया उक्तत्वात् वेदोपक्रमताच्युच्चैर्ऋचेत्यादिवाक्येन मन्त्रधर्मताया उक्तावेकस्मिन्साम्न्युच्चैष्ट्वनीचैष्ट्वयोर्विरुद्धयोरष्टदोषदुष्टो विकल्पः प्रसज्येतेति वेदोपक्रमवाक्ये वेदधर्मता नतूपक्रमप्राबल्यात् तथा चेदमपि वेदोपक्रमाधिकरणागतस्य लिङ्गाच्चेति सूत्रस्यार्थोऽस्त्विति । तदतितुच्छम् । नहि वेदोपक्रमाधिकरणविषयवाक्यान्निगदाधिकरणविषयवाक्यं भिन्नं येनोभयत्र पाठभेदः शक्येतापि । कथं तर्हि निगदाधिकरणे *निगदो वा चतुर्थः स्याद्धर्मविशेषादिति* सूत्रेणाग्नीदग्नीन्विहर बर्हिस्तृणीहीत्यादिपरप्रेषणरूप निगदश्चतुर्थमन्त्रजातं स्यादृक्सामरूपस्य तस्योपांशु यजुषोच्चैर्निगदेनेति धर्मान्यत्वेन यजुर्जातादपि भिन्नत्वादिति पूर्वपक्षितम् । न हि वेदोपक्रमाधिकरणविषयवाक्य उपांशुत्वं यजुर्जातधर्मः येन धर्मान्यत्वं हेतुः सिद्धवदुपादीयेतेति चेत्सत्यम् । वेदोपक्रमाधिकरणपूर्वपक्षरीत्योपांशुत्वं यजुर्जातधर्म इत्युपेत्य स हेतुरुक्तः । उक्तं हि न्यायसुधायां निगदाधिकरणे वेदो वा प्रायदर्शनादित्यत्रोच्चैस्त्वोपांशुत्वयोर्वेदधर्मत्वे वक्ष्यमाणेपि तत्रत्यपूर्वपक्षे स्थित्वोपांशुत्वस्य यजुर्जातधर्मत्वेनोच्चैस्त्वस्य तदन्यतोक्तेति तत्रैव व्यपदेशाच्चेति द्वितीयस्य पूर्वपक्षसूत्रस्यापि प्रयोजनमुक्तम् । धर्मान्यत्वस्य तार्तीयवाक्याधिकरणविरुद्धत्वेनाभ्युच्चयमात्रत्वान्न मुख्यहेत्वभिधानार्थमिदं सूत्रमिति । ननु नयविवेके वेदोप-

क्रमाधिकरणविषयवाक्यान्निगदाधिकरणविषयवाक्यस्य भेदोऽभ्युपगतः। सत्यं निगदाधिकरणभाष्ये उच्चैस्त्वादीनां मन्त्रधर्मत्वव्यवहारदर्शनात् तत्स्वारस्यानुरोधेन तत्र तद्भेदोऽभ्युपगतः। ननु निगदोपक्रमाधिकरणविषयवाक्ययोः पाठभेदोऽभ्युपगतः प्रत्युत तद्भेददर्शनग्रन्थेनैव तयोः पाठभेदोऽप्युद्घाटितः तत्र ह्युच्चैष्ट्वादीनां निगदाधिकरणे मन्त्रधर्मत्वमुक्तं वेदोपक्रमाधिकरणे वेदधर्मत्वमिति विरोध इति शङ्कायां वेदोपक्रमवाक्यान्निगदाधिकरणविषयवाक्यान्तरतया तत्समाधानमुखेन तयोर्भेदः प्रदर्शितः। एवमभेदभ्रान्तिमूलविरोधशङ्काया भेदप्रदर्शनेन निरसनं पाठभेदमेव व्यवस्थापयति पाठभेदभ्रमायोगात्। वेदोपक्रमाधिकरणवरदराजीयेपि तदधिकरणपूर्वपक्षरीत्या वेदोपक्रमवाक्यस्य मन्त्रधर्मस्वरविधायकत्वे निगदाधिकरणोदाहृतवाक्यान्तरमन्त्रधर्मस्वरसिद्धेरेतद्वैयर्थ्यं स्यादिति शङ्कया एतदधिकारान्वयपरं तदाश्रयान्वयपरमिति वैयर्थ्यपरिहारेण च पाठभेदः स्फुटीकृतः। न हि क्वचित्साम्न्युच्चैष्ट्वविधिरन्यत्र नीचैस्त्वविधिरिति भेदे एकेनान्यस्य सिद्धार्थतया वैयर्थ्यशङ्कोन्मिषति। न वा विधेयभेदे एकमपूर्वान्वयबोधकमन्यदपूर्वीयमन्त्रविशेषान्वयबोधकमिति सार्थकत्वोपपादनं सङ्गच्छते इत्यलमतिविस्तरेण। तस्माद्वेदोपक्रमप्राबल्येनैव वेदधर्मत्वनिर्णयः।

अश्वप्रतिग्रहेष्ट्यधिकरणेपि न पूर्वाधिकरणसिद्धकर्माङ्गत्ववशेन दातुरिष्टिरिति निर्णयः अन्योन्याश्रयापत्तेः। पूर्वाधिकरणे ह्येतदधिकरणसिद्धं दातु रिष्टिरित्यमुमर्थमवेक्ष्य कर्माङ्गत्वनिर्णयः। यदि ह्यृत्विजः प्रतिग्रहीतुरिष्टिः स्यात्तदा तस्याधिकारसिद्धये तद्गाम्येव फलं कल्पनीयमिति कथं यजमानगामि फलङ्कर्माङ्गत्वं भवेत्। अत एवोत्तराधिकरणन्यायेन दातुरिष्टिरिति स्थिते इदमधिकरणमारभ्यमिति भाष्यादिषु दर्शितम्। ननु प्रतिग्रहीतुरिष्टिरिति पक्षेपि कर्माङ्गत्वं सिध्यति यजमानस्यापि द्वादशरात्रीर्दीक्षितो भृतिं वन्वीतेति विहितदक्षिणार्थद्रव्ययाचनरूपभृतिवनतप्राप्तेश्च प्रतिग्रहीतृत्वात्। यद्येवं न कर्माङ्गत्वेन दाननिमित्तेष्टिः सिध्यति। कर्ममध्ये प्रतिग्रहीतुर्यजमानस्य हयांसि मम भोगाय भवेत्यश्वप्रतिग्रहनिमित्तयामिष्टिः कर्माङ्गभूतेति वक्तुं शक्यत्वात्। वार्तिकेपि सालिङ्गादार्त्विजे स्यादिति सूत्रं व्याख्यातम्। कथं तर्हि मैत्रायणीयशाखायां दातुरिष्टि रिति भवि-

ष्यति । दातृविषयोपक्रमवशात्कर्माङ्गत्वेन सूत्रस्थलिङ्गपदङ्गमेसामर्थ्यपरं व्याख्याय तत्रापरितोषेणैवोपक्रमप्राबल्यरूपवाक्यसामर्थ्यपरत्वेन सिद्धाया इष्टेः शाखान्तरेऽप्यभेदात्तत्रापि दातृविषया भविष्यति इत्येतदभिप्रायेणैवोक्तम् । तन्त्रसारे मैत्रायणीयशाखायामित्यादि यथाश्रुते प्रतिग्रहीतुरेव वा साभवतु । अत एव वार्तिके मैत्रायणीयशाखावाक्यमेवाधिकृत्योक्तम् ' यत्तु प्रतिग्रहीतुर्विधायकं तद्यदि तावत्कर्माङ्गत्ववशेन विनाप्युपक्रमविशेषात्पूर्ववाक्यानुसार्येव भवति ततस्तेनापि दातुरेव । अथतु स्वतन्त्रप्रतिगृह्णातिवशात्प्रतिग्रहीतुर्विधायकम् ततः प्रतिग्रहीतुः पूर्ववाक्याच्च दातुरित्युभौ करिष्यत' इति तस्मान्न कर्माङ्गत्वेन दातुरिष्टिरिति निर्णयः नाप्यधिकारान्तराकल्पनालाघवेन प्रतिग्रहनिमित्तत्वेपि भूतिवचनप्राप्ताश्वप्रतिग्रहप्रयुक्तपौण्डरीकानुप्रवेशसम्भवेनाधिकारान्तरस्याकल्पनीयतया लाघवाविशेषात् । यत्तु भूतिवचनप्राप्ताश्वस्वीकरणस्वैधदानसम्बन्धित्वाभावान्न प्रतिग्रहरूपमिति । तत्तुच्छम् । चन्द्रमसि मम भोगायभवेत्याह यथादैवतमेवैनाः प्रतिगृह्णातीति श्रुत्यैव तस्य प्रतिग्रहरूपतोक्तेर्गुर्वर्थनिवेशौषधार्थवृत्तिक्षीणयक्ष्यमाणाध्यापनाध्वसंयोगवैश्वजितेषु द्रव्यसंविभागो बहिर्वेदिभिक्षमाणेष्विति स्मृतौ यज्ञार्थमर्थिने दानस्याप्यावश्यकत्वेन विहितत्वाच्च । गुरुणाप्यधिकारान्तरप्रसङ्गादिति न मूलयुक्तितयोक्तम् । अत एवोपक्रमतो दाननिमित्ततबुद्धौ विपरिवर्तमाना यथावभातितथावधारयितुं युक्तेत्यनन्तरो गुरुग्रन्थो मूलयुक्तिमाहेति दीपशिखायामवतारितः ।

यत्तु भाष्यकारमतानुरोधात्प्रतिग्रहीतुरियमिष्टिरस्त्वित्युक्तम । तदयुक्तम । तर्हि सा लिङ्गादार्त्विजे स्यादिति सूत्रानुरोधादार्त्विककर्मणि प्रतिग्रहे इयमिष्टिः नतु यजमानकर्मणि दाने इतियुक्तम । नच तदुपपद्यते । आर्त्विकप्रतिग्रहस्य निमित्तत्वेऽधिकारकल्पनावश्यम्भावेन यावतोश्वान्प्रतिगृह्णीयादित्यविशेषश्रवणाल्लौकिकप्रतिग्रहस्यापि निमित्तत्वदुर्वारतयार्त्विकप्रतिग्रहस्यैव निमित्तत्वमिति नियन्तुमशक्यत्वेन तेषां तत्सूत्रानुरोधलाभाभावात् पूर्वाधिकरणपूर्वोत्तरपक्षसूत्रद्वयानाञ्जस्यापत्तेश्च । तत्र * दोषात् त्विष्टिर्लौकिके स्याच्छास्त्राद्धि वैदिके न दोषः स्यादिति * सूत्रेणयमिष्टिर्लौकिकेनिमित्ते-

ति पूर्वपक्षं कृत्वा * अर्थवादो वानुपपातात्तस्मायज्ञे प्रतीयेतेति * सूत्रेण वैदिकानिमित्तेति सिद्धान्तितं तद्दातुरिष्टिरित्येतदधिकरणसिद्धान्ताभ्युपगमे श्लिष्यते येयं दातुरिष्टिः सा किं लौकिकेऽश्वदाने मित्रदायादादिभ्यः स्नेहाद्युपाधिना कृते न केसरिणो ददातीति प्रतिषिद्धे दोषनिर्घातार्था स्यादुत पौण्डरीकादिदक्षिणारूपाश्वदाने निमित्ते तद्दाननिमित्तकर्माङ्गभूतेति संशये वरुणग्रह(१)दोषश्रवणात्प्रतिषिद्धे लौकिक इयमिष्टिर्न वैदिके, अन्वहं द्वादशानि शतानि ददात्यश्वसहस्रमुत्तम इत्यादिविशेषविषयत्वेन दोषास्पृष्टत्वादिति प्राप्ते लौकिकाश्वदातुर्वरुणग्रहशब्दितजलोदरव्याधिप्रादुर्भावस्यादृष्टत्वेन तन्निर्घातस्य फलत्वकल्पनायोगात् दोषश्रवणस्य सादृश्यनिबन्धनावश्यकर्तव्यतापरार्थवादमात्रत्वान्न तदनुरोधेन लौकिके (२) किन्तु वैदिकया इष्ट्या वैदिकमेव निमित्तं बुद्धिस्थं भवतीति तदतिक्रमे कारणाभावात् वैदिके निमित्ते (३) नेयमिष्टिः । न च वाक्येन वैदिकत्वसामान्यस्य बुद्धिस्थत्वापादकतया सन्निधिलक्षणस्थानरूपस्य बाधादश्वदानमात्रे निमित्ते सेयमिष्टिरस्त्विति शङ्क्यम् । लौकिके पुरुषार्थत्वं वैदिके क्रतुशेषतेति वैरूप्यापत्तेरिति सिद्धान्त इति प्रतिग्रहीतुरिष्टिरित्येतदधिकरणसिद्धान्ताभ्युपगमे तु किमेषा लौकिके प्रतिग्रहे वैदिकेवेति विचारपरं (४) वक्तव्यम् । तत्र लौकिकवद्वैदिकस्याप्यृत्विक्प्रतिग्रहस्य विशेषविध्यभावेन नोभयतो दतः प्रतिगृह्णातीति दोषवत्वाच्छास्त्राद्वैदिके न दोषः स्यादिति न सङ्गच्छते । अत एव वैदिकस्य वेदविहितमेव निमित्तं बुद्धिस्थं भवतीति न्यायाप्रसरात् कर्माङ्गत्वहेत्वभावेन केवलं पुरुषार्था सती लौकिकेपि स्यादिति यच्चाइत्यपि न सङ्गच्छते । आर्त्विज इति ऋत्विजां सम्बन्धी यजमानः तस्मिन्दातरीयमिष्टिः स्यादित्यादिप्रकारेण वार्तिकएव योजितम् । याजकाः प्रतिग्रहीतुरेवेयमिष्टिरिति वदन्तीत्येतत्तु वयं न जानीमः । यदि च ते मैत्रायणीयशाखायां दा(५)तृप्रतिग्रहसद्भावात् ततः प्रति-

---

(१) ग्रहणेति खपु० पा० । (२) नेयमिष्टिरिति कपु० नास्ति ।

(३) लौकिके निमित्ते इति खपु० पा० ।

(४) तदिति खपु० पा० ।

(५) दातृप्रक्रमाभावादिति खपु० पा० ।

प्रतिग्रहीतुरियमिष्टिरिति वदंस्तु स्तदा काविरोधः । उक्तं हि वार्तिके । प्रतिग्रहीतरि स्पष्टं यदि वाक्यान्तरं तदा । भवेत्तस्यापि तेनेष्टिर्दातुस्तु न निवार्यते इति । प्राभाकरैः पौण्डरीके श्रूयत इति कृत्वाचिन्ता न दातुरिष्टिरिति सिद्धान्तसिद्ध्यर्थमुक्ता किमुपक्रमबलाद्दातुरिष्टिरिति सिद्धावपि वैदिके दान इत्यनारभ्याधीतवाक्यान्न सिध्यति वैदिकस्य वैदिकमेव निमित्तमिति नियमस्य क्षामवत्यादिषु व्यभिचारेणासिद्धेः तत्सिद्धावपि क्रतुदक्षिणारूपाश्वदानं निमित्तमिति न सिद्ध्यति स्मृतिपुराणादिप्रसिद्धसूर्यप्राप्त्यादिफलकाश्वदानानामपि 'ये अश्वदाः सह ते सूर्येणे'त्यादिवेदमूलानां सत्वात्तत्सिद्धावपि कर्माङ्गत्वं न सिध्यति क्रतुदक्षिणारूपस्याश्वदानस्याव्यभिचरितक्रतुसम्बन्धित्वेऽपि पर्णतावैषम्यात् पर्णतायाः शेषीभूतजुह्वन्वयप्रतीतेस्तद्वदपूर्वार्थत्वं, इह तु दान निमित्तत्वेन श्रुतं न शेषित्वेनाप्यन्वयार्हे निमित्ततया अन्वये मुख्यार्थेना शेषितान्वये नियोगीयलक्षणेति वृत्तिद्वयासम्भवात् इत्यनुशयानैः कर्माङ्गत्वासिध्यर्थं(१)सोक्ता। नचकर्माङ्गत्वनिवृत्तावधिकारान्तरकल्पनायां प्रसक्तायां राजसूयवदार्थवादिकपापविमोकार्थिनोऽधिकारःकल्प्यः पापन्तु प्रतिगृहीतुरेव न दातुः।यद्यपि प्रतिगृहीतुरपि यथाश्रुतार्थवादप्रतीति वरुणग्रहनिर्मोकफलकल्पनमशक्यं तथापि अश्रुतफलकल्पनातो वरमयोग्यांशान्वय्युदासेन पापापनयनमात्रस्य फलकल्पनमित्युपक्रमोपसंहारोभयसामञ्जस्यलाभात् प्रतिगृहीतुरेवेष्टिः स्यादिति दातुरिष्टिरिति सिद्धान्तसिद्ध्यर्थमेव सोक्तेति वाच्यम् । न केसरिणो ददातीति निषेधेन लौकिकाश्वदातुरपि पापसद्भावात् । नचायं विश्वजित्प्रकरणाम्नातत्वात्तत्रत्यसर्वस्वदानविधिशेषपर्युदासो न लौकिकाश्वदानानिषेध इति वाच्यम् । लौकिकाश्वदाननिषेधेन सम्भवाच्चरितार्थत्वं न केसरिवाक्येनान्यगतिकयेयजमाहत्वाक्यवद्गुणानाञ्च परार्थत्वादिति न्यायविरुद्धस्य गुणवाक्यं सत् गुणवाक्यान्तरशेष इत्यस्य कल्पयितुमशक्यत्वात् न केसरिणो ददाति नोभयतो दतःप्रतिगृह्णीयादिति सम्प्रीतपञ्चपुरुषार्थविशेषसाहचर्येण पुरुषार्थपरत्वस्यैव प्रतीयमानत्वाच्चेत्यनुशयानैः तत्सिद्ध्यर्थं सोक्ता तस्मादिय-

---

(१) नोक्तेति खपु० पा० ।

मित्युद्देश्यतुरेव उपक्रमानुसारेणैव च तथा सिद्ध्यतीत्यलं विस्तरेणायस्य- क्ताधिकरणसिद्धान्त(१)उपसंहारप्राबल्यनिर्वाह इत्युपक्रमप्राबल्यो- पगमे तद्विरोधापादनं तन्न। न तावदक्ताधिकरणविरोधः। अथो वेदा अजायन्तेत्युपक्रमे उपसंहारगतऋगादिविरोधिनां वेदानामिव अ- क्ता इत्युपक्रमे तद्गतविरोधिनां तैलादीनां प्रतीतेरभावात्। ननु त- त्र तैलादीनां शब्दतः प्रतीत्यभावेपि शब्दोपात्ताञ्जनक्रियाक्षिप्तद्र- व्यविशेषतया प्रतीतिरस्तीति चेन्न। अर्थवादश्रुतस्य घृतस्यैव त- त्साधनत्वेनान्वयसम्भवे आक्षेपानवतारात् शीघ्रप्रवर्त्तमाननिराकाङ्क्षी- कृतेर्थे विलम्बितस्य श्रुतिविनियुक्तमन्त्रस्य विनियोगे मन्त्रलिङ्गस्येव अप्रवृत्तेः। यदि हि अर्थवादान्वयात् प्राग्विध्युद्देशः पर्यवस्येत् तदा तदाक्षिप्ततैलसाधननिर्णयादर्थवादस्तदनुरोधेन नेतव्यः स्यादपि न- त्वेवं, प्ररोचनां विना विधेः पर्यवसानासम्भवात् अनेनैवाशयेन प्ररोचनानपेक्षविध्यपर्यवसानं वार्तिके दर्शितम्। *समाप्यते विधिः कश्चित्कदा चिन्न प्ररोचितः। घृते प्ररोचनां दृष्ट्वा विधिस्तत्रानुमीयत इति* सन्दिग्धे तु वाक्यशेषादिति*सूत्रेप्यनेनैवाभिप्रायेण प्ररोचना- नपेक्षविध्यपर्यवसानं दर्शितम्। इदं सूत्रं न्यायसुधायामेवं व्याख्यातं अर्थाद्वा कल्पनैकदेशत्वादिति उत्तरसूत्रात्कल्पनैकदेशत्वादिति पद- द्वयमिहानुषञ्जनीयं तथाचायमर्थः सन्दिग्धेषु वाक्यशेषादर्थवादा- त्कल्पना घृतादेर्व्यवस्थयावधारणा एकदेशत्वात् एकोर्थो दिश्यते- प्रतिपाद्यते याभ्यां विध्यर्थवादाभ्यान्तावेकदेशौ तत्वात् विध्यर्थवा- दयोरेकार्थप्रतिपादकत्वात्। यदि हि अर्थवादान्वयं विना विद्ध्यु- द्देशः पर्यवस्येत् तदा, वाक्यैकवाक्यतयान्वयिनोर्थवादस्यान्वयात्प्रा- गेवार्थाक्षिप्तद्रवद्रव्यविशेषकल्पनया निर्णये जाते पश्चात्तनार्थवादा- नर्थक्यपरिहाराय वैकृताङ्गवदन्यतराकाङ्क्षयार्थवादस्यान्वये सत्यपि- निर्णीतार्थत्यागायोगात् तदनुरोधेन अर्थवादस्यैव घृताघृतलक्षक- त्वं स्यादपि नत्वेवं, प्ररोचनाम्विना प्रवर्तकस्य विधेः पर्यवसानास- म्भवात्। तथाच शीघ्रप्रवृत्तिकप्रत्यक्षश्रुतिप्रापिते घृतरूपविशेषे सति उपक्रमस्थेनापि द्रवद्रव्यसामान्येन तैलादिविशेषो नाक्षिप्यते नैराका- ङ्क्षयादिति नोपक्रमसामान्यश्रवणे वेदोपक्रमन्यायावतार इति।

(१) पुस्तकेषु तु सिद्धान्तोपसंहार इति पाठो दृश्यते।

ननु यदि तैलादीनामाक्षेपतः प्रतीतिर्नास्ति तदा कोट्यन्तरानुपस्थित्या सन्देहायोगात्सूत्रे कथं सन्दिग्ध इत्युक्तम् । उच्यते अर्थवादापरामर्शदशायां विध्युद्देशमात्रपरामर्शिनः सम्भवत्यव्यवस्थितार्थप्रतीतिः घृततैलवसादीनामन्यतमं अञ्जनसाधनं भविष्यतीति सापि सन्देहग्रहणेन ग्रहीतुं शक्यते अनवधारणात्मकत्वाविशेषात् उक्तं च न्यायसुधायां सन्दिग्धशब्देनाव्यवस्थितार्थप्रतीतिरभिमतेत्यादि । ननु यद्युपक्रममात्रपर्यालोचनालब्धाऽव्यवस्थितार्थप्रतीतिरुपसंहारलब्धया घृतव्यवस्थया वार्यते तर्हि सिद्धमुपसंहारप्राबल्यमिति चेत् । उच्यते । उपक्रमश्रुतार्थस्योपसंहारेणोपमर्द एव तत्प्राबल्यमापद्यते नतूपक्रमश्रुतार्थोपजीवनेन श्रुत्यन्तरापरामर्शिपुरुषबुद्धिकल्पितार्थस्य तेनोपमर्देऽपि, अन्यथा उद्भिदादिवाक्ये यागश्रवणात् घृतादीनामन्यतममिह द्रव्यमिति कल्पना अतिदेशप्राप्तसोमव्यवस्थया वारणीयेत्युपदेशादतिदेशः प्रबलः स्यात् । नन्वास्तामेवं प्रतिबन्दी तथापि सुहृद्भावेन पृच्छ(१)सि उपसंहारानुसारेणोपक्रमस्य सङ्कोचोऽयमेकदेशे बाधो भवत्येव कथं दुर्बलेन प्रबलबाध इति । नचोपक्रमे तैलादिविशेषाणामिव द्रवद्रव्यसामान्यविशेषस्याप्याक्षेपं विना प्रतीतेर्नास्ति सङ्कोच इति वाच्यम् । 'वासः परिधत्ते एतद्वै सर्वदैवत्यं वैवासो यत्क्षौमम्'मित्युदाहरणान्तरे उपक्रमे शब्दतः प्रतीतस्य वाससः सामान्यस्य उपसंहारानुसारेण सङ्कोचोपगमात् । नचार्थवादवाक्यानां पदैकवाक्यत्वाद्गामानय शुक्लामित्यत्र गोशब्दस्य शुक्लव्यक्ताविव कृष्णं वासः परिधत्त इत्यत्र वासःशब्दस्य कृष्णव्यक्ताविव च विध्युद्देशोपात्तसामान्यस्यार्थवादोक्तविशेषपर्यवसानं युज्यत इति वाच्यम् । तत्र गोवासःशब्दोपात्तं सामान्यं विशेषयितुमेव शुक्लकृष्णशब्दसन्निधानमिति तदवैयर्थ्याय गोवासःश्रुतिसङ्कोचेऽपि प्रकृते सर्वदैवत्यस्तुत्यर्थक्षौमशब्दसन्निधानेन सङ्कोचायोगात् पदैकवाक्यतायामपि हि सन्निधिमात्रं न सङ्कोचकं दुर्बलेन सन्निधिना श्रुतिबाधानुपपत्तेः किंत्वनन्यार्थसन्निधिः स्वानर्थक्यपरिहाराय श्रुतिसङ्कोचकः आनर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायात् । यदि च पदैकवाक्यतायां सन्निधिमात्रं सङ्कोचकं भवेत् तदानीमश्वे-

---

(१) पृच्छामीति खपु० पा० ।

न गच्छति श्वेतेन पटेन प्रावृत इत्यत्र पटसम्बन्धनिराकाङ्क्षश्वेतशब्दसन्निधानेनापि श्रुतेः सङ्कोचः स्यात् तस्मादुक्तव्यमिदं कथं दुर्बलेनोपसंहारेण प्रबलस्योपक्रमस्य सङ्कोचरूपो बाध इति। उच्यते। न प्रबलं प्रबलमित्येव दुर्बलोपस्थापितं निगृह्णाति किन्तु सति विरोधे। नचात्र दुर्बलस्याप्युपसंहारस्य उपक्रमेण विरोधः प्रत्युत तदाकाङ्क्षितसमर्पकतयानुगुण्यमेव अवश्यं हि अनुष्ठेयतया उपस्थाप्यमानं सामान्यं अनुष्ठानाय कञ्चिद्विशेषपर्यवसानमपेक्षते निर्विशेषसामान्यस्य सकलविशेषाणां वा उपादातुमशक्यत्वात् तथा च क्व विशेषपर्यवसानमित्यपेक्षायां स यदपेक्षितो विशेषः कथमपि श्रुतो न लभ्यते तदाक्षेपकसामान्यबलात्तदनुष्ठातृपुरुषबुद्ध्युपस्थापितं अनियतं विशेषमासाद्य निवृत्तः स्यात्तल्लाभे तु तत्रैव पर्यवसानं युक्तं क्लृप्तकल्प्योपस्थितयोर्विशेषयोः क्लृप्तोपस्थितिकस्यैव लाघवेन ग्राह्यत्वात्। नच वाक्यशेषस्थक्षौमादिग्रहणेऽपि तत्राप्यनुष्ठानाय विशेषाकाङ्क्षायामनियतविशेषकल्पनमावश्यकमिति वाच्यम्। तथापि सर्वतो व्यावृत्ते व्यक्तिविशेषेऽनुष्ठानाय ग्राह्ये यावान्विशेषो वाक्यशेषे श्रुतो लभ्यते तावान् स एव ग्राह्यो बुद्धिलाघवादिति तदुपेक्षाकारणाभावात्। एवं च यद्युपक्रमस्य सङ्कोचोऽयमेकदेशबाध एव तथाप्यसौ तेनैवाकाङ्क्षितेनोपसंहारेण कारित इति न तेनास्य बाधः। एतेन अन्यार्थसन्निधानस्य सङ्कोचकत्वमयुक्तमिति निरस्तं सत्यामाकाङ्क्षायां तस्यापि सङ्कोचकत्वात् अत एवाग्नेय्याऽऽग्नीध्रमुपतिष्ठत इत्यत्राग्नेयीश्रुतेः स्तोत्रादिकार्यान्तरार्थेन अग्न आयाहि वीतय इत्याद्याग्नेयीविशेषसान्निधानेन तत्परतया सङ्कोचोऽभ्युपेयते आग्नेय्या आग्नीध्रमुपतिष्ठत इत्यादिविधेः प्रकरणापादितसामान्यसम्बन्धानां सन्निहितानामाग्नेयीनामाग्नीध्रोपस्थापनात्मकविशेषसम्बन्धमात्रबोधने लाघवं अप्रकृतानामाग्नेयीनां ज्योतिष्टोमापूर्वीयत्वलक्षणसामान्यसम्बन्धोऽपि अनेनैव बोधनीय इति तद्विषयत्वे विधिगौरवमिति लाघवानुसारिणो विधेः सन्निहितास्वाकाङ्क्षोदयात्। यद्यप्यग्न आयाहि वीतय इत्यादीनां प्रदेशान्तराम्नानेन सन्निधानं नास्ति तथापि ज्योतिष्टोमप्रकरणाम्नानं तावदस्ति तथा च यथा स्तोत्रादिकार्यान्तरार्थेन प्रकरणाम्नानेन विध्याकाङ्क्षया आग्नेयीश्रुतिसङ्कोचः तद्वदिहापि सामान्यश्रुति-

सङ्कोचः तदाकाङ्क्षया सन्निधानानुसारेण युक्तः आहस्यैव च सूत्रकारेणान्यार्थसन्निधानस्याकाङ्क्षावशाद्विशेषकत्वं षष्ठे वर्णितम । तत्र ह्येका देया षड् देयाश्चतुर्विंशतिर्देयाः शतं देयं सहस्रं देयमपरिमितं देयं इत्याधानदक्षिणाकल्पे भेदश्रुतावपरिमितशब्दो बहुत्वार्थकतया एकादिशब्दवद्दक्षिणाकल्पभेदपर इत्यपरिमाणे च शिष्टस्येत्यधिकरणनिर्णयानन्तरं सोपरिमितशब्दः किमनियतबहुत्वार्थः उत सहस्राधिकबहुत्वार्थ इति संशये दक्षिणाकल्पान्तरपरसहस्रसन्निधानेन विशेषणासम्भवादनियतबहुत्वार्थे * इत्यनियमो विशेषादिति * सूत्रेण पूर्वपक्षं कृत्वा अपरिमितशब्दस्य प्रतियोगिसापेक्षस्वभावबहुत्वार्थकत्वात्तदाकाङ्क्षया अन्यार्थसन्निधानमपि विशेषकमतः सन्निहितसहस्राधिकबहुत्वार्थ इति । * अधिकं वा स्याद्बह्वर्थत्वादितरैः सन्निधानादिति * सूत्रेण सिद्धान्तितं यदेवं सर्वथैवानन्वयिनि विध्यन्तरे सन्निधानस्याप्याकाङ्क्षावशाद्विशेषकत्वं तदा किमु वक्तव्यं स्तावकत्वेनान्वयिन्यर्थवादे सन्निधानस्य तद्वशात् विशेषकत्वमिति तस्मात्साकाङ्क्षानुसारेण सङ्कोचो नोपसंहारेण बलात्कारित इति न तेन तस्य बाधः एवमेवोद्भिदा यजेतेत्यत्र यजिना सामान्यतः उपस्थापितस्य द्रव्यस्यानुष्ठानाय विशेषाकाङ्क्षानुरोधेनातिदेशिकसोमरूपविशेषपर्यवसानात्मकसङ्कोचोपि नातिदेशेन कारित इति न तेनापदेशस्य बाधः अतएव दशमे अतिदेशादुपदेशस्य प्राबल्येन औपदेशिकशरादिनातिदेशिककुशादिबाधव्युत्पादनानन्तरं यत्र वायव्यं श्वेतमालभेतेत्यादौ औपदेशिकश्वेतादेरातिदेशिके छागादौ पर्यवसानं सम्भवति न तेन तस्य बलवतापि बाधनं किन्तु स्वाकाङ्क्षानुसारेण तत्रैव पर्यवसानमुक्तं *नैमित्तिके कार्यत्वात् प्राकृतेस्यात्सदापत्ते*रिति सूत्रेण। यस्तु कस्यचित् स्वयमनाकाङ्क्षित एव सङ्कोचो बलादन्येन कार्यते स एव तस्य तत्कृतो बाधः यथाहवनीयशास्त्रस्य पदशास्त्रेण, आहवनीये जुहोतीति शास्त्रेण न होमो विधीयते येन सकलहोमानां उपादातुमशक्यत्वात् स्वत एव विशेषाकाङ्क्षा स्यात् किन्त्वयं होमोद्देशेनाहवनीयं विदधाति तत्र चासङ्कोचेन सकलहोमानुवादः स्वरससिद्धः अनारभ्याधीतत्वात् शक्यते च यथाप्राप्तसकलहोमानुवादस्वारस्यानुरोधेन यो यदा होमः कर्तव्यत्वेन

प्राप्तः स सर्वोप्याहवनीये कर्तुं, ततश्चाहवनीयशास्त्रस्य स्वयमनाकाङ्क्षित एव सङ्कोचः पदे जुहोतीति शास्त्रेण कारित इति स तस्य तत्कृतो बाधः । एतेन सङ्कोचस्य बाधत्वाभावे वाक्यप्रकरणाधिकरणोक्तो वाक्येन प्रकरणस्य सङ्कोचोपि बाधो न स्यादिति श्रुतिलिङ्गादिषट्कबलाबलव्यवस्थापि हीयेतेति परास्तम् । तत्रापि दर्शपूर्णमासप्रकरणस्याविशेषे प्राकरणिकसर्वपदार्थानां दर्शपूर्णमासोभयसाधारण्यापादने प्रवृत्तस्य स्वतः सङ्कोचाकाङ्क्षाविरहेपि अग्नीषोमाविदं हविरजुषेतां अवीवृधेतां महो ज्यायोक्रातामिति अत्र लिङ्गात्पौर्णमासमात्रान्वय्यग्नीषोमीयपदैकवाक्यतालक्षणवाक्यप्रमाणेन इदं हविरित्यादेः पौर्णमासमात्रसाधारण्यमापादयता कारिस्तदतिरिक्तविषयत्वलक्षणः सङ्कोच इति तस्य तत्कृतबाधत्वाभ्युपगमाच्छ्रुतिलिङ्गादिष्वपि यस्य स्वयमेवाकाङ्क्षितः सङ्कोचो न तत्कृतो बाधः यथोदाहृतः आग्नेय्याधिकरणे अपरिमिताधिकरणे च प्रकरणस्थानानुसारेण श्रुतिसङ्कोचः एवमन्यत्रापि भूयान्विषयः सुप्रसिद्ध एव तस्मात्स्वत एवाकाङ्क्षितः सङ्कोचानुसारेण क्रियमाणोपि न तत्कृतो बाध इति नात्रोपसंहारेणोपक्रमस्य बाधः । उक्तं हि शास्त्रदीपिकायां अक्ताधिकरणे अवश्यं च यः कश्चिद्विशेष उपादातव्यः निर्विशेषसामान्येन व्यवहारासम्भवात् तत्रासति विशेषप्रमाणे यः कश्चित् स्यात् अस्ति त्वत्र घृतस्य प्रमाणं वाक्यशेष इति । न्यायसुधायां च यो वाक्यस्य सामान्यवचनेनोपक्रमः स निगमनवशेन श्रुत एव विशेषे व्यवस्थाप्यते तस्योपक्रमापेक्षितविशेषसमर्पणेन तदानुकूल्यादिति । नयविवेकेप्युक्तं उपक्रमापेक्षितविशेषसमर्पक एवात्रोपसंहारो नतु तद्बाधक इति । किञ्चोपक्रमस्याकाङ्क्षाभावेपि कांस्यभोजिन्यायादुपसंहारानुसारित्वं युक्तं कांस्यभोजिनये हि चिन्तितं आग्रयणे ऐन्द्राग्नादीनि मुख्यानि हवींषि तेषां बर्हिः प्रसूनमप्रसूनं वेति न कश्चिन्नियमोस्ति द्यावापृथिव्य एककपालो जघन्यं हविः तस्य वैश्वदेव्यएककपालप्रकृतिकत्वात्प्रसूनं पुष्पितं बर्हिरिति नियमः प्राप्तः तत्र किमाग्रयणे ऐन्द्राग्नाद्यनुसारेणानियतं बर्हिर्ग्राह्यं उत द्यावापृथिव्यनुसारेण प्रसूनं बर्हिरिति संशये मुख्यत्वाद्बहुत्वाच्च ऐन्द्राग्नादीनां तदनुरोधादनियमप्राप्तौ जघन्यस्यापि द्यावापृथिव्यस्य धर्मः प्रसूननियम आदर्तव्यः प्रसूनोपादानेप्यैन्द्राग्ना-

दीनामवैगुण्यादनियमे द्यावापृथिव्यस्य वैगुण्यप्रसङ्गात् । यथाऽनियतपात्रभोजिनो गुरोर्नियतकांस्यभोजिनः शिष्यस्य च क्वचिदेकपात्रभोजनप्राप्तौ गुणभूतस्यापि शिष्यस्यानुरोधेन कांस्यपात्रनियमः आद्रियते तद्वत् तस्माद्दाग्रयणेषु पुष्पितमेव बर्हिरिति सिद्धान्त इति एवमिहापि निर्विशेषसामान्येन व्यवहारायोगादनियमेन यत्र क्वचिद्विशेषे पर्यवसानस्योपक्रमस्य घृतादिपर्यवसानेपि न क्वचिद्विरोधः घृतादिस्तुतेस्तु सामान्यस्तुतौ पर्यवसानेनाञ्जस्यमिति उपसंहारानुसारित्वं न्याय्यम् ।

वस्तुतस्तु* अक्ताधिकरणे उपसंहारप्राबल्यशङ्कानिवारणाय नैतावद्दूरं वक्तव्यमस्ति विधौ सन्दिग्धमर्थवादेनावधार्यतइति हि तत्र व्युत्पादनं नतूपक्रमं सन्दिग्धमुपसंहारेणावधार्यतइति तत्र वाक्यशेषशब्दस्योपक्रमोपसंहारगतत्वानादरणार्थवादमात्रपरत्वात् । यथोक्तं वार्तिके । विधिस्तुत्योस्सदावृत्तिः समानविषयेष्यते । तस्मादेकत्र सन्दिग्धमितरेणावधार्यते इति । अत्र स्तुतौ सन्दिग्धं विधिनावधार्यत इति नावमिके अर्थैकत्वाधिकरणे भाष्यकारेण प्रदर्शितस्यार्थस्य दृष्टान्ततयोपादानम् । तत्र हि यदृचास्तुवते तदसुराअन्ववायन् यत्साम्ना स्तुवते तदसुरा अन्ववायन् इत्यत्र किमसुरागमनहेतुतया ऋक् निन्द्यते उत वशीकर्तुमशक्यानामसुराणामपि वशीकरणहेतुतया स्तूयत इति सन्दिग्धं तदनन्तरश्रुतेन य एवं विद्वान्साम्ना स्तुवीतेति सामविषयेण विधिनावधार्यते विधित्सितसामप्रशंसार्थमृक् निन्द्यत इति तन्निन्दापरत्वं एवं तदेकवाक्यत्वोपपत्तेरित्युक्तं विधौ सन्दिग्धं स्तुत्यावधार्यतइत्येतदधिकरणे व्युत्पाद्य कथनं अत्र यः प्रसिद्धसन्देहः यश्चाव्यवस्थितार्थप्रत्ययः तदुभयमपि सन्देहत्वेन विवक्षितं अनवधारणरूपत्वाविशेषात्सन्दिग्धमिति यदेव किञ्चन विधौ नावधृतं तत्सर्वं निर्दिश्यते यथोक्तं यववराहाधिकरणे वार्तिककृता सन्दिग्धेषुतु सर्वेषु वाक्यशेषेण निर्णयम् । वक्ष्यत्येवमतोनात्र पृथक्कार्या विचारणेति । तथा यत्र विधौ शब्दस्वरूपमेव प्रवृत्तितः प्रत्ययतो वा नावधार्यते शब्दनिश्चयेपि वा तस्य शक्यं नावधार्यते अनेकशक्यार्थनिर्णयेपि प्रकृते विवक्षितार्थो नावधार्यते अर्थावधारणेपि वचनव्यक्तिभेदो नावधार्यते तदवधारणेपि उद्देश्यमुपादेयं वा विशिष्य नावधार्यते तत्र सर्वत्रापि विशेषावधारण-

प्रत्ययः तदुभयमपि सन्देहत्वेन विवक्षितं अनवधारणरूपत्वा-द्विशेषात्सन्दिग्धमिति च यदेव किञ्चन विधौ नावधृतं त-त्सर्वं निर्दिश्यते । यथोक्तं यववराहाधिकरणे वार्तिककृता 'स-न्दिग्धेषु तु सर्वेषु वाक्यशेषेण निर्णयम् । वक्ष्यत्येवमतोनात्र पृथक्कार्या विचारणेति' तथा च यत्र विधौ शब्दस्वरूपमेव प्रकृति-तः प्रत्ययतो वा नावधार्यते शब्दनिश्चयेपि वा तस्य शक्यं नावधार्यते अनेकशक्यार्थनिर्णयेपि प्रकृते विवक्षितोर्थो नावधार्यते तथाऽर्थावधा-रणेपि वचनव्यक्तिभेदो नावधार्यते तदवधारणेपि उद्देश्यमुपादेयं वा विशिष्य नावधार्यते तत्र सर्वत्रापि विशेषावधारणसमर्थेनार्थवादे-न यत्र तत्र स्थितेनापि विशेषावधारणमिह व्युत्पाद्यं तत्र 'आदित्यः प्रायणीय' इत्यत्र देवतातद्धितप्रकृतावस्ति सन्देहः किमदितिशब्द उत आदित्यशब्द इति 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यइति' ण्यप्रत्यये सति रूपस्योभयत्राप्यविशेषा 'ददित्यै चरुममुमेवादित्यं स्वेन भाग-धेयेनोपधावती'त्यादौ उभयोरपि देवतात्वेन वैदिकप्रसिध्यविशेषाच्च, स चादिति शब्द इति 'तेऽदित्या समभ्रियन्त'इत्यर्थवादवशादवधार्यते। 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इत्यत्र तद्धितप्रकृतिभूतोऽग्निशब्दः किमेवचनान्तः किं वा बहुवच-नान्त इत्यस्ति सन्देहः 'अग्नये कृत्तिकाभ्य' इत्यादौ 'तस्मा अग्नयोद्रावि णं दत्व'त्यादौ देवतापराग्निशब्दस्योभयथापि दर्शनात्स एकवचना-न्तः 'सोऽग्नयेऽभ्रियत' इत्यर्थवादादवधार्यते । तथा 'तस्मा एतदादि-त्यं चरुं निर्वपे'दित्यत्रादित्यशब्दः किमेकवचनान्तो बहुवचनान्तो वेत्य-स्ति सन्देहः 'अमुमेवादित्यमादित्येभ्यो भुवद्वद्भ्य' इत्यादौ उभयथापि दर्शनात्स बहुवचनान्तः 'आदित्यानेव स्वेन भागधेयेनोपधावति' इत्य-र्थवादादवधार्यते । 'सारस्वतौ भवत' इत्यत्र किं तद्धिप्रकृतिः पुंलि-ङ्गः स्त्रीलिङ्गो वेत्यस्ति सन्देहः 'सरस्वत्यै चरुं सरस्वते चरु'मित्युभ-योरपि देवतात्वप्रसिद्धेः तत्रैकः स्त्रीलिङ्गः अन्यः पुंलिङ्ग इति 'एतद्वै-दैव्यं मिथुन'मित्यर्थवादादवधार्यते। 'यवमयश्चरुर्भवति' इत्यादौ यव-शब्दशक्येऽस्ति सन्देहः दीर्घशूकः प्रियङ्गुर्वेति उभयत्र प्रयोगदर्शनात् 'यत्र अन्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्तीति'अर्थ-वादाद्दीर्घशूक इति निर्णीयते । 'सोमारौद्रं चरुन्निर्वपे'दित्यत्र रुद्रश-ब्दार्थेऽस्ति सन्देहः अग्निः शिवो वेति, अग्निं प्रस्तुत्य 'सोऽरोदीद्यद्-

रोदीत्तद्रुद्रस्य रुद्रत्वमिति' श्रौतनिर्वचनेन 'रुद्रमग्निं द्विजाः प्राहुरिति' पौराणिकवचनेन च रुद्रशब्दस्य अग्निरर्थ इति अवगतम् । शिवं प्रस्तुत्याऽथ कस्मादुच्यते रुद्र' इत्यादिश्रौतनिर्वचनात् 'रुद् दुःखं दुःखहेतुर्वा तद्द्रावयति नः प्रभु'रित्यादिपौराणिकवचनाच्च प्रसिद्धिप्राचुर्याच्च शिवोऽर्थ इत्यवगतमिति नानार्थत्वात् 'सोमो वै रेतोधा अग्निः प्रजानां प्रजनयिता' इत्यर्थवादादग्निरित्यवगम्यते । ज्योतिष्टोमे अधिषवणफलके प्रकृत्य 'अथो खलु दीर्घसोमे सन्तृद्ये धृत्या' इत्याम्नायते दीर्घसोम इत्यस्य वचनव्यक्ताधास्ति सन्देहः किं प्रकरणादु(१)त्कर्षालाभेन दीर्घस्य यजमानस्य सोमो ज्योतिष्टोम इति षष्ठीसमासरूपा वचनव्यक्तिः किं वा कर्मधारयबलीयस्त्वानुरोधेन ज्योतिष्टोमापेक्षया दीर्घे सोमे द्विरात्रादाविति कर्मधारयरूपा वचनव्यक्तिरित्यस्ति सन्देहः धृत्या इत्यर्थवादेन कर्मधारयरूपेति निश्चीयते दीर्घकाले हि सोमयागे पुनः पुनः ग्रावभिरभिहन्यमानायां सोमलतायामधिषवणफलकयोर्दारणशङ्कया तयोर्दार्ढ्यार्थं सन्तर्दनस्य परस्परसंश्लेषरूपस्य विधेर्धृत्यै धारणायेत्यर्थवादः सङ्गच्छते यजमानदैर्घ्येण दारणशङ्काभावान्न सङ्गच्छत इति । 'विवा एष इन्द्रियेण वीर्येणर्ध्यते यः सोमं वामिति यः सोमवामीस्यात् तस्मा एतं सोमेन्द्रं श्यामाकं चरुं निर्वपे'दित्युद्देश्यभूते निमित्तेऽस्ति सन्देहः किं वैद्यकोक्तलौकिकसोमवमनं निमित्तं उत यागशेषरूपवैदिकसोमवमनमिति इन्द्रियवीर्यापचयरूपदोषश्रवणस्वरूपादर्थवादाद्वैदिकसोमवमनं निमित्तमवधार्यते । यद्यपि इन्द्रियवीर्यापचयो लौकिकसोमवमनेनापि भवति तथापि स तत्र न दोषः वैद्यके धातुसाम्योपयोगिशरीरान्तर्गतदोषनिःसारणाय वमनार्थमेव सोमपानं विहितं वमनं च क्रियमाणमिन्द्रियवीर्यापचयाविनाभूतमित्यङ्गीकृतग्लानित्वात् वेदे तु सोमपानं न वमनार्थं विहितं यागशेषप्रतिपत्तिरूपत्वात् प्रतिपत्तिश्च भक्षणरूपा सम्यग्जरणपर्यन्तेति लोकतो 'हिन्वमे गात्रा हरिव' इत्यादिमन्त्रलिङ्गाच्चावधारिता वमनेन व्यापद्यत इति वैदिकवमन एव स दोषः । तथा चतुरहे 'पुरस्तात्पौर्णमासे दीक्षेरन्निति' गवामयनिककालविधौ उद्देश्यकालेऽस्त्यव्यवस्थितप्रतीतिरूपः सन्देहः अनियमेन या का चित्पौर्ण-

---

(१) दनुत्कर्ष इति ख० पु० पा० ।

मासीति 'तेषामेकाष्टकायां क्रयः सम्पद्यत'इति माघकृष्णाष्टम्यामेकाष्टकाशब्दवाच्यायां सोमक्रयसम्पत्तिवर्णनरूपादर्थवादान्माघीति निनिर्णीयते । एवं चातुर्मास्ये वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयलक्षणपर्वचतुष्टयवति'द्वयोः प्रणयन्तीति' द्वयोः पर्वणोरग्निप्रणयनविधावुद्देश्ययोः पर्वणोरस्त्यव्यवस्थितप्रतीतिरूपः सन्देहः अनियमेन ययोः कयोश्चिद्द्वयोः पर्वणोरिति 'तस्माद्द्वाभ्यां यन्ती'त्यर्थवादान्मध्यमयोरिति निश्चीयते 'ऊरुभ्यां हि लोके गच्छन्ति ऊरु संस्तुतं च मध्यमे पर्वणी ऊरु वा एतौ यज्ञस्य यद्वरुणप्रघासाः साकमेधाश्चेति' उपादेयविशेषनिर्णयस्त्वर्थवादादक्ताः शर्करा इत्याद्युदाहरणं ।एवं यत्किञ्चिद्विधौ सन्दिग्धं तत्सर्वमुपक्रमोपसंहारगतत्वानादरेणार्थवादमात्रान्निर्णेयं इति व्युत्पादयितुं प्रवृत्तेऽस्मिन्नधिकरणे नोपसंहारप्राबल्यव्युत्पादनशङ्कावकाशः। यद्यप्येतेषु आदित्यः प्रायणीय इत्यारभ्योदाहृतेषु कचित्कचिदुपायान्तरेणापि निर्णयः सम्भवति तथाप्यर्थवादस्यापि निर्णयसामर्थ्यमविकलमेव ।

ननु यदि सर्वोऽप्यर्थवादात्सन्दिग्धार्थनिर्णयोऽत्रैव व्युत्पाद्यः किमर्थं तर्हि तृतीये सूत्रकारेणैव दीर्घसोम इत्यत्र षष्ठीसमास इति * कर्तृतो वा विशेषः स्यात् तन्निमित्तत्वादिति* सूत्रेण पूर्वपक्षं कृत्वा* क्रतुतो वाऽर्थवादानुपपत्तेः स्यादिति*सूत्रेण कर्मधारय इति सिद्धान्तितम् । तत्रैव *पानव्यापच्च तद्वदिति* सूत्रेण लौकिकं सोमवमनं निमित्तमिति पूर्वपक्षं कृत्वा* दोषात्तु वैदिके स्यादर्थाद्धि लौकिके न दोषः स्यादिति* सूत्रेण वैदिकं सोमवमनंनिमित्तमिति सिद्धान्तितं। षष्ठे च गवामयनकालविधौ या काचित्पौर्णमासीति * पौर्णमास्यामनियमो विशेषादिति * सूत्रेण पूर्वपक्षं कृत्वा * माघीवैकाष्टकाश्रुतेरिति * सूत्रेण माघीति सिद्धान्तितम् । सप्तमे च * प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधादिति * सूत्रेण वैश्वदेवशुनासीरीययोः प्रणयनमिति पूर्वपक्षं कृत्वा * मध्यमयोर्वा गत्यर्थवादादिति* सूत्रेण वरुणप्रघाससाकमेधयोरिति सिद्धान्तितम् ।उच्यते। सर्वविधस्यापि वाक्यशेषात्सन्दिग्धार्थनिर्णयस्योक्ताधिकरण एव सिद्धत्वेऽपि सन्तर्दनविधेः प्रकरणादनुत्कर्षलाभात् षष्ठीसमासाश्रयणं वरमित्यधिकशङ्कावारणाय दीर्घसोमवाक्यस्य पुनर्विचारः इन्द्रियवीर्यापचयरूपपुरुषसम्बन्धि-

दोषश्रवणं चरोः पुरुषार्थत्वे एवोपपद्यत इति तत्सिद्धये लौकिकसोमवमनमेव निमित्तं वैदिकवमनस्य हि निमित्तत्वे हि चरोः क्रत्वर्थतया वमनेन क्रतुवैकल्यदोषः श्रूयते इत्यधिकाशङ्कानिरासाय वमनेष्टिवाक्यस्य पुनर्विचारः 'द्वादश पूर्णमास्यो द्वादशैकाष्टका' इति श्रुत्यन्तरे चैत्रादिमासगतासु द्वादशस्वपि कृष्णाष्टमीष्वेकाष्टकाशब्दप्रसिद्धेर्नार्थवादवशेन माघीति निर्णय इत्यधिकाशङ्कावारणाय गवामयनकालविधिवाक्यस्य पुनर्विचारः 'न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीये' इति प्रथमोत्तमपर्वणोरुत्तरवेदिप्रतिषेधात् लिङ्गादग्निप्रणयनं तयोरेवेत्यधिकाशङ्कावारणाय प्रणयनवाक्यस्य पुनर्विचार इत्यादिष्वेवाधिकरणेषु स्पष्टम् । वस्तुस्थितिस्तावदियं यदक्ताधिकरणे विधौ सन्दिग्धस्य यत्रतत्रस्थितेनार्थवादेन निर्णयो व्युत्पादित इति तदतिलङ्घनेन तत्रोपसंहारप्राबल्योपजीवनोत्प्रेक्षायां तु ततोऽप्याञ्जस्येन तत्रोपक्रमप्राबल्योपजीवनमेवोत्प्रेक्षितुं शक्यं तथाहि अक्ताः शर्करा इत्यत्र विधिस्तुत्यारेकविषयतया यथोपक्रमावगत द्रवद्रव्यसामान्यस्य वाक्यशेषे घृतसङ्कीर्तनात् घृतरूपतयाऽस्ति सङ्कोचः तथा घृतस्य यज्ञान्तर्गताञ्जनक्रियासाधकद्रवद्रव्यविशेषतयाऽन्वयाददुष्टघृतरूपतयाऽस्ति सङ्कोचः जात्या संसर्गादिना वा दुष्टस्य घृतस्यायज्ञीयत्वात् एवं च यद्युपक्रमोपसंहारानुगतयोर्द्रवद्रव्यघृतयोरविशिष्टः सङ्कोचः तथाप्युपक्रमेऽनुष्ठेयतयाऽवगतस्य द्रवद्रव्यसामान्यस्यानुष्ठानाय स्वस्यैव विशेषाकाङ्क्षया सङ्कोच उपसंहारे तेजस्त्वेन स्तुतस्य घृतस्य तु न स्वाकाङ्क्षया सङ्कोचः घृतसामान्यैऽप्यौज्ज्वल्यादिगुणतस्तेजस्त्वेन स्तुत्यविरोधात् किं तूपक्रमगताञ्जनक्रियासाधनद्रवद्रव्यविषयतयान्वयानुसारेणैवेत्येवं सुवचमुपक्रमप्राबल्योपजीवनम् ।

नन्वक्ताधिकरणे सन्दिग्धार्थनिर्णय इत्युपक्रमगतसामान्यस्योपसंहारानुसारेण सङ्कोचे तन्माभूदुदाहरणं तथाप्युदाहरणान्तरमस्त्येव, तथाहि ज्योतिष्टोमे * तुल्यान्यत्त्वाविशिष्टं हि कारणमिति * चतुर्थोपान्त्याधिकरणे दीक्षणीयादीनामिष्टीनामग्नीषोमीयादीनां पशूनां सोमयागस्य च सन्निधौ 'ज्योतिष्टोमेन स्वर्गकामो यजेतेति' आम्नाते यजेः सन्निहितसर्वयागानुवादस्वारस्येन सर्वेषामेव तेषां फलसम्बन्धप्रतीतावपि वा-

क्यशेषे 'त्रिवृत्पञ्चदशः सप्तदश एकविंश एतानि वाव तानि ज्योतींषि य एतस्य स्तोमा' इति ज्योतिःशब्दितत्रिवृदादिस्तोमसम्बन्धिनः सोमयागस्य विशिष्य कीर्तनात् तत्रैव यजेः पर्यवसानमिति सोमयागस्यैव फलसम्बन्धः इतरेषां तु फलवदफलन्यायेन तदङ्गत्वमिति निर्णीतं अत्र ह्युपक्रमे नास्ति स्वतः सन्देहः दीक्षणीयादयः फलसम्बन्धिनः सोमयागे वेति, नाप्यनवस्थितप्रतीतिरस्ति दीक्षणीयादिसोमयागान्तानां मध्ये अनियमेन कश्चिदेव फलसम्बन्धीति अत एव फलार्थमनुष्ठानाय को याग उपादातव्य इति विशेषाकाङ्क्षापि नास्ति सन्निहितसर्वयागानामसङ्कोचेन राजसूयवाक्य इव फलसम्बन्धित्वोपपत्तेः 'राजसूयेन स्वाराज्यकामो यजेते'त्यत्र यजेः सन्निहितसर्वयागानुवादस्वारस्यानुरोधेन सन्निहितानामनुमत्यादीनामिष्टीनां मरुदादीनां पशूनां पवित्रादीनां क्रतूनां सोमयागादीनां चाविशेषेण फलसम्बन्धाभ्युपगमात् तथापि यदत्र वाक्यशेषानुसारेण सङ्कोचकल्पनं तदुपसंहारप्राबल्येनैव । एवं नवमे * पत्नीसंयाजान्तत्वं सर्वेषामविशेषा * दित्यधिकरणे द्वादशाहे श्रुतस्य 'पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते' इत्यविशेषेण सर्वेषां सौत्यानामह्नां पत्नीसंयाजान्तत्वविधेरसंस्थितो हि तर्हि यज्ञ इति क्रतोरसमाप्तिप्रतिपादकवाक्यशेषानुसारेण येष्वहःसु क्रतोरपरिसमाप्तिस्तेषामेकादशानामेव अह्नां पत्नीसंयाजान्तत्वविधायकमिति यन्निश्चितं तदप्युपसंहारप्राबल्येनैव, तदभावे सर्वेषामह्नां पत्नीसंयाजान्तत्वसम्भवेन असन्दिग्धस्वोपक्रमस्य सङ्कोचकल्पनायोगात् । स्यादेतत् सामान्यविधेर्विशेषसङ्कीर्तने सति *साप्तदश्यवत्तदुपसंहारो न्याय्य * इत्यधिकरणद्वयेऽपि वाक्यशेषानुसरणं न तूपसंहारभागप्राबल्येन न हि 'सप्तदश सामिधेनीरनुब्रूया'दित्यनारभ्याधीतस्य सामिधेनीसाप्तदश्यविधेः पाञ्चदश्यावरुद्धायां प्रकृतौ निवेशमलभमानतया विकृतिगामित्वे वक्तव्ये विशेषाश्रवणात्सामान्यतः सर्वविकृतिगामित्वेन प्रतीयमानस्य श्रुतसाप्तदश्यासु मित्रविन्दादिषु यदुपसंहरणं तदुपसंहारभागप्राबल्यप्रयुक्तं अनारभ्याधीतस्य मित्रविन्दादिगतस्य च साप्तदश्यविधेरेकआम्नानाभावेनोपक्रमोपसंहारभावाभावादिति चेत् । मैवम् । अनारभ्याधीतस्य साप्तदश्यस्य विशेषोपसंहारो न विशेषसङ्कीर्तनमा-

भ्रतिकिन्त्वस्पष्टत्वात् तथाहि सामिधेनीनां साप्तदश्यं अनारभ्याधीतवादेनोक्तं तद्यावत्सामिधेनीद्वारा सर्वविकृत्यर्थत्वं कल्पयितुमुपक्रम्यते तावदेव मित्रविन्दादिषु प्राकरणिकेन वाक्येन क्रतुविशेषसम्बन्धे कृते क्षीणाऽर्थापत्तिर्न क्रत्वन्तरसम्बन्धं कल्पयतीति अस्पष्टक्रतुसम्बन्धात्साप्तदश्यस्योपसंहारः नेह तथा त्रिधावस्पष्टः क्रतुसम्बन्धोवाक्यशेषस्पष्ट इति विशेषोऽस्ति अतो नात्रोपसंहारन्यायः प्रवर्तते अत एव *अभावादतिरात्रेषु गृह्यत* इति दार्शमिकेऽधिकरणे 'उत्तरेहन् द्विरात्रस्य गृह्यत' इत्यनारभ्याधीतवाक्येन सामान्यतो द्विरात्राणामुत्तरेऽहनि षोडशिग्रहणविधानस्याऽऽङ्गिरसां द्विरात्रप्रकरणे 'वैखानसं पूर्वेहन्त्साम भवति षोडश्युत्तर' इति विशेषसङ्कीर्तनेनाङ्गिरसां द्विरात्र उपसंहारमाशङ्क्यानारभ्याम्नानेन षोडशिग्रहस्य सामान्यतः सर्वद्विरात्रक्रतुसम्बन्धस्य स्पष्टत्वान्न तस्योपसंहारो युक्त इति प्राकरणिकं वाक्यं वैखानसवि(१)शेषार्थवादमात्रमित्युक्तम् । उक्तं च वार्तिके सामान्यविधिरस्पष्टः संह्रियेत विशेषतः। स्पष्टस्य तु विधेर्नान्यैरुपसंहारसम्भव इति। अन्यथा न ब्राह्मणं हन्यादिति सामान्यनिषेधस्यापि नात्रेयं हन्यादिति विशेषोपसंहारः कल्प्येत।यदि तु स्पष्टस्यापि क्वचिदुपसंहार इष्यते तथापि यत्र नान्यथासिद्धं विशेषसङ्कीर्तनमस्ति तत्रैव तदुपसंहारः अन्यथा 'यत्किञ्चित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्तीति' सामान्यतोऽग्नीषोमीयात्प्राचीनेषु उपांशुत्वविधेरपि 'यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयान्मन्द्रं प्रायणीयायां मन्द्रतरमातिथ्यायामुपांशूपसत्स्विति' श्रवणादुपसन्मात्र उपसंहारः प्रसज्येत । न च यत्किञ्चिदिति वीप्सानुसारेणानुपसंहारः उपसदां साकल्यमादायापि वीप्सोपपत्तेः तस्माद्यथा तत्रोपांशूपसत्स्वित्यत्र सामान्यवचनप्राप्तमुपांशुत्वमवलम्ब्य दीक्षणीयादिस्वरान्तरविधानप्रशंसार्थत्वेनार्थवत्त्वोपपत्तेर्नोपसंहारकत्वं तद्वदिहाप्यर्थवादरूपस्य वाक्यशेषस्य यथाकथञ्चित्स्तावकत्वसम्भवेनान्यथासिद्धस्य नोपसंहारकत्वं न्याय्यमित्युपसंहारभागप्राबल्यानुसरणमेवाश्रेयम् । अत एव विशेषनिष्ठस्याप्युपक्रमस्योपसंहारानुसारेण सामान्यपरत्वमभ्युपगतं लक्ष्यते तत्सिद्धि-

---

(१) विरोधिशेष इति ख० पु० पा० ।

पेटिकयां तत्र हि 'सृष्टीरुपदधातीत्यत्र' सृष्टिशब्दस्य 'तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक्च मतो'रित्यनुशासनात् 'तिसृभिरस्तुवत ब्रह्मासृज्यत पञ्चभिरस्तुवत भूतान्यसृज्यन्ते' त्यादिसृष्टिलिङ्गमन्त्रोपधेयेष्टकार्थकस्य 'एकयाऽस्तुवत प्रजा अधीयन्ते' त्याद्यनुवाकोक्तसृष्टिलिङ्गकासृष्टिलिङ्गकमन्त्रोपधेयानामिष्टकानां प्रत्येकं स्तुतिं कृत्वा 'यत्सप्तदशेष्टका उपदधाति' इत्युपसंहारानुसारेण तदनुवाकाम्नातसृष्टिलिङ्गकासृष्टिलिङ्गकमन्त्रोपधेयानामिष्टकानां समुदाये सामान्यरूपेण लक्षणाऽऽङ्गीकृतेति । अत्रोच्यते । ज्योतिष्टोमाधिकरणे तावदुपसंहारानुसरणमुपक्रमाकाङ्क्षयैव उपक्रमश्रुतस्य ज्योतिष्टोमनाम्नोर्हि यागं प्रवर्तमानस्य किञ्चित्प्रवृत्तिनिमित्तमाकाङ्क्षितं न च तदाकाङ्क्षितं समर्पयति वाक्यशेषे तदवधीर्य ज्योतिषामग्नीनां स्तोमः समूहो यस्मिन्नित्यादिदीक्षणीयाद्यनुवृत्तं किञ्चित्पुरुषबुद्ध्या कल्पयितुं युक्तं वाक्यशेषे च सोमयागगतमेव प्रवृत्तिनिमित्तं समर्पयति ज्योतिःशब्दितत्रिवृदादिस्तोत्रसम्बन्धस्य 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यादिति' वाक्यान्तरे सोमयाग एव निर्ज्ञातत्वात् अतो यत्र वाक्यशेषस्तत्र ज्योतिष्टोमनाम यत्र च तत् तत्र यजिः क्लृप्तप्रवृत्तिनिमित्तनामपरतन्त्रत्वादाख्यातस्येति उपक्रमाकाङ्क्षानुसृतोपसंहारकारितः सङ्कोचः नोपसंहारप्राबल्यकारितः अत एव यत्रोपक्रमस्य नाकाङ्क्षा न तत्र सत्यप्युपसंहारे विशेषसङ्कीर्तनेन तदनुसारेणोपक्रमस्य सङ्कोचः उपेयते यथा 'एष वाव प्रथमो यज्ञो यज्ञानां यत् ज्योतिष्टोमो य एतेनानिष्ट्वाऽन्येन यजेत' इत्यत्रान्यशब्दस्य 'योहि त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयति, यः पञ्चदशः स तं यः सप्तदशः स तं य एकविंशः स तं' इति त्रिवृदाद्येकस्तोमक्रतुसङ्कीर्तनेपि न तद्विषयतया सङ्कोच उपेयते उपक्रमस्य आकाङ्क्षाविरहेप्युपसंहारप्राबल्यादेव तदर्पितविशेषपर्यवसानमभ्युपगच्छतः तत्राप्यन्यशब्दस्य त्रिवृदाद्येकैकस्तोमक्रतुमात्रपरत्वं त्रिवृदादिचतुष्टयान्तर्गतस्तोमयुक्तक्रतुमात्रपरत्वं वा स्यादिति तेषामेव ज्योतिष्टोमपाश्चात्यत्वनियमः सिध्येत् । त्रिवृदादिस्तोमचतुष्टयसम्बन्धरहितानां चतुष्टोमपञ्चविंशाग्निष्टोमादीनां ज्योतिष्टोमात्पूर्वमप्यनुष्ठानं स्यात् । नचेष्टापत्तिः पञ्चमे * एकस्तोमे वा क्रतुसंयोगात्सर्वेषां वा चोदकाविशेषात्प्रशंसास्तोमानामिति *

पूर्वोत्तरपक्षसूत्राभ्यां सूत्रकृतैव वाक्यशेषानुसारेण सङ्कोचनिरासात् तस्मादुपसंहारप्राबल्यवादिनस्तत्रापि सङ्कोचः स्यात् उपक्रमाकाङ्क्षया अतन्त्रत्वादिति तदधिकरणविरोधो वज्रलेपायितः। नावर्मिकाधिकरणेतु उपसंहारानुसरणमसिद्धमनपेक्ष्योपसंहारं विध्युद्देशपर्यालोचनयैव प्रागुत्तमादह्नः पत्नीसंयाजान्तविधिरिति सिद्धेः। तथाहि 'द्वादशाहेन प्रजाकामं याजयेदि'ति द्वादशसोमयागाः सह कार्यत्वेन विहिताः तत्र तेषां सहत्वसिद्धये पूर्वे पूर्वमहः क्वचित्पदार्थेऽवस्थाप्य परं परमुपक्रमितव्यं तत्रानियमेन यत्र क्वचनपदार्थेऽवस्थापने प्राप्ते पत्नीसंयाजान्तानि पूर्वपूर्वाण्यहानि कृत्वोत्तरमुत्तरमारभेतेत्येवं एकादशानामह्नां पत्नीसंयाजान्तत्वविधौ नियमविधिर्भवति उत्तरमस्याह्नः पत्नीसंयाजान्तत्वविधौ त्वत्यन्ताप्राप्तविधिः स्यात् अप्राप्तविधानाच्च नियमविधानं बलीयः विधिलाघवात् अतो विशेषश्रवणाभावेपि पत्नीसंयाजान्तत्वविधिः प्रागुत्तमादह्न इति सिध्यति किमत्रोपसंहारानुसरणेन । अत एवोपांशु यजुषेति वाक्यं निगदाधिकरणोदाहृतं वेदोपक्रमाभावात् मन्त्रविशेषस्य यजुषः उपांशुत्वविधायकमिति मन्यमानैर्यजुष्ट्वविशेषश्रवणेपि विशेषोपस्थापकोपसंहाराभावेपि नियमविधिबलीयस्त्वादेव निगदातिरिक्तस्य यजुषोयं उपांशुत्वविधिरिति दर्शितं निगदाधिकरणे यत्रानियमेनोपांशुत्वं प्राप्तं तत्र नियममात्रं उपांशु यजुषेत्यनेन क्रियते निगदव्यतिरिक्तेष्वेव यजुष्षु येन केन चित्स्वरेण कार्यसिद्धेरुपांशुत्वानियमाप्राप्तिरिति तद्विषयमेवेदं वचनं निगदेषु प्रोक्षणीरासादयेत्यादिषु परसम्बोधनलक्षणकार्यवशेन उच्चैष्ट्वमेव प्राप्तं न पक्षेऽप्युपांशुत्वमिति न तत्रास्य वचनस्य व्यापारः एवं चार्थतः प्राप्ते उच्चैष्ट्वे उच्चैर्निगदेनेत्यनुवादमात्रमिति तेषामर्थाधिकरणे च व्रीहीनवहन्तीत्यत्र व्रीहिपदस्यापूर्वसाधनमात्रपरत्वेपि नावघातस्याज्यसान्नाय्यसाधारण्यं तत्रावघातस्य पक्षे प्राप्त्यभावेन अत्यन्ताप्राप्तविधानतो विधिगौरवापत्तेरिति व्रीहियवमात्रविषयत्वं नियमविधिबलीयस्त्वादाश्रितम्। किं च तत्रैवाधिकरणे व्रीहियवाभ्यां वैतुष्यार्थं अवघातोऽपेक्षितः नाज्यसान्नाय्याभ्यामित्यपेक्षितविधेरनपेक्षितविधानदौर्बल्यन्यायेनाप्यवघातस्य औषधद्रव्यमात्रशेषत्वं दर्शितं तद्वदिहाप्येकादशभिरहोभिः सहत्वसिद्धये पत्नीसंयाजान्तत्वमपेक्षितं नोत्तमे-

म्न्हेति तेनापि न्यायेन प्रागुक्तमादन्हः पत्नीसंयाजान्तत्वविधिरि- ति सिध्यति अतस्तत्र वाक्यशेषानुग्रहोऽभ्युच्चयमात्रमिति तत्रैवा- धिकरणे स्फुटम् । यत्तु ‘सृष्टीरुपदधाती’त्यत्र उपसंहारानुसारेण समुदायलक्षणाश्रयणं तदानर्थक्यप्रतिहतानां विपरीतं बलाबलमि- ति न्यायात् बहुबाधाद्दल्पबाधो वरमिति न्यायाच्च तल्लक्षणानाश्र- यणे हि प्रत्येकमसृष्टिलिङ्गकमन्त्रोपधेयेष्टकास्तुतीनामिष्टकासाध्य- हृदयकीर्तनस्य च सर्वथा बाधः स्यात् ततो वरमेकस्य सृष्टिशब्द- स्य लक्षणेति तस्मात्सामान्यविशेषविषययोरुपक्रमोपसंहारयोरुप- संहारानुसरणेन तत्प्राबल्यवर्णनमयुक्तम् । एतेन च्छागपशुन्या- योदाहरणमपि निराकृतं तत्राप्यनुष्ठानाय विधेर्विशेषाकाङ्क्षयैव मन्त्रा- र्पितविशेषे पर्यवसानाभ्युपगमात् ।

नन्वर्थवादान्वयं विना विधेरपर्यवसानात्तदर्पितविशेषग्रह॥ं- युक्तं मन्त्रार्पितविशेषग्रहणं तु कथं स्यात् तदन्वयात्प्रागेवानियतविशे- षकल्पनया विधिपर्यवसानसम्भवादिति चेन्न । पर्यवसितस्यापि वि- धेःप्रत्यक्षविशेषे सत्याक्षेपायोगाद्विधिमन्त्रयोरेकविषयत्वनियमात् प- शुत्वसामान्यस्य कृत्स्नस्य च्छागे सद्भावाविरोधेन कांस्यभोजन्या- यावताराभियमसम्भवे अनियमानुपपत्तेश्च मन्त्रार्पितविशेषग्राहक- त्वात् । अत एव स्थितेऽप्यक्ताधिकरणेऽप्यपर्यवसितं सामान्यं श्रुतवि- शेषे पर्यवस्यतु पर्यवसितं तु न सङ्कोचनीयामित्यधिकाशङ्कायां छागप- शुन्यायावतारः इत्थं च पर्यासितस्यापि अग्निहोत्रं जुहोतीति(१)विधेर- नियतद्रव्यदेवताक्षेपं विना‘पयसा जुहोति यदग्नये च प्रजापतये च सायं जुहोतीति’ वाक्यान्तरविधेयद्रव्यदेवताग्राहकत्वं अन्यथा तत्राप्याक्षेपे- णानियतद्रव्यविशेषादिकल्पनयैव पर्यवसानात् उत्पत्तिशिष्टगुणा- वरोधन्यायेन वाक्यान्तरविधेयद्रव्यविशेषान्वयो न स्यात् तस्मात्त- द्वदेव श्रुतविशेषे सत्याक्षेपानवतारात्तदाकाङ्क्षयैव मन्त्रार्पितविशेषप- र्यवसानं नोपसंहारप्राबल्यात् । यदि च ‘योदीक्षितो यदग्नीषोमीयं पशुमालभेत’ इत्ययं विधिः स्वाकाङ्क्षया विना उपसंहारप्राबल्यादेव पशुसामान्यं परित्यज्य मन्त्रार्पितं छागं द्रव्यतया गृह्णीयात् तदाऽग्नी- षोमावपि परित्यज्य‘त्वं ह्यग्ने प्रथमो मनोतेति’ मनोतामन्त्रार्पितं

(१) जुहोतीत्यादि इति पु० पा० ।

'उपनयत मेध्यादुर आशासाना मेधपतये मेध'मित्य(१)धिगुप्रैषगत-देतापदैकवचनान्तमेधपतिशब्दोपोद्बलितश्च केवलाग्निमेव देवता-त्वेन गृह्णीयात् । नचेष्टापत्तिः दशमे मनोताधिकरणे मनोतामन्त्रस्था-ग्निशब्दस्यैकदेशद्वाराग्नीषोमप्रकाशकत्वस्य नवमे मेधपत्यधि-करणे मेधपतय इत्येकवचनस्याग्नीषोमोभयव्यासक्तदेवतैक्या-भिप्रायत्वस्य च समर्थितत्वात् । न च मनोतामन्त्रे केवला-ग्निशब्दप्रयोगेऽप्यग्नीषोमाभ्यां च्छागस्येत्यादिमन्त्रान्तरेष्वग्नीषो-मपदप्रयोगात् मेधपतिशब्दस्य क्वचिच्छाखायामेकवचनान्तपाठे-पि शाखान्तरे द्विवचनान्तपाठाच्च विध्यनुगुणमन्त्रसद्भावे तदनु-गुणमन्त्रार्पितग्रहणमपि नोपेयत इति वाच्यम् । तथा सति द्रव्यवि-षयेपि 'इमं पशुं पशुपते ते अद्य' 'पाशात्पशुं प्रमुञ्च-ते' त्याद्यनुगुणमन्त्रसद्भावादननुगुणमन्त्रार्पितच्छागग्रहणमपि न स्यात् तस्माद्देवताविषये आकाङ्क्षाविरहान्मन्त्रार्पितस्याग्रहणं द्र-व्यविषये तत्सत्वान्मन्त्रार्पितस्य ग्रहणमित्येव विशेषो वक्तव्यः । अत एव 'व्रीहिभिर्यजेतेति' विधे' धान्यमसीति' मन्त्रार्पि-तसामान्यग्र(२)हणमनुष्ठानाय विशेषाकाङ्क्षाया इव सामान्या-काङ्क्षाया विरहात् अयुक्तश्चाकाङ्क्षाभावे पदार्थस्य मन्त्रानुसारेण सङ्कोचः मन्त्रो ह्यनुष्ठानकाले पदार्थं प्रकाशयन् पदार्थशेषः न च शेषा-नुसारेण शेषिसङ्कोचो युक्तः अन्यथा 'स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि । तस्मिन्त्सीदामृते प्रतितिष्ठ व्रीहीणां मे-ध सुमनस्यमान' इति व्रीहिलिङ्गकमन्त्रानुसारेण सदनकरणप्रति-ष्ठापने व्रीहिपुरोडाशे सङ्कुचिते कल्पनीये इति यवपुरोडाशे ते न स्यातां तस्माद्यथा गुणानुसारेण प्रधानसङ्कोचायोगाद्यवपक्षेपि स-दनकारणप्रतिष्ठापने मन्त्रः परं व्रीहिपक्ष इति व्यवस्था तथात्रापि सर्वेपि पशवो द्रव्याणि मन्त्रः परं छागपक्ष इत्येव स्यात् यदि वि-ध्यर्थाकाङ्क्षानुसरणं न स्यात् निराकृतश्च साक्षादिन्द्रपीताधिकरणे नि-राकाङ्क्षस्य विधेर्मन्त्रलिङ्गानुसारेण सङ्कोचः तत्र हि सोमेन यजेतेत्यत्रा-विशेषेण ऐन्द्रानैन्द्रप्रदानरूपसर्वाभ्यासानुवृत्तज्योतिष्टोमयागाङ्गत्वेन

(१) सामान्याग्रहणमिति पु० पा० ।
(२) मित्यग्रिमप्रेषगतदेवतापरैक इति पा० पु० ।

विहितस्य सोमद्रव्यस्य 'इन्द्राय त्वा वृत्रघ्ने इन्द्राय त्वा वसुमते सोमं गृह्णामीति' मानग्रहणमन्त्रानुसारेणैन्द्रप्रदानविषयतया सङ्कोचमाशङ्क्य गुणानुसारेण प्रधानसङ्कोचो न युक्तः कामं मन्त्र ऐन्द्रविषयः स्यादिति व्यवस्थापितम् । निराकाङ्क्षस्यापि विधेरुपसंहारप्राबल्येन सङ्कोचमभ्युपगच्छतस्तत्रापि सङ्कोचः स्यात् इति तदधिकरणविरोधो वज्रलेपायत इत्यलं विस्तरेण । किञ्च विधेर्मन्त्रानुसारेण पर्यवसानाभ्यु(१)पगमेऽपि न तत उपसंहारप्राबल्यं मन्त्रस्य विध्युपसंहारत्वाभावादेकवाक्यतया पूर्वापरभावेनाम्नातयोर्हि उपक्रमोपसंहारभावः। न च विधिमन्त्रयोः पूर्वापरभावनियमोऽस्ति । न च यत्र तत्र स्थितस्यापि मन्त्रस्य विधिप्रापितानुष्ठेयप्रकाशकतया तदनुवादरूपतैव तदुपसंहारत्वम् । तथात्वे यथाप्राप्त्यनुवाद इति न्यायेन पुरोवादानुवादयोः पुरोवादस्य प्रबलतयोपक्रमस्य प्राबल्यमापतेदित्यनुवादस्योपसंहारत्वपरिभाषायाः स्वप्रतिकूलत्वादिति दिक् ।

यत्तु श्येनवाक्ये उपसंहारप्राबल्यमुदाहृतं तदप्ययुक्तं तत्रापि श्येनशब्दस्य यागनामत्वाय ज्योतिष्टोमनाम्न इव प्रवृत्तिनिमित्तापेक्षानुरोधेनैव वाक्यशेषोपदर्शितसादृश्यावलम्बनेन गौणत्वाङ्गीकारात् । अन्यथा श्येनशब्दस्य रूढ्या पक्षिपरत्वे कर्ममात्रविधिस्वीकारे गुणश्रवणवैयर्थ्यापत्तेः । कर्मणि गुणविधिस्वीकारे फलश्रवणवैय्यर्थ्यापत्तेः । फलाय गुणविशिष्टकर्मविधिस्वीकारे विशिष्टविधिगौरवापत्तेः फले कर्मणः कर्मणि गुणस्य च विधिस्वीकारे वैरूप्येन विरुद्धत्रिकद्वयापत्तेः कर्माश्रित्य फलाय गुणविधिस्वीकारे विप्रकृष्टविधानस्य धातोरत्यन्तपारार्थ्यस्य चापत्तेर्वाक्यशेषोपदर्शितश्येनसादृश्येन शब्दस्य यागे गौणनामत्वे सम्भवति सोमेन यजेत दध्नेन्द्रियकामस्य जुहुयादित्यादिवत् अनन्यगतिकाविशिष्टविधित्वादिकल्पनायोगादत उदाहृतसर्वदोषपरिहाराय श्येनशब्दस्य यागनामत्वसिद्धये प्रवृत्तिनिमित्ताकाङ्क्षयैव वाक्यशेषानुसरणम् । अतएव यत्रोपक्रमस्य नाकाङ्क्षा तत्र तद्विरुद्धार्थोपस्थापकोपसंहारानुसरणं न क्रियते यथा 'अवकाभिरग्निं विकर्षति' इत्यत्रावकाशब्दस्य 'आपो वै शान्ता' इति वाक्यशेषानुसा-

---

(१) पर्यवसाननियमाभ्युपगमपीति पु० पा० ।

रेणाप्स्तु लक्षणा नोपेयते अर्थवादाधिकरणे गुणवादसूत्रेणापो वै शान्ता इत्यभिजनस्तुतिद्वारेणावकानामेव स्तुतिरिति विधिस्तुत्यो-र्वैय्यधिकरण्यपरिहारात् । यथावाऽग्निचयने 'नैवारं चरुमुपदधाती'-त्यस्य स्थण्डिलनिर्वृत्त्यौपयिकयथाश्रुतचरूपधानविधानेन निराका-ङ्क्षस्य 'बृहस्पतेर्वा एतदन्नं यन्नीवारा' इत्युपधानरूपगुणकर्मा-नन्वयिदेवतासम्बन्धप्रतिपादकवाक्यशेषानुसारेण यागविधायक-त्वं नाङ्गीक्रियते * संयुक्तस्त्वर्थशब्देनेति * द्वितीयाधि-करणे उपक्रमस्य नैराकाङ्क्ष्याद्वाक्यशेषस्य देवतासमर्पकत्वं निराकृत्य बृहस्पतिपदस्य ब्राह्मणपरत्वाङ्गीकारेण उत्पन्नतया नीवारस्तुतिपरत्वनिर्णयादुपसंहारप्राबल्यवादिनस्त्ववकाशदस्याप्सु लक्षणा चरुमुपदधातीत्यस्य यागविधायकत्वं च स्यात् । तस्मात्तत्र निराकाङ्क्षस्य वाक्यशेषानुसारेण निराकरणात् इह श्येनवाक्ये उपक्रमाकाङ्क्षयैवोपसंहारानुसरणम् । अभ्युपेत्य चेदमुक्तं मीमांसकैर्विध्याकाङ्क्षयोपसंहारानुसरणं श्येनवाक्य इति । वस्तु-तस्तत्रोपक्रमानुसारेणोपसंहार एवान्यथा नीतः उपसंहारस्य पक्षि-परत्व एवाऽऽस्येन यागपरत्वे तदनाऽऽस्यात् । तथाहि पक्षद्वये-ऽपि तावत्तत्रोपमानभागस्य यथा श्येनपक्षी निपत्य मत्स्यादिकमाद-त्त इत्यर्थः तत्र मत्स्यकमित्यस्यानुपादानेऽपि प्रसिद्धस्यैव दृष्टान्तीक-र्तव्यतया तल्लाभादुपमेयभागस्य त्वेवमयं यजमानस्य शत्रुं मारयतीत्यर्थः । पक्षिणि यागे चोभयत्रापि शत्रोर्मुख्यस्य निपत्यादानस्यासम्भवात् पक्षिपक्षे फले यागे वा साधनत्वेन विनियुक्तस्य पक्षिणः शत्रोरादाने व्यापारासम्भवाद्यागपक्षे क्रियायां निपतनादानक्रिययोः सर्वथैवासम्भवाच्च । एवं च वाक्यशेषस्य पक्षिपरत्वे यथा श्येनः पक्षी निपत्य मत्स्यादिकमादत्ते एवमयं फले यागे वा विनियुक्तः श्येनः पक्षी यजमानस्य शत्रुं मा-रयतीत्यर्थः अत्र श्येनपक्षिनिष्ठयोर्लोकप्रसिद्धमत्स्याद्यादान-विध्युद्देशोपात्तद्विषन्मारणयोरेवोपमानोपमेयभावः प्रतीयते नतु श्येनस्यैव श्येनेनेति नाभेदेन सादृश्यानुपपत्तिः । यद्यपि तयोः साधारणधर्मानोपात्तः तथापि यथा जले स्वच्छन्दं विहरतो मत्स्य-स्य श्येनकृतनिपत्यादानं झटित्यशङ्कितोपस्थितं भवति तथा तत्कृतं द्विषतो मारणमपीति गम्यसाधारणधर्मोऽस्त्येव तथा च यथा 'कृत्या-

सं पुण्डरीकमेवमक्षिणी' त्यादाविव गम्यसाधारणधर्मेणोपमानोपमेया-भावानिर्देशोपि न काचिदनुपपत्तिः अवश्यं च तस्य साधारणधर्मस्य गम्यत्वं पक्षान्तरेप्यभ्युपगन्तव्यं अन्यथा छिपन्मरणमात्रस्य विध्यु-द्देशादेवावगतत्वेन वाक्यशेषात् दृष्टान्तबलेन तदनवगतशैघ्र्यानव-गमे ततः प्रवृत्तिविशेषकरस्तुतिविशेषालाभप्रसङ्गात् तथाच यथा लोके प्रच्छन्नतया गृहं प्रविश्य प्रच्छन्नतयैव निर्गते चैत्रे तस्य प्रच्छन्नतया गृहप्रवेशमात्रं जानानमन्यं प्रति यथा देवदत्तो गृहं प्र-विष्टः तथैव निर्गत इति वाक्येन देवदत्तनिष्ठयोरेव प्रवेशनिर्गम-नक्रिययोः प्रच्छन्नकृतत्वरूपगम्यसाधारणधर्मेणोपमानोपमेयभाव उ-च्यते नतु देवदत्तस्यैव देवदत्तेनेति मुख्य एवोपमानोपमेय-भावः तथाऽत्रापीत्युपपद्यते अयमित्यस्य च सन्निहितप्रथमान्तप-दोक्तपक्षिपरत्वेनार्जवं लभ्यते यागपरत्वे तु वाक्यशेषस्थायमित्य-स्य व्यवहितयज्युपात्तकरणपरामर्शित्वेनानार्जवं स्यात् । पक्षि-यागयोश्च मुख्य उपमानोपमेयभावः स्यात् अनुगतसाधारणधर्मा-भावेन मुख्यसादृश्यासम्भवात् पक्षिणि मत्स्यादिकर्मकमुख्यं नि-पत्यादानं यागे तु भ्रातृव्यकर्मकं मारणमेवाशङ्कितोपस्थितिकत्व-गुणयोगात् तथोपचरितं मुख्यं निपत्यादानमिति तत्प्रयोज्यपक्षि-यागयोरमुख्यमेव पक्षिसादृश्यम्। न च यागपरत्वपक्षेपि पक्षियागग-तयोर्मत्स्यादानभ्रातृव्यमारणयोरेवोपमानोपमेयत्वमुच्यतामिति वा-च्यम्। तावता यागे श्येनशब्दप्रवृत्तिनिमित्तस्य श्येनसादृश्य-स्यालाभात् उपसंहारानुसारेण श्येनशब्दगौणत्वोक्त्ययोगात्। त-स्मादुपक्रमे लाघवाद्यनुसारेण यागमात्रविधिनिर्वाहाय श्येनशब्द-स्य यागनामत्वसिद्धये प्रवृत्तिनिमित्तापेक्षायामन्यत्र रूढस्य तत्र मुख्यप्रवृत्तिनिमित्तासम्भवेपि गौणप्रवृत्तिनिमित्तलाभायोपक्रमाका-ङ्क्षानुसारेणैव वाक्यशेषे अयमित्यस्य व्यवहितकरणपरामर्शित्वं वा-क्यशेषस्यामुख्यसादृश्यपरत्वं च कल्पितमिति तत्रोपक्रमानुसारेणो-पसंहारो नीत इत्येव युक्तम् ।

यत्तु वैश्वानरवाक्ये उपसंहारप्राबल्यमुदाहृतं तदति-तुच्छम् । न हि तत्रोपसंहारानुसारेण उपक्रमे श्रुत-स्य कस्य चिदुपमर्दोस्ति उपक्रमावगतपुत्रजनननिमित्तत्वापरि-त्यागेनैव रात्रिसत्रन्यायेन वाक्यशेषावगतफलस्यापि स्वीकारात् त-

त्स्वीकारोपि विध्याकाङ्क्षयैव प्रवर्त्तकस्यैव विधेः फलविशेषसाधनत्वज्ञानं विना पुरुषस्याप्रवृत्त्या प्रवर्तकस्या(१)पर्यवसानात् । अत एवान्यतः प्रवृत्तिलाभेन विधेराकाङ्क्षाविरहात्पर्णमयीवाक्यशेषे श्रुतस्याप्यपापश्लोकश्रवणादेर्नतत्फलत्वमुपेयते । वस्तुतस्तु वैश्वानरवाक्येप्युपक्रमप्राबल्यमेव सुवचं यस्मिन्जात इत्यादिवाक्यशेषे पुत्रेष्टिपूतत्वभवनयोरुभयोरपि वर्तमानापदेशेन तुल्यकालत्वप्रतीत्या पूतत्वादेः पुत्रेष्टिफलत्वानवगमेपि विधेः प्रवर्तकत्वपर्यवसानाय फलविशेषाकाङ्क्षयैवाश्रुतफलकल्पनाद्वरं श्रुतस्यैव पूतत्वादेः फलत्वविपरिणाम इति यत्पदस्य व्यत्यासेन योजनं णिजर्थलनर्थाद्यन्तर्भावं च कल्पयित्वा यं पूतत्वादियुक्तं भावयितुमिच्छति तस्मिन्जात एतामिष्टिं निर्वपेदिति विपरिणामेन वाक्यशेषस्य फलसमर्पकत्वाभ्युपगमात् तस्मादुपक्रमप्राबल्य एवोदाहरणीयानि अक्ताधिकरणादीनि कथमर्वाचीनैरुपसंहारप्राबल्ये उदाहृतानीति न विद्मः । ननु प्रस्तरप्रहरणं सूक्तवाकमन्त्रगतायुरादीनां फलत्वमुपगतं तत्र विध्याकाङ्क्षया अङ्गतयान्वतः प्रवृत्तिलाभेन तद्विरहादिति तत्र मन्त्ररूपोपसंहारप्राबल्यमेवोपासनीयम् । उच्यते । न मन्त्रप्रकाश्यत्वेन तत्र तेषां फलत्वं किन्तु श्रुतिविनियुक्तकृत्स्नसूक्तवाकमन्त्रप्रकरणत्वान्यथानुपपत्त्या 'सूक्तवाकेन प्रस्तरं प्रहरतीति' कृत्स्नसूक्तवाकः प्रस्तरप्रहरणे विनियुक्तः न चासौ साक्षात्प्रहरणं प्रकाशयितुं शक्नोति नापि तत्साधनं प्रस्तरं तस्मात् ज्ञायते यदनेन प्रकाश्यते तत्प्रहरणसम्बन्धीति नह्यन्यथा श्रुत्यवगतं कृत्स्नस्य सूक्तवाकस्य प्रहरणाङ्गत्वं घटते क्रियातत्सम्बन्धिप्रकाशनेनैव हि मन्त्रस्य करणता सूक्तवाकेन चाग्न्यादयो देवताः प्रकाश्यन्ते आयुरादीनि च फलानि तत्र देवता साधनतां प्रतिपद्यते फलानि साध्यत्वमेव इत्थमेव नावमिके सूक्तवाकाधिकरणे आयुरादीनां फलत्वव्यवस्थापनं कृतं न मन्त्रप्रकाश्यत्वमात्रेण, 'उरु प्रथस्वोरु ते यज्ञपतिः प्रथता'मितिलिङ्गविनियोज्यमन्त्रप्रकाश्यस्य यज्ञपतिप्रथनस्य हि पुरोडाशप्रथनफलत्वं निराकृतं मन्त्राधिकरणभाष्ये । ननु तथाप्यन्यदस्ति उदाहरणं उपसंहारप्राबल्ये तथा हि दशमे *न चेदन्यं प्रकल्पयेत् प्रक्लृप्तावर्थवादस्यानार्थक्यात्परसामर्थ्याच्च * त्य-

(१) प्रवर्तकत्वाऽपर्यवसानात् । पु० पा० । अयं युक्तः ।

धिकरणे अग्निहोत्रं प्रकृत्य श्रुतेन 'जर्तिलयवाग्वा वा जुहुयात् गवीधुकयवाग्वा वा न ग्राम्यान् पशून् हिनस्ति नारण्यानिति' वाक्येन जर्तिलगवीधुकशब्दवाच्यारण्यतिलारण्यगोधूमकृतयवाग्वोर्विकल्पेनाग्निहोत्रहोमद्रव्यत्वविधाने लिङ्गविभक्तिबलेन ग्राम्यारण्यपशुहिंसारहिततया तयोः स्तवनेन च प्रतीयमानेपि 'अथो खलु रनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च' 'पयसाग्निहोत्रं जुहुयादिति' तदनन्तरं जर्तिलादिप्रतिक्षेपेण पयोविधिदर्शनात् तदेकवाक्यतया जर्तिलयवाग्वा वा जुहुयादित्यादेर्ग्राम्यारण्यपशुहिंसाराहित्येन प्रशस्ततया होमाहाणामपि जर्तिलगवीधुकानां पयोपक्षया दुष्टत्वात्पयः प्रशस्तमिति पयःस्तुतिलक्षकत्वप्रदर्शनेनोपसंहारप्राबल्यमाश्रितम्। न चानर्थक्यहेतुना सूत्रकृता पयःस्तुतिपरत्वमुक्तं नोपसंहारानुसारेणेति वाच्यम्। पयसा सह विकल्पार्थं जर्तिलादिविधानसम्भवेनानर्थक्याभावात् तेन हेतुना जर्तिलयवाग्वा वा जुहुयादित्यादेः पयस्तुत्यर्थत्वासिद्धेः अनाहुतिर्वै जर्तिलाश्चेत्यादेः जर्तिलादिनिषेधरूपत्वमेव न तु पयःस्तुत्यर्थत्वमिति शङ्कायां विहितजर्तिलादिनिषेधस्य ग्रहणाग्रहणवद्विकल्पार्थकत्वाद्विकल्पस्य च 'पयसा जुहुयादिति' द्रव्यान्तरविधानादेव च सिद्धेर्निषेधानर्थक्यात्। न हि निन्दान्यायेन पयोविधिस्तुत्यर्थतैवेत्यानर्थक्यहेतोरनाहुतिर्वा इत्यादिभागस्य पयःस्तुत्यर्थतागमकत्वात्। * शिष्ट्वा तु प्रतिषेधः स्यादिति * पूर्वाधिकरणे अतिरात्रे षोडशिनं गृह्णातीति विधायाम्नातो नातिरात्रे षोडशिनं गृह्णातीत्ययं तत्प्रतिषेधः न तु नानूयाजेष्वित्यादिवत्पर्युदासादिरूप इत्युक्तेः तर्हि तद्वदेव अनाहुतिर्वा इत्ययमपि प्रतिषेध इति शङ्कायां तन्निराकरणाय सूत्रप्रवृत्तेश्च तथाचास्मिन्सूत्रे शिष्ट्वा(२)प्रतिषेधः स्यादिति पूर्वसूत्रानुषङ्गेण न चेदन्यं विधिं कल्पयेद्यत्र प्रत्यक्षो विधिः सन्निहितो न स्यात्ततः षोडशिग्रहणाग्रहणवदेकेन शिष्ट्वा परेण प्रतिषेधः स्यात् इह तु पयसाग्निहोत्रं जुहुयात् इति विध्यन्तरस्य क्लृप्तत्वात्तच्छेषभूतोऽयमर्थवादः स्यात् विहितप्रतिषेधफलस्य विकल्पस्य पयोरूपद्रव्यान्तरविधानादेव सिद्धेः प्रतिषेधानर्थक्यादियुक्तेः जर्तिला-

(१) शिष्टत्वात्तु इति पु० पा०।

चनाहुतित्वकीर्तनस्य कथं पयःप्रशंसापरत्वमिति शङ्कायां यो हेतुरु-च्यते परसामर्थ्यात्परेषां पयोविधिनाऽर्थवादत्वेनान्वये सामर्थ्यादिति तत्साधारण्यादेव जर्तिलयवाग्वा जुहुयादित्यादेः पयोविधिशेषत्वं व-क्तव्यं दृष्टं हि कस्य चिन्निन्दायास्तदितरस्तुतौ पर्यवसानवत् क-स्य चिद्विधिस्तुतिपूर्वकनिन्दाया अपि सहैव विधिस्तुतिभ्यामितर-स्तुतौ पर्यवसानं यथा देवदत्तस्तावदतीव विद्वानित्युक्त्वा न तस्य बृहस्पतिरपि समान इति च स्तुत्वा सोपि यज्ञदत्तमपेक्ष्याविद्वानि-त्युक्तेः सर्वस्यापि यज्ञदत्तस्तुतौ पर्यवसानमिति तथाच पश्चात्पयोवि-धिदर्शनादुपक्रमावगतस्य जर्तिलयवाग्वादिविधेस्त्याग इत्युपसंहार-प्राबल्यापेक्षया दुर्वारमिति मैवम् । तत्रानेकदृष्टकल्पनानुबन्धिवाक्य-भेदपरिहाराय जर्तिलादिविधित्याग इत्युपसंहारप्राबल्यानाश्रयणात् यत्र ह्यनेकविधायकश्रवणं तत्रैकस्य विधायकत्वं अन्यस्यानुवाद-कत्वमित्येकवाक्यत्वसम्भवे वाक्यभेदावहो विधिभेदो न स्वीक्रियते अत एव 'नागिरा गिरेति ब्रूयादैरं कृत्वोद्गेय' मित्यत्र गिरापदकार्ये (१) इरापदविधानादेव गिरापदनिवृत्तिसिद्धेरैरं कृत्वोद्गेयमित्येव विधिः न गिरा गिरेति ब्रूयादिति तु तत्प्राप्तगिरापदनिवृत्त्यनुवाद इरापदस्य गिरापदकार्यप्राप्तिसिद्धये तत्कार्यलक्षणार्थं नतु गिरापदप्रतिषेध-विधिः गिरापदनिषेधमात्रादिरापदस्याप्राप्तेरैरं कृत्वोद्गेयमित्यस्यापि विधायकत्वापत्त्या वाक्यभेदापत्तेरित्युक्तं अत एव च नचतुस्त्रिं-शदिति ब्रूयात् षड्विंशतिरिति ब्रूयादित्यत्राश्वमेधे अश्ववङ्क्रीयत्ताप्र-काशनाय पठिताया 'चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिः समेती' त्यस्या ऋचो न चतुस्त्रिंशदिति प्रतिषेधेन प्राप्तस्य षड्विंश-तिरस्य वङ्क्रय इति वङ्क्रिमन्त्रस्य यथाप्राप्त्यनुवादमात्रं षड्विंशतिरित्ये-वब्रूयादिति वचनं न तु प्राकृतमन्त्रे षड्विंशतिपदनियमेपि तस्य तात्पर्यं तस्यापि विधाने वाक्यभेदापत्तेरिति तूपरगोमृगयोरश्वस्य वङ्क्रिणा समस्य वचनस्य षडशीतिरेषां वङ्क्रय इत्येवं रूपस्याबाध उक्तः एवं रथ-न्तरे प्रस्तूयमाने सम्मीलयेत् स्व(२)दैशं प्रति वीक्षेतेत्यादिष्वपि ब-हुषु स्थलेषु वाक्यभेदपरिहारायैकोविधिरपरोऽनुवाद इति व्यवस्थापनं दृष्टं एवमिहापि वाक्यभेदपरिहाराय जर्तिलादिवाक्यस्य विधिसरू-

(१) पदवाक्ये इति पु० पा० । (२) स्वसदृशं पा० पु० ।

पार्थवादत्वाश्रयणमिति नानेनोपसंहारप्राबल्यसिद्धिः ।

यत्तु क्वचिदुक्तं अर्थैकत्वाधिकरणे 'यदृचाऽस्तुवत' इत्यस्याकर्तृविशेषणविधिशक्तप्रतिबन्धकयच्छब्दयुक्तस्यापि उपक्रमस्य 'य एवं विद्वान्साम्ना स्तुवीतेति' कर्तृविशेषणविधिशक्तिप्रतिबन्धकयच्छब्दयुक्तोपसंहारबलेन स्वतः प्राप्तमृग्विधानत्वं परित्यज्य सामविधिशेषत्वस्वीकारादुपसंहारप्राबल्यमाश्रितमिति तदप्यनेन निरस्तम् । तत्रापि वाक्यभेदादिदोषपरिहारार्थमौपसंहारिकसामविधिशेषत्वस्वीकारात् । तथा हि उपक्रमे 'यदृचास्तुवत तदसुरा अन्ववायन् यत्साम्ना स्तुवते तदसुरा नान्ववायन्निति' ऋचा स्तुतिः साम्ना स्तुतिश्चेत्युभयं श्रूयते न तु ऋचा स्तुतिमात्रं विधिस्तूभयत्रापि न श्रूयते तत्कल्पना चोभयत्र न सम्भवति एकवाक्यत्वसम्भवे वाक्यभेदस्यान्याय्यत्वात् प्रकृते चासुरागमनहेतुत्वेन भयावहतया ऋचा स्तुतिं निन्दित्वा साम्ना स्तुतिर्विधीयत इति वा अवश्यानामसुराणामपि वशीकरणहेतुत्वेन स्तुतामृचा स्तुतिं विधायाग्रे तच्छेषतया साम्ना स्तुतिरवश्यवशीकरणासमर्थत्वेन निन्द्यत इति वा एकवाक्यत्वसम्भवात् । न चात्र किंचिदन्यतरस्मिन् पक्षे विनिगमकमुपक्रमे दृश्यते न च तत्र विनिगमकादर्शनमात्रेण वाक्यभेदमभ्युपगम्य उभयत्र विधिकल्पनं युक्तं असुरान्ववायन्नित्यस्य भयावहत्वेन निन्दापरत्वे ऋचा स्तुतौ विध्ययोगात् अवश्यवशीकरणसमर्थत्वेन स्तुतिपरत्वे तदसमर्थत्वेन निन्द्यमानायां साम्ना स्तुतौ विध्ययोगात् । न चान्ववायन्नित्यस्यावश्यवशीकरणसामर्थ्येन स्तुतिपरत्वं नान्ववायन्नित्यस्य भयावहागमनहेतुत्वेन स्तुतिपरत्वमिति द्विरूपार्थकल्पनमुचितं प्रथमवाक्ये यदभिप्रायेणासुरा अन्ववायन्नित्युक्तं तन्निषेध एवासुरा नान्वयन्नित्यस्य स्वारस्यात् ततश्च वाक्यभेदस्य ऋचा साम्ना च स्तुत्योर्विकल्पस्योभयोरन्ववायन्नित्यनयोर्भिन्नार्थत्वस्य च परिहाराय किमन्यतरत्र विधौ विनिगमकमस्तीति स्वत एवोपक्रमस्य विनिगमकापेक्षया साम्ना स्तुवीतेति प्रत्यक्षविधेस्तद्विनिगमकत्वेनाश्रयणं नत्वौपसंहारिकत्वेन प्राबल्यात् ततश्च तदनुसारेणासुरा अन्ववायन्नित्यस्य निन्दापरत्वनिर्णयः अत एव स्तुतौ सन्दिग्धं विधिनाऽवधार्यत इत्यस्येदमुदाहरणमिति प्राग्दर्शितं ।

ननूपक्रमप्राबल्ये यद्वचा स्तुवत इति परमोपक्रमश्रवणमात्रेण ऋचा स्तुतौ विधिरित्यवधारिते तदनुसारेणैव तदनन्तरश्रुतं सर्वं नेतव्यं स्यादिति चेत् । स्यादेवं यदि तत्र प्रत्यक्षोविधिः श्रूयेत कल्प्यस्तु तत्र विधिः कल्पनं च तद्विरुद्धप्रत्यक्षश्रुतोवाक्यशेषोनिरूणद्धीत्यावेदितमक्ताधिकरणार्थनिर्णय इत्येषा दिक् ।

एवमन्यत्रापि सम्भाविताः क्षुद्रोपद्रवा अनयैव दिशा निरसनीयाः। यत्तूपक्रमप्राबल्यवादे किमुपक्रमे प्रतीतमात्रस्य ग्राह्यत्वमित्यादिप्रलपितं तदुपसंहारप्राबल्यवादे किमुपसंहारे प्रतीतमात्रस्य ग्राह्यत्वं किंवा उपक्रमपरामर्शेन व्यवस्थितस्य, आद्ये उच्चैष्ट्वादीनामृगादिधर्मत्वापत्तिः द्वितीये उपक्रमस्यैव प्राबल्यं सिद्ध्येदिति प्रतिवचनमेव रिक्तीकरोति । वस्तुस्थितिस्तु उपक्रमस्वारस्येन प्रतीतं ग्राह्यं नोपसंहारपरामर्शेन व्यवस्थितं श्येनादिवाक्ये विशिष्टविधिगौरवादिभिया उपक्रमस्य स्वारस्येनैव पश्वादेरग्रहणं नोपसंहारानुसारेणेत्यावेदितमेव तस्माद्वार्तिकोक्तरीत्या निरवद्यमुपक्रमप्राबल्यम् । एवं पूर्वमीमांसायां व्यवस्थितमुपक्रमप्राबल्यमुररीकृत्यैवोत्तरमीमांसायामपि भगवत्पादैः तत्रतत्रार्थनिर्णयाः कृता दृश्यन्ते । यत्त्वर्वाचीनैः पूर्वमीमांसायामिवोत्तरमीमांसायामप्युपसंहारप्राबल्योपजीवनमस्ति तत्र तदन्तरप्रतिपत्तावित्यधिकरणे 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति'इतिपञ्चाग्निविद्यागतवाक्ये श्रद्धाशब्दस्य 'इति तु पञ्चम्यामाहुतौ आपः पुरुषवचसोभवन्ती'त्युपसंहारानुसारेणाप्युपलक्षणायाः *प्रथमे ऽश्रवणात् इति चेन्न ता एव ह्युपपत्तेरिति*सूत्रेणोक्तत्वादित्युदाहरद्भिस्तत्रापि स्वाव्युत्पत्तिप्रकटनं कृतं तस्य यथाश्रुतं भगवत्पादीयं तत्सूत्रगतोपपत्तिपदव्याख्यानमेव निराकरणं भगवत्पादैर्हि'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसोभवन्तीति 'परमोक्रमप्रश्नोपपत्तिः'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसोभवन्ति इति तु पञ्चम्यामाहुतावापः पुरुषवचसोभवन्तीति' प्रश्नप्रतिवचनैकरूप्योपपत्तिः श्रद्धाकार्यसोमवृष्ट्यन्नरेतोरूपानन्तराहुतिद्रव्याणां जलप्रचुरोपपत्तेः(१)प्रत्ययविशेषरूपायाः श्रद्धायाः स्वोपादानादविच्छिद्यान्यत्र प्रक्षेपस्यासम्भवेनाहुतिद्रव्यत्ववर्णनायोगात् श्रद्धाशब्दस्य स्वत एव

(१) पपत्तेः प्रत्यावि० पा० पु० ।

प्रक्षेपयोग्यद्रव्यपरत्वाकाङ्क्षायां वाक्यशेषसमर्पितास्वप्सु तात्पर्योपपत्तिः 'श्रद्धा वा आप' इत्यादौ श्रद्धाशब्दस्याप्यप्सु दृष्टप्रयोगत्वेन तल्लक्षणोपपत्तिश्च 'श्रद्धां जुहोती'त्यत्र श्रद्धाशब्दस्याप्युपलक्षणाभ्युपगममूलत्वेन व्याख्याता नोपसंहारमात्रोपपत्तिः तस्मात्तत्रायमस्थाने भ्रमः इह त्वेवं सम्भवति भ्रमः *अन्यथात्वं शब्दादिति चेन्नाविशेषा*दित्यधिकरणे 'हन्तासुरान्यज्ञ उद्गीथेनात्ययामे'त्युद्गीथोपक्रमेणोद्गीथस्योपास्यत्वे प्रतीयमानेऽप्युपसंहारे 'तेभ्य एष प्राण उदगाय'दित्यादौ उद्गातृपरामर्शात्तदनुरोधेनोद्गातुरेव प्राणदृष्ट्योपास्यत्वं नोद्गीथस्येति निर्णयः कृतः। *न संख्योपसङ्ग्रहादपी*त्यधिकरणे 'यस्मिन्पञ्चपञ्च जना आकाशश्च प्रतिष्ठितस्तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोमृतमिति' वाजसनेयकाम्नातमन्त्रगतस्य मनुष्येषु रूढस्य पञ्चजनशब्दस्य 'प्राणस्य प्राणमुत चक्षुषः चक्षुः श्रोत्रस्य श्रोत्रं मनसो मनो विदुरिति' वाक्यशेषसङ्कीर्तितेषु प्राणादिषु वृत्तिः *प्राणादयो वाक्यशेषादिति* सूत्रेणैवोक्ता। पारिप्लवाधिकरणे च 'सर्वाण्युपाख्यानानि पारिप्लवे शंसतीति' विध्यनुसारेण 'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च' 'मटचीहतेषु कुरुष्वाटक्या सह जायया उषस्तिर्हचाक्रायण इभ्यग्रामे प्रद्राणक उवास' त्यादिब्रह्मविद्याङ्गभूतोपाख्यानानामपि पारिप्लवार्थत्वे प्राप्ते 'मनुर्वैवस्वतो राजे' त्यादिवाक्यशेषसङ्कीर्तिताख्यानविशेषेषु सर्वशब्दस्य सङ्कोचमभ्युपगम्य तेषामेव पारिप्लवार्थत्वं * पारि प्लवार्था इति चेन्नाविशेषितत्वा * दितिसूत्रेण निर्णीतम्। दहराधिकरणे च 'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोस्मिन्नन्तराकाशः तस्मिन्यदन्तः तदन्वेष्टव्यं तद्वाविजिज्ञासितव्यं तं चेद्ब्रूयुर्यदिदमस्मिन्ब्रह्मपुरे दहरीकं वेश्म दहरोस्मिन्नन्तराकाशः किं तत्र विद्यते यदन्वेष्टव्यं यद्वाविजिज्ञासितव्यमिति स ब्रूयाद्यावान्वा अयमाकाशस्तावानेषोन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते इत्यादि' वाक्ये तस्मिन्यदन्तस्तदन्वेष्टव्यमित्युपक्रमे तस्मिन्नित्यस्याव्यवहिताकाशपरत्वस्वारस्येन आकाशान्तर्वर्तिनस्ततोऽन्यस्यान्वेष्टव्यत्वप्रतीतावपि 'यावान्वाअयमाकाश' इत्यादिवाक्यशेषे दराकाशस्य बाह्याकाशसमानपरिमाणत्वादिमहिमवर्णनदर्शनात्तस्यैवान्वेष्टव्यत्वं परब्रह्मरूपता चेत्युभयं *दहर उत्त-

रेभ्य* इति सूत्रे निर्णीतं एवमेतेष्वधिकरणेषु भगवत्पादरीत्योपसंहारानुसरणं प्रतीयत इत्यत्रैवं प्रतिबोधनीयम । * अन्यथात्वं शब्दादिति चेत्यधिकरणोदाहरणे उपक्रमोपसंहारयोर्विरोध एव नास्ति तत्रोपक्रमप्रतीतोद्गीथापरित्यागेनैवोद्गीथगानकर्तृरूपे उद्गातरि प्राणदृष्टिविधानाभ्युपगमात् उपक्रमस्य लक्षणादिकल्पनं विनोपसंहारसमर्पिताविशेषावापमात्रं हि न तेन विरुद्ध्यते यथा गुरुमते आग्नेयादियागानामुत्पत्तिवाक्यावगतेन यागत्वेन 'चतुरवत्तं जुहोतीति' गुणविधिवाक्यावगतस्तेषु प्रक्षेपाधिकत्वरूपहोमत्वावापो न विरुध्यते 'यस्मिन्पञ्च पञ्चजना' इति मन्त्रे पञ्चमनुष्याः परब्रह्मणि सन्तीत्येतावता परब्रह्मणः कस्य चिदुत्कर्षस्याप्रतीतेः पञ्चजनशब्दस्यान्यत्रैव क्वचिदर्थेतात्पर्यमिति सामान्यतोऽवगतौ तद्विशेषाकाङ्क्षायां वाक्यशेषसमर्पितप्राणादिपरिग्रहो न तु तदनुसारेणोपक्रमस्यान्यथानयनम् । सर्वाण्युख्यानानिपारिप्लवे शंसतीत्यत्रानन्तशाखागतसर्वाख्यानशंसनस्याशक्यतयोपक्रमस्यैव केन चिदवच्छेदेन आख्यानसामस्त्ये पर्यवसानाकाङ्क्षया वाक्यशेषसङ्कीर्तिताख्यानसामस्त्ये पर्यवसानं नोपसंहारानुसारेण दहराधिकरणे दहराकाशस्य परब्रह्मता वाक्यशेषगतश्रुतिलिङ्गभूयस्त्वेन निर्णीता*विप्रतिपिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वमिति* न्यायादत एव तत्र उत्तरेभ्य इति बहुवचनेन लिङ्गभूयस्त्वं दर्शितं वाक्यशेषे च यावान्वा अयमाकाश इत्यादिना प्रतिपादितं प्रसिद्धाकाशसादृश्यं उभेऽस्मिन् द्यावापृथिवी इत्यारभ्य यच्चास्येहास्ति यच्च नास्ति सर्वं तस्मिन्समाहितमित्यन्तेन प्रतिपादितं द्यावापृथिव्यग्निवायुसूर्यचन्द्रविद्युन्नक्षत्रादिसकलजगदाधारत्वं 'एष आत्माऽपहतपाप्मा विजरो विमृत्यु'रित्यादिना प्रतिपादितमपहतपाप्मत्वादिगुणाष्टकमित्यादीनां लिङ्गानां भूयस्त्वं स्पष्टमेव 'एष आत्मा अथ य इहात्मानमित्याद्यात्मश्रुतयश्च सन्ति गुणसूत्रोक्ताश्च गत्यादयः तथाच बहूनामेषामनुग्रहाय त्यजेदेकं कुलस्यार्थे इति न्यायेन आकाशश्रुतिरेकाऽन्यथा नीयते बहुबाधस्यान्याय्यत्वात् । न चात्मार्थे पृथिवीं त्यजेदिति ततोऽपि बलवता न्यायेन प्रधानविरोधिनां बहूनामपि गुणानां बाधनं न्याय्यं उपक्रमोपसंहारैकरूप्यावगतप्रधानवेदान्तप्रतिपाद्याद्वैतविरोधिनां बहूनामपि तत्तत्पदसमर्पितप्रवृत्तिनिमित्तभूतधर्माणां बा-

धाभ्युगमात्सूक्ष्मखादिरादिप्रधानयूपद्रव्यविरोधिनां तक्षणादीनां बहूनामपि बाधस्य पूर्वतन्त्रे * द्रव्यसंस्कारविरोधे द्रव्यतदर्थत्वा * दित्यधिकरणे प्रतिपादनाच्च विप्रतिषिद्धधर्माणां समवाय इत्यधिकरणन्यायो यत्र तुल्यप्रधानानामेव प्रथमचरमभावमात्रं विशेषस्तत्रैव अतएव तत्र पञ्चदशरात्रे अग्निष्टुत्प्रथममहस्तद्धर्मतयोपसत्स्वाग्नेयी सुब्रह्मण्या प्राप्ता उत्तराणि ज्योतिर्गौरायुरित्यादीनि चतुर्दशाहानि तद्धर्मतयैन्द्री प्राप्ता एवमहर्धर्मयोर्विरोधे सत्यन्हां समप्रधानत्वेन गुणप्रधानभावादिविशेषानवगमेन कस्य धर्मो ग्राह्य इत्याकाङ्क्षायां मुख्यत्वादग्निष्टुतस्तद्धर्मग्रहे प्राप्ते पाश्चात्यत्वेपि ज्योतिरादीनां भूयस्त्वात् भूयोनुग्रहस्य न्याय्यतया ज्योतिरादि धर्मो ग्राह्य इति सिद्धान्तितम् । यत्र तु भूयसामेकस्य च गुणप्रधानभावादिविशेषः न तत्र भूयोनुग्रहादरो यथोदाहृतद्रव्यसंस्कारविरोधाधिकरणे तत्र हि यदा तनुत्वात्तक्षणादिसंस्कारयोग्यः पशुनियोजनमात्रयोग्यः खदिरोलब्धः तत्प्रतिनिधिः कदरस्तु महान् तक्षणादीनामपि योग्यो लब्धः तत्र यूपार्थे कस्योपादानं कर्तव्यमिति संशय्य कदरोपादाने खादिरो यूपो भवतीत्यस्य किं चिद्वैकल्येपि तक्षणादीनां बहूनामनुग्रहलाभात् कदरोपादानं युक्तमिति प्राप्ते बहूनामपि तक्षणादिसंस्काराणां द्रव्यार्थत्वाद्गुणानुरोधेन प्रधानपरित्यागो न युक्त इति खदिरोपादानं कर्तव्यमिति सिद्धान्तितं । अनुनिर्वाप्याधिकरणे च अग्निचयने अग्नीषोमीयस्य पशुपरोडाशमष्टौ देवसुवां हवींष्यनु निर्वपतीत्यत्र किमग्नीषोमीयपशुधर्मा एकादश प्रयाजत्वादयो ग्राह्या उत अनुनिर्वाप्यधर्माः पञ्च प्रयाजत्वादय इति संशय्य भूयोऽनुग्रहन्यायेनानुनिर्वाप्यधर्मग्रहे प्राप्ते यत्र सर्वेषां तन्त्रतया न गृह्यते विशेषः तत्र मुख्यानुग्रहन्यायापवादो भूयोऽनुग्रहः यत्र त्वेकस्तन्त्री इतरे प्रसङ्गिन इति गृह्यते विशेषः तत्रैकस्यापि तन्त्रिण एव धर्मा ग्राह्या बहूनामपि प्रसङ्गिनां तत्तन्त्रोपजीवित्वेन स्वधर्माप्रयोजकत्वादिति निर्णीतमिति चेन्मैवं वेदान्ते ऽद्वैतवदिहोपासनापरे आकाशशब्दितस्य प्रतिपाद्यत्वरूपप्राधान्यासिद्धेः विधीयमानक्रियाकर्मत्वलक्षणस्य खदिरादिवत्प्राधान्यस्य ब्रह्मलिङ्गभूतेषु गुणेष्वप्यविशिष्टत्वात् 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान् तेषां सर्वेषु लोकेषु कामचारो भवतीति' तेषामप्युपास्य-

त्वानिर्देशादग्नीषोमीयवत् तन्निश्रत्वलक्षणविशेषस्य चेह शङ्कानास्पदत्वात् तस्माद्दहराकाशो ब्रह्मेति बव्हनुग्रहन्यायेन निर्णयो नोपसंहारप्राबल्येनानन्वस्त्वेवमेतत् तथापि तस्मिन् यदन्तरिति दहराकाशस्योपासना विधीयत इति कुतोऽवसीयते'यावान्वा अयमाकाश इत्यादिना तन्महिमवर्णनादिति चेत् न । पद्मकोशप्रतीकाशमित्यादौ दहरपुण्डरीकवर्णनवत्तदन्तर्वर्तिवस्तुप्रतिपत्त्यर्थत्वेनापि तत्सम्भवात् दहराकाशान्तरवर्ति ततोऽन्यदुपास्यं न सम्भवतीति चेन्न। तदनन्तरमेवोभे अस्मिन् द्यावापृथिवी इत्यादिना तदन्तर्वर्तिवस्तुप्रतिपादनेन तस्योपास्यत्वसम्भवात् । द्यावापृथिव्यादेरुपास्यत्वे अथ य इहात्मानमित्यात्मोपास्तेः फलत्वोपसंहारो विरुद्ध्यत इति चेत्तर्हि तन्मात्रानुसारेण तस्मिन् यदन्तरित्यादेर्दहराकाशरूपपरमात्मोपासनाविधिपरत्वमिति सिद्धमुपसंहारप्राबल्यम् । नच तस्मिन्यदन्तरित्यादेः पुण्डरीकान्तर्वर्तिदहराकाशोपासनाविधिपरत्वं दहराकाशान्तर्वर्तिवस्त्वन्तरोपासनाविधिपरत्वस्यैव तत्स्वारस्येनावधार्यमाणतया सन्देहाभावात् तस्य पुण्डरीकान्तर्वर्तिदहराकाशोपासनाविधिपरत्वे हि तस्मिन्नित्यस्य व्यवहितपुण्डरीकपरामर्शित्वं स्यात् तच्चाव्यवहितदहराकाशपरामर्शित्वसम्भवे न युक्तं दहराकाशस्य पुण्डरीकान्तर्वर्तित्वस्य दहरोऽस्मिन्नन्तराकाश इत्यनेनैव प्राप्ततया तस्मिन्यदन्तरित्यस्य च वैयर्थ्यं स्यात् तदपि तदप्राप्तदहराकाशान्तर्वर्तित्वपरत्वेन सार्थकत्वसम्भवे न युक्तं दहराकाशः पुण्डरीकान्तरवर्तीत्यस्य निर्ज्ञाततया। तस्मिन्यदन्तरिति उक्त्यनन्तरं किं तदत्र विद्यत इति प्रश्नोऽप्यसमञ्जसः स्यात् तदसामञ्जस्यमपि तस्मिन्यदन्तरित्येवं संमुग्धाकारेण दहराकाशान्तरवर्तिनः कस्य चिदुपासनाविधिपरत्वे तस्य विशिष्यावगत्यर्थं किं तदत्र विद्यत इति प्रश्न इति सामञ्जस्यसम्भवे न युक्तं यत्पदस्य दहरोऽस्मिन्नन्तराकाश इति पूर्वनिर्दिष्टनिर्ज्ञातपुल्लिङ्गाकाशपरत्वे च नपुंसकलिङ्गमत्यन्तासङ्गतं स्यात् इति तस्य प्रश्नानन्तरं निर्देक्ष्यमाणानिर्ज्ञातलिङ्गवस्त्वन्तरपरत्वेन कथं चित्सङ्गतिसम्भवे तदसाङ्गत्यमपि न युक्तं एवमपि यत्तस्मिन्यदन्तरित्यस्य दहराकाशोपासनाविधिपरत्वमवगम्यते न तदुपास्तिफलोपसंहारप्राबल्येनैत्येव पर्यवस्यतीति । एतेन तस्मिन्यदन्तरित्यत्र यद्रामानुजीयं कल्पनं त-

स्मिन्निस्यव्यवहितो दहराकाशः परामृश्यते यदन्तरिति चास्मिन्कामाः समाहिता इति प्रश्नान्तरनिर्देक्ष्यमाणं कमनीयतया कामशब्दवाच्यं तदवगतमपहतपाप्मत्वादिगुणजातमुच्यते अतो न कश्चित्पूर्वोक्तदोषः तदन्वेष्टव्यमिति तु तन्मात्रस्योपासना न विधीयते। अथ य इहात्मानमिति वाक्यशेषे आत्मनस्तद्गुणानां च उपासनायाः फलवत्त्वोपसंहारात् किन्तु तस्मिन्निति निर्दिष्टो दहराकाशः यदिति निर्दिष्टं तदन्तर्वर्तिगुणजातं चेत्युभयोरुपासनं विधीयते। न च नपुंसकलिङ्गैकवचनान्तेनोभयपरामर्शानुपपत्तिः, 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामिति' व्याकरणसूत्रेण नपुंसकानपुंसकयोर्नपुंसकशेषस्य एकवद्भावस्यानुशासनादुभयपरामर्शोपपत्तिरिति, तत्रापि नपुंसकैकवचनान्तस्य यत्पदस्य कामशब्दोक्तानेकगुणपरामर्शित्वात्तदस्य तस्मिन्यदिति विभिन्नविभक्तिनिर्दिष्टोभयपरामर्शित्वकल्पनेकशेषइति अयमिदं क्लिष्टं स्वतोऽप्रतीयमानमथ य इहात्मानमित्याद्युपसंहारानुसारेणैव कल्पनीयमित्युपसंहारप्राबल्यमवर्जनीयमिति चेत्। उच्यते। यावान्वा अयमाकाशस्तावानेषोन्तर्हृदय आकाश इति एतावता दहराकाशमहिमवर्णनस्य द्यावापृथिव्यादितदन्तर्गतवस्तुप्रतिपत्त्यर्थत्वसम्भवेपि तेषां तदङ्गत्वप्रतिपादनानन्तरमारब्धस्य 'एष आत्माऽपहतपाप्मा' 'अस्मिन्कामाः समाहिता' 'अथय इहात्मान' 'मिमाः प्रजाः अहरर्गच्छन्त्य एतं ब्रह्मलोकं न विदन्त्यनृतेन हि प्रत्यूढा' 'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय'त्यादिदहराकाशमहिमप्रपञ्चनस्य तदन्तर्गतवस्तुप्रतिपत्त्यर्थत्वासम्भवादुपासनार्थत्वावश्यम्भावेन तेषामनन्यथासिद्धानां भूयसामनुग्रहानुरोधेन तस्मिन्यदन्तरित्यादेर्दहराकाशस्यान्वेष्टव्यतापरत्वमवसीयते न तदुपास्तिफलोपसंहारमात्रानुरोधेन। न चैष आत्मेत्यादौ एतदादिशब्दानामव्यवहितद्यावापृथ्व्यादिपरत्वं शङ्कनीयं पुल्लिङ्गैकवचनान्तानां तेषां व्यवहितेप्याकाश एव स्वारस्यादुभे अस्मिन् द्यावापृथिवी इत्यादौ आकाशे अवगतस्य समाधानाधारत्वस्यास्मिन्कामाः समाहिता इत्यत्र प्रत्यभिज्ञानाच्च तथा च भूयोऽनुग्रहानुरोधेन तस्मिन्यदन्तरित्यत्र तस्मिन्नित्यस्य व्यवहितपुण्डरीकपरामर्शित्वकल्पनं न दोषः सर्वनाम्नामव्यवहितपरामर्शासम्भवे व्यवहितपरामर्शित्वस्य तस्य

द्वादशशतं दक्षिणेत्यादौ दृष्टत्वात् । यत्पदं वक्ष्यमाणद्यावापृथिव्यादिसकलविशेषणविशिष्टदहराकाशपरं अन्यथा विशेषणानां विध्य(१)संस्पर्शउपास्यत्वासिद्धेरिति नानुवादवैयर्थ्यं अत एव किं तदत्र विद्यत इत्यप्युपपद्यते नह्ययं प्रश्नः किन्त्वाक्षेपोयं अतिस्वरूपे आकाशे विशेषणतया किमन्वेष्टव्यं विज्ञातव्यं वास्तीति अतएव यदिदमस्मिन्ब्रह्मपुर इत्यादेः पुनरनुसङ्कीर्तनं शरीरान्तर्गतं पुण्डरीकमेव तावदल्पमल्पतरं च तदन्तर्गतमाकाशं किं तत्र वर्तते इत्याक्षेपोपयोग्यर्थद्योतनाय, प्रश्नपरत्वे किं तत्र विद्यते एतावदेव वक्तव्यं स्यात् एवमाक्षिप्ते सत्युत्तरवाक्येन भूताकाशसादृश्यप्रतिपादनं तदन्तः सर्वसमाधानप्रतिपादनाय पुण्डरीकवेष्टनकृताल्पत्वव्यावृत्तिपरमिति नासमञ्जसं किं चित् । यच्च नपुंसकलिङ्गासङ्गतिरित्युक्तं तदपि न । लुङः विषये अनद्यतनभूतेपि भूतत्वसामान्यानुवृत्तेस्तद्विवक्षया लुङः प्रयोगस्यैव सर्वविकारानुवृत्तसत्वरजस्तमोगुणानुगतं गुणत्वसामान्यं स्थितिशब्दितं नपुंसकलिङ्गमिति शाब्दिकमर्यादया नपुंसकलिङ्गस्य स्त्रीपुंल्लिङ्गरूपयोरपि विकारयोरनुगमात्तद्विवक्षया नपुंसकलिङ्गनिर्देशस्योपपत्ते'र्मुखनासिकावचनोऽनुनासिकः' 'द्विगुरेकवचन'मित्यादौ निर्ज्ञातान्यलिङ्गपदान्तरविशेषणानामपि नपुंसकलिङ्गत्वदर्शनाच्च । ननु लिङ्गविशेषनिर्देशात्समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वादिति पूर्वतन्त्राधिकरणे संस्थानां पशूनां च सामान्यविध्यपक्षे ऽतिरात्रगतायां सारस्वत्यां मेष्यामग्निगुप्रेषाम्नातस्य प्रास्मा अग्निं भरतस्तृणीत बर्हिरित्यस्मै शब्दस्य क्रतुपशुपरामर्शिनोपि लिङ्गत्वादप्रवृत्तिरुक्ता । सत्यं तत्र पुल्लिङ्गस्य स्त्रियामसाधुत्वादप्रवृत्तिरुक्ता अन्वेनमाता अन्यता मित्यन्वादेशे पुल्लिङ्गनिर्देशनास्मा इत्यस्य पुल्लिङ्गत्वनिश्चयात् इह तु नपुंसकलिङ्गस्यान्यत्राप्रवृत्तिरुपपादितैव । किं च तत्र पुंस्पशूनामपि सन्निधानात्तेषु चरितार्थस्यास्मैपदस्य सारस्वत्यामप्रवृत्तिर्युक्ता इह तु यत्पदस्य क्व चरितार्थताऽस्तु निर्देक्ष्यमाणेषु द्यावापृथिव्यादिष्वपि लिङ्गवैगुण्यमविशिष्टं अधिकं तु वचनवैगुण्यं यद्यपि तदादिनिर्देक्ष्यमाणविशेषानवगमात् तद्वैगुण्यं न प्रतिसन्धीयते त-

---

(१) विधिसंस्पर्श इति पु० पा० ।

थापि द्यावापृथिव्यादिनिर्देशानन्तरं तद्वैगुण्यप्रतिसन्धानमवर्जनीयमिति तदा तत्र लिङ्गवचनयोरुभयोरपि कथं चिदुपपादनमन्वेषणीयं तदिहैव लिङ्गमात्रस्योपपादनमन्विष्यताम्।

यद्वा दहराकाशे परमात्मनि यदन्तर्वर्तते तदन्वेष्टव्यमिति वक्ष्यमाणानां द्यावापृथिव्यादीनां सामान्येनोपासनाविधिः एवं च तस्मिन्नित्यस्य न व्यवहितपरामर्शित्वं न च नपुंसकलिङ्गानुपपत्तिः नापि तस्मिन्यदन्तरिति पुनरनुकीर्तनं व्यर्थमिति शङ्कावकाशः, किं तदत्र विद्यत इति पूर्ववदेव तदन्तर्वर्त्यसम्भवेनाक्षेपे यावान्वा अयमित्यादिना दहराकाशवैभववर्णनापूर्वकं तत्र द्यावापृथिव्यादीनां पित्रादिब्रह्मलोकान्तानां च सत्यकामशब्दितानां तदन्तर्वर्त्तितयोपास्यानामुपन्यासः तस्य दहराकाशस्योपासनाविधिस्तु तदन्तर्गतोपासनाविधिनैवार्थसिद्धः पृष्ठसामगतः(१) सर्वताविधानेनेव पृष्ठसामविधिः न हि दहाराकाशमनुपासीनेन तदन्तर्वर्त्तितया द्यावापृथिव्यादिकमुपासितुं शक्यं एवमर्थसिद्धं दहराकाशस्योपासनं श्रुतं तत्समाहितोपासनं च अथ य इहात्मानमित्यादिफलवाक्ये अनुकीर्तितं इति न कस्याप्यसाङ्गत्यम्। अथ वा तस्मिन्यदन्तस्तत्साधारमन्वेष्टव्यमित्यध्याहारोस्तु अग्रिमानुरोधात् न ह्येतावतोपसंहारेणात्रोपक्रमस्य प्रतीतार्थपरित्यागरूपं अन्यथाकरणं तत्प्रतीतदहराकाशान्तर्वर्त्युपास्यत्वापरित्यागेनैवोपसंहारसमर्पितदहरोपास्यत्वलक्षणाधिकावापमात्रकरणात्। केचित्तु फलवाक्ये दहराकाशस्य धर्मिणस्तद्धर्माणां च पृथगुपासनानुवादमनुरुन्धानास्तस्मिन्यदन्तरित्युपक्रमे यो दहराकाश इत्यध्याहृत्य यो दहराकाशो यच्च तदन्तर्वर्ति गुणजातं तदुभयमुपासनीयमिति वाक्यार्थं वर्णयन्ति तदर्थं च तत्पदे'त्यदादीनि सर्वैर्नित्यं' 'नपुंसकमनपुंसके नैकवच्चास्यान्यतरस्यामिति' व्याकरणसूत्रानुरोधेन नपुंसकशेषैकवद्भावावङ्गीकृत्योभयपरामर्शित्वमुपपादयन्ति सर्वेप्येते पक्षाः प्रपञ्चेन न्यायरक्षामणावस्माभिरुपपादयिष्यन्ते तस्मात्सिद्धमेतत् दहराधिकरणे नोपसंहारप्राबल्योपजीवनमस्ति न वा सूत्रकारमतिप्राप्तं उत्तरेभ्य इति बहुवचनेन बह्वनुग्रहन्यायस्यैव सूचनादिति। न-

(१) गतसर्वता इति पु० पा०।

न्वाकाशस्तल्लिङ्गादित्यधिकरणे लिङ्गबलेनाकाशश्रुतेरन्यथानयनं कृतमिति तावदविवादं तत्र स्वतः श्रुतेर्दुर्बलस्य लिङ्गस्य 'दुर्बलस्य प्रमाणस्य बलवानाश्रयो यदा । तदापि विपरीतत्वं शिष्टाकोपे यथोदित'मिति न्यायेन बलवदुपष्टम्भकृतमेव बलवत्त्वं वाच्यं तत्र न तावल्लिङ्गस्योपक्रमगतत्वं प्राबल्ये हेतुः उपक्रमे ब्रह्मलिङ्गादर्शनात् । न चा'स्य लोकस्य का गतिराकाश इतिहोवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्त्याकाशोह्येभ्यो ज्यायानाकाशः परायणं स एष परोवरीयानुद्गीथः स एषोऽनन्त' इति विषयवाक्ये प्रश्नस्थं सर्वलोकगतित्वं उपक्रमगतं लिङ्गमिति शङ्कनीयं, प्रश्नस्या'मुष्य लोकस्य का गतिरित्ययं लोक इति होवाचेति' प्रस्तुत पृथिवीलोकगतिमात्रविषयत्वेन सर्वलोकगतिविषयत्वासिद्धेः । नचास्य प्रश्नस्य पृथिवीमात्रविषयत्वे 'अद्भ्यः पृथिवीति' श्रुत्यन्तरे तत्कारणत्वेन प्रसिद्धानामपामेव गतित्वेन वक्तव्यतया आकाश इति होवाचेत्युत्तरासाङ्गत्यमिति वाच्यम् । पृथिवीं प्रत्यपां साक्षात्कारणत्वेपि परम्परया आकाशस्यापि कारणकोटिनिविष्टत्वेन सामगतिपरंपरायामन्नकारणत्वेन पूर्वं गृहीता अपो विहायाकाशो गतित्वेनोक्त इत्युपक्रमप्राबल्यवादे तदनुरोधेन तत्साङ्गत्यवर्णनोपपत्तेः पूर्वग्रन्थे 'का साम्नोगतिरिति स्वर इति होवाच स्वरस्य का गतिरिति प्राण इति होवाच प्राणस्य का गतिरिति अन्नमिति होवाच अन्नस्य का गतिरिति आप इति होवाच अपां का गतिरिति असौ लोक इतिहोवाच इति ' शालावत्यदाल्भ्यप्रश्नप्रतिवचनपरम्परायामन्नगतित्वेनापां गृहीतत्वात् नाप्युपसंहारग(१)त्वेपि भूयस्त्वं प्राबल्ये हेतुः उपासनापरेपि वाक्ये गतिविषयप्रश्नप्रतिवचनदर्शनादवान्तरतात्पर्येणाकाशस्य सामगतिपरम्पराविश्रान्तिभूमित्वेन प्रतिपाद्यत्वावगत्या प्रधानाविरोधिनां भूयसामप्यनादरणीयत्वात् प्रधानश्रुत्यनुसारेण सर्वकारणत्वसर्वलयस्थानत्वसर्वतोज्यायस्त्वपरायणत्वपरोवरीयस्त्वानन्तत्वलिङ्गानामेव भूयसामप्यन्यथानयनस्योचितत्वात् सूत्रे तल्लिङ्गादित्येकवचनस्वारस्येन भूयस्त्वापेक्षेण केन चिदेव लिङ्गेन श्रुतेरन्यथा-

( १ ) नाप्युपसंहारगतत्वेति ख० पु० पा० ।

नयनं विवक्षितमिति प्रतीतेश्च । नचोपसंहारगतत्वेपि सर्वकारणत्वादेरनन्यथासिद्धत्वं प्राबल्ये हेतुः 'आकाशाद्वायुरिति' श्रुत्यन्तरसिद्धभूताकाशगतवाय्वादीतरसर्वभूतकारणत्वाभिप्रायेण सर्वकारणत्वव्यपदेशः अग्रिमसन्दर्भोपि वाय्वादीतरभूतलयस्थानत्वतदपेक्षज्यायस्त्वादिविषयः इति सर्वेषामन्यथा नेतुं शक्यत्वात् । न चाकाशादेव समुत्पद्यन्ते इति सावधारणं कारणत्वं भूताकाशे न सम्भवति तस्य तेजःप्रभृतिकारणत्वे वाय्वादिकारणान्तरसापेक्षत्वादिति शङ्कनीयं ब्रह्मणोपि 'वैषम्यनैर्घृण्ये न सापेक्षत्वादिति' न्यायेन जगत्सृष्टौ कालादृष्टादिसापेक्षत्वेन साम्यात् कथञ्चिदवधारणसमर्थनस्य भूताकाशेपि सम्भवात् तस्मात्प्रकारान्तरासम्भवादुपसंहारगतत्वमेव लिङ्गस्य प्राबल्यहेतुरिति सिद्धमुपसंहारप्राबल्यापेक्षणम् ।

अत्रोच्यते । उपक्रमावगततया उक्रमोपसंहारैकरूप्यावगतनया अन्यथासिद्धतया च प्रबलेनानन्तत्वेन लिङ्गेन तत्राकाशश्रुतेरन्यथानयनं तथाहि उपक्रमे पृथिवीलोकं सामगतिपरम्पराविश्रान्तिभूमित्वेन समर्थितवतः शालावत्यस्य पक्षे 'अन्तवद्वै किल ते शालावत्य सामेति' जैवलिना अन्तवत्त्वदोष उद्भावितः तेन उपक्रम एवैतदवगतं स्वयं जैवलिरनन्तमन्यत्सामगतिपरम्परापर्यवसानभूमित्वेन विवक्षतीति तदेकरूपश्चोपसंहारः अस्य लोकस्य का गतिरिति शालावत्यपृष्टेन जैवलिना आकाशं गतित्वेनोक्त्वा स एषोनन्त इति तत्रानन्तत्वस्योपसंहृतत्वात् अनन्यथासिद्धत्वञ्चानन्तत्वलिङ्गं अनन्तवत्येव भूताकाशे वाय्वादिस्वकार्यापेक्षया ऽधिककालावस्थायित्वाभिप्रायेणानन्तत्वव्यपदेश इति त्रिदशामरत्वन्यायेन तदनन्यथानयन उपक्रमसङ्कीर्तितान्तवत्त्वदोषपरिहारालाभात् ततश्च यथा 'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ उपांशु याजमन्तरा यजति विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्यो ऽजामित्वाय अग्नीषोमौ उपांशु यष्टव्यावजामित्वायेति' वाक्ये उपक्रमे पुरोडाशयागद्वयनैरन्तर्येण जामितादोषसङ्कीर्तनेन तत्परिहाराय तयोर्मध्ये किञ्चिद्विधित्सितमित्यवगमात् अजामित्वायेति तद्दोषपरिहारोपसंहारैक्यरूपात् विष्ण्वादिवाक्येषु यागविधिस्वीकारे तद्दोषपरिहारलाभा-

तद्दोषपरिहारायान्तरावाक्य एव कल्प्योपि यागविधिः स्वीकर्तव्य इति जामिनादोषपरिहारानुसारेण विष्ण्वादिवाक्येषु प्रत्यक्षाया अपि श्रुतेरन्यथानयनं तत्वानुसारेणाकाशश्रुतेरिति ।

नन्वेवं स्वर्गलोकं सामगतिपरम्परापर्यवसानभूमित्वेन समर्थितवतो दाल्भ्यस्य पक्षे शालावत्यकृतेन 'अप्रतिष्ठितं वै किल दाल्भ्य सामे'-त्यप्रतिष्ठितत्वदोषोद्भावनेन शालावत्यः स्वयं प्रतिष्ठारूपं किञ्चित्तत्वेन विवक्षतीत्यनुमानात्तदनन्तरमयं लोक इति होवाचेति शालावत्यवचनमपि ब्रह्मविषयं स्यात् ब्रह्मण एवासङ्कुचितसर्वप्रतिष्ठारूपत्वात् 'ब्रह्मपुच्छं प्रतिष्ठेति' श्रवणाच्च। मैवम्।तदनन्तरं तदब्रह्मत्वगमकान्तवत्वश्रवणात्तद्गत्यन्तरप्रपञ्चानुसारेण च तस्य प्रतिष्ठालोकत्वप्रसिद्धेः पृथिवीलोक एव विश्रान्तेः भूयोनुग्रहन्यायात् 'इतः प्रदानं देवा उपजीवन्ति' इति श्रुत्यन्तरानुसारेण 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजा इति' स्मृत्यनुसारेण पृथिवीलोकस्य स्वर्गलोकगतित्वौचित्याच्च । नचाकाशस्यानन्तत्वकीर्तनानन्तरं तद्विरुद्धश्रवणमण्वप्यस्ति वा न वा भूताकाशस्य पृथिवीलोकगतित्वौचित्यमस्ति पृथिवीं तद्गतं प्राणिनिकायं वा प्रति विशिष्य भूताकाशस्योपजीव्यत्वप्रसिध्यभावात् सामादीन्प्रति तथोपजीव्यत्वेन लोकतः श्रुतितो वा प्रसिद्धानामेव स्वरादीनां सामगतित्वस्य पूर्वग्रन्थे वर्णनात् तर्हि पृथिवीलोकं प्रति ब्रह्मणोपि विशिष्य गतित्वप्रसिद्धिर्नास्तीति तस्यापि पृथिवीलोकगतित्ववचनं समञ्जसं न स्यादिति चेत् । सत्यम् । नास्माभिरस्य लोकस्येति शालावत्यप्रश्नः पृथिवीलोकगतिविषय इत्युपेयते किं तु सर्वलोकगतिविषय इति पृथिवीलोकमात्रगतिविषयत्वे प्रत्यक्षादिसन्निधापितसमस्तपरामर्शशक्तयोरस्य लोकस्येति श्रुत्योः पृथिवीलोकसन्निधानेन सङ्कोचकल्पनापत्तेः सर्वाणिह वा इमानि भूतानि इत्याद्यग्रिमप्रपञ्चस्यासामञ्जस्यापत्तेश्च आकाशस्य सर्वलोकगतित्वोक्तौ हि तदुपादनार्थं अग्रिमप्रपञ्चः सङ्गच्छते सर्वभूतोत्पत्तिलयस्थानत्वात् सर्वलोकं प्रति गतित्वमुपजीव्यत्वरूपमुपपन्नमिति पृथिवीमात्रगतित्वोक्तौ तावन्न वक्तव्यं स्यात् । ननु स्वर्गलोकं प्रति पृथिवीलोकस्य गतित्वे उक्ते पृथिवीलोकं प्रत्येव गतौ प्रष्टव्यायां सर्वलोकगतिप्रश्नस्य कथं सङ्गतिरिति चेत् इत्थं अन्तव-

ह्वे किल त इति अन्तवत्त्वदोषोद्भावनेन स्वयमनन्तं जैवलिर्गति-त्वेन विवक्षतीति तावदवगतं अनन्तं च देशतः कालतो वस्तुत-तश्च परिच्छेदरहितं वस्तुतः परिच्छेदराहित्यं च सर्वोपादानतया सर्वात्मकस्यैव सम्भवति तत्र ,सर्वलोकगतिरूपमिति निश्चित्य तर्त्कि सर्वलोकगतिरूपमनन्तं वस्त्विति प्रश्न इति एवं सर्वलोक-गतौ पृष्टायां तथात्वेन 'यतो वा इमानि भूतानि जायन्ते' 'कोह्येवा-न्यात्कः प्राण्या'दि'त्यादिश्रुत्यन्तरे ब्रह्म प्रसिद्धमिति तस्य गतित्व-वचनं युज्यते अतएवानन्तरग्रन्थे सर्वाणि ह वा इति ह वै शब्देन सैव प्रसिद्धिर्द्योत्यते एवं चोपक्रमगतसर्वलोकगतित्वलिङ्गेनाप्या-काशश्रुतेरन्यथानयनमविकलं तथा भूयोनुग्रहन्यायेनाप्याकाशे-सर्वलोकगतिसम्बन्धस्यैवावान्तरतात्पर्येणापि प्रतिपाद्यतया आकाश-स्य स्वरूपतः प्रतिपाद्यत्वरूपप्राधान्यासिद्धेः । नन्वाकाशश्रुतिरपि पञ्चवारमभ्यस्तेति भूयोऽनुग्रहन्याय उभयत्रापि तुल्य इति चेन्न । सर्वलोकगतित्वादीनामनन्तत्वपर्यन्तानां लिङ्गानां तदपेक्षया भूय-स्त्वात् लिङ्गानुग्रहेपि श्रुतीनामपि कासांचिदनुग्रहलाभेन श्रुति-साहित्येन भूयस्तरत्वाच्च लिङ्गान्यथाकरणे हि भूतश्रुतेराकाश-साधारणायाः सर्वश्रुतेश्च तत्साधारणसामस्त्यवाचिकाया आकाश-व्यतिरिक्तेषु सङ्कोचरूपोबाधः कल्पनीयः स एषोनन्त इत्यत्र नि-षेध्यसमर्पकस्यान्तशब्दस्य चाल्पकालावस्थायित्वे लक्षणा कल्प-नीया आकाशादेवेत्यवधारणश्रुतेश्चात्यन्तबाधः कल्पनीयः अवधा-रणश्रुतिर्हि उपात्तसजातीयं व्यवच्छिनत्ति अतएव गृहमधीये परि-कृष्यापक्षे आज्यभागौ यजतीत्यस्यावधारणार्थलक्षकस्याज्यभागस-जातीययागान्तरव्यवच्छेदकत्वं स्विष्टकृद्विधानस्येवावधारणार्थे लक्ष-कस्य शेषकार्यान्तरव्यवच्छेदकत्वं च पूर्वतन्त्रे*स्विष्टकृदिति भक्षप्रति-षेधः स्या*दित्यधिकरणे दर्शितं एवञ्चाकाशशब्दस्य मूलकारणब्रह्मप-रत्वे भूतेषु तादृशकारणान्तराभावात्सङ्गतावधारणश्रुतिरवान्तरका-रणभूताकाशपरत्वे तु तेजःप्रभृतिषु वाय्वादीनामपि तादृशकारणा-नां सत्त्वेन तद्व्यवच्छेदासम्भवादसङ्गताऽवधारणश्रुतिःस्यात् नहिपू-र्वतन्त्रे श्रुत्या मन्त्रलिङ्गबाधे श्रुतिकल्पनामात्रबाधवदिह श्रुत्युप-स्थाप्यब्रह्मलिङ्गबाधे श्रुतिकल्पनामात्रबाधः किन्तु तत्साहिङ्गोपस्थाप-ककोट्यन्तर्गतकॢप्तश्रुतिबाधोप्यवर्जनीयः एवञ्च भूयसीनां ब्रह्म-

लिङ्गश्रुतीनामनुग्रहायाकाशश्रुतिरन्यथा नेयेत्यपि युक्तमेव तस्मादा- काशाधिकरणेपि नोपसंहारप्राबल्योपजीवनशङ्कावकाशः एवमन्य- त्रापि तत्र तत्र सम्भावितानां शङ्काशूकानां निरसनमूहनीयं तस्मा- दुत्तरमीमांसायामप्युपक्रमप्राबल्यमविशीर्णं एवं च सकलमीमांस- कव्यवहारविरुद्धोनयसरणिगन्धानभिज्ञैरर्वाचीनैः स्वमतस्येतरमत- वैलक्षण्यप्रकटनाय कल्पितोपक्रमोपसंहारबलाबलव्यत्ययो यवनगुरू- पदिष्टशौचमुखप्रक्षालनपौर्वापर्यव्यत्यासवदुपेक्षणीयः प्रामाणिकैरि- ति सिद्धम् ।

विद्वद्गुरोर्विहितविश्वजिदध्वरस्य
श्रीसर्वतोमुखमहाव्रतयाजिसूनोः ॥
श्रीरङ्गराजमखिनः श्रितचन्द्रमौलि-
रस्त्यप्पयदीक्षित इति प्रथितस्तनूजः ॥
अकरोदयमक्लिष्टमात्मबुद्धिविशुद्धये ।
उपसंहृतदुर्न्यायमुपक्रमपराक्रमम् ॥

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभ श्रीमदद्वैतविद्या-
चार्य श्रीरङ्गराजाध्वरिवरसूनोरप्पय्यदीक्षितस्य
कृतिरुपक्रमपराक्रमः सम्पूर्णः ।

॥ श्रीहरिर्जयति ॥

व्रतानपेक्षाध्ययनविधिना शिरोव्रताङ्गकमुण्डकाध्ययनप्रयोगवत्कर्मविचारे शमाद्यनपेक्षेणापि विधिना तदङ्गकश्रवणप्रयोगसम्भवात् ।

तस्माद्विचारद्वयस्यैकविधिप्रयुक्तत्वात्क्रमापेक्षायां वैपरीत्यस्य न्याय्यत्वादेकमोक्षफलकत्वेन स॒ च्चयमङ्गीकृत्य कर्मविचारानन्तर्यक्रमनियमार्थो ऽथशब्द इत्युक्तिरयुक्तेत्याह । समुच्चये ऽपीति—

फलजिज्ञास्यभेदाच्च न क्रमो ऽपेक्षितो ऽनयोः ।
प्रमाणं नैव पश्यामो ज्ञानकर्मसमुच्चये ॥
समुच्चये ऽपि नैव स्यात्कर्मब्रह्मविचारयोः ।
पौर्वापर्यस्य नियमो वैपरीत्यस्य सम्भवात् ।

यदुक्तम् एकजिज्ञास्यकत्वेन क्रमापेक्षेति, तत्राह । जिज्ञास्यभेद इति—

जिज्ञास्यभेदः स्पष्टोऽत्र विभेदाद्ब्रह्मधर्मयोः ।
आनन्तर्यावधिस्तस्माद्विवेकादिचतुष्टयम् ॥

अत्र विचारद्वये ब्रह्मधर्मयोः सिद्धत्वसाध्यत्ववैलक्षण्याद्भेदः स्पष्टः । प्रमाणवैलक्षण्याच्च जिज्ञास्यभेदः । धर्मो हि प्रवर्तकवाक्यगम्यः ब्रह्म त्वप्रवर्तकवाक्यगम्यम् अतः क्रमस्यानपेक्षितत्वान्न तदर्थो ऽथशब्दः। किन्त्वानन्तर्यार्थक एव। कस्तर्ह्यानन्तर्यावधिरिति चेत् श्रौतसाधनसम्पत्तिरित्याहानन्तर्येति । ननु सो ऽन्वेष्टव्य इत्यत्र तद्यथेह कर्मचितो लोकः क्षीयत इति कर्मफलस्यानित्यत्वं श्रुतं ज्ञानप्रकरणे परीक्ष्य लोकानिति वैराग्यं श्रुतमन्यत्र शान्तो दान्त इति शान्त्यादिकं श्रुतं ब्रह्म वेद ब्रह्मैव भवतीत्यादिफलश्रुतिषु मुमुक्षा लभ्यते एवं विशकलितविशेषणानां कथमेकश्रवणविध्यधिकारनिमित्ततावगतिरिति तत्राह । तत्र तत्रेति—

तत्र तत्र विवेकादि श्रुतमेकत्र नीयते ।
सर्वशाखाप्रत्ययेन विधेरेकत्वनिश्चयात् ॥

सर्वशाखाप्रत्ययन्यायेन यथा ऽग्निहोत्रादिविधीनां सर्वशाखास्वैक्यं तथा सो ऽन्वेष्टव्यः तद्विजिज्ञासस्व श्रोतव्य इत्यादौ सर्वत्र श्रवणविधिरेक इति निश्चीयते । वैराग्यवाक्ये विज्ञानार्थमिति फलोक्त्या श्रवणस्थतया सर्वविशेषणानामेकाधिकारनिमित्ततावगतिरिति। यद्यप्येतेनापि विशेषणेन विधेरधिकार्याकाङ्क्षा शाम्यति तथापि शास्त्रेणासंकीर्तितत्वात्सर्वेषां निमित्तत्वमन्यथा संकीर्तनं व्यर्थं

स्यात्। केचित्तु काम्यकर्मणि कामनाया एव निमित्तत्वान्मुमुक्षैवाधिकारिविशेषणमितरसंकीर्तनं तु मुमुक्षानुमानार्थमित्याहुः।

ननु शान्त्यादीनामङ्गानां कथमधिकारिविशेषणत्वमिति चेत् दीक्षितो जुहोतीत्यत्र दीक्षायामङ्गत्वविशेषणत्ववदिति भावः। ननु सत्यां मुमुक्षायां श्रवणव्यतिरेकाभावान्न विवेकादीनां विशेषणत्वमित्याशङ्क्य मुमुक्षाहेतुत्वेन तेषां विशेषणत्वमित्याभिप्रेत्य कार्यकारणभावमाह विवेकादिति—

विवेकात्तु विरक्तिः स्यात्ततः शमदमादिकम्।
ततो मुमुक्षेत्यंतेषां कार्यकारणता भवेत्॥

सर्वं कार्यं सोपादानं कार्यत्वात्तच्चोपादानं लाघवादेकमनादि तथा सर्वं कदाचित् कात्स्न्र्येन विनाशि एकोपादानकत्वात्सुखादिवत्। उपादानं तु नित्यं तन्नाशे पुनः सृष्ट्यभावप्रसङ्गादिति तर्कोपोद्बलितया तद्यथेहेत्यादिश्रुत्या कार्यमात्रे नाशदोषदर्शनात्। नित्यवस्त्ववलम्बेन वैराग्यं जायते तत इन्द्रियप्रवृत्तौ निमित्तरागाभावाच्छमादिकं भवति एवं सर्वतो वैराग्यान्मुमुक्षा प्रवृत्तिपर्यन्ता जायते विषयानुरक्तस्य निर्विषयमोक्षेच्छानुपपत्तेः। ततो मोक्षस्य ज्ञानैकलभ्यत्वावगमात् ज्ञानार्थी सन् विचारे प्रवर्तते इत्यन्वयव्यतिरेकाभ्यां हेतुहेतुमद्भावेनैतेषां विशेषणानामधिकारनिमित्तत्वमेतद्विशेषणशून्येन कृतं श्रवणं तु शूद्रकृतयागवन्निष्फलम्। यत्तु भास्करोक्तं सूत्रकारस्य शमादीनां बुद्धिस्थत्वे मानाभावान्नाथशब्देनोपादानमिति। तन्न। श्रवणविधिसूत्रयतस्तत्प्रकरणस्थवाक्यैस्तेषां बुद्धिस्थत्वादिति। ननु तर्ह्यथशब्देनैव साधनानां सिद्धत्वादतःशब्दो व्यर्थ इत्यत आह। अथोक्तेति—

अथोक्तसाधनासिद्धिं वेदवादरता जगुः।
तदा शङ्कानिरासेन हेतुताऽतो विरोचते॥

अथशब्देनोक्तानां नित्यानित्यविवेकादीनामसिद्धिं कर्मजडाः अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतमित्यर्थवादरताः अथ यदल्पं तन्मर्त्यमित्यादिव्याप्तेः परमाणुभिर्व्यभिचारं वदन्तो जगुः कृतकस्यापि नित्यत्वं पृथ्वीपरमाणुलौहित्यवदिति। अतो नित्यफलप्रेप्सोः कर्मफलाद्वैराग्यमसिद्धम्। न च ब्रह्मणोऽपि नित्यत्वात्तच्छ्रवणेऽपि पाक्षिकी प्रवृत्तिः स्यादिति वाच्यम्। फलाभावात्। न च जीवस्य ब्रह्मैक्यं विरोधात्। नापि ब्रह्मसंयोगः नित्यसुखार्थिनस्तदनपेक्षत्वात्। न च जीवस्य स्वभिन्नब्रह्मनिष्ठसुखप्रत्यक्षं युक्तम्।

न हि जीवः स्वनिष्ठस्वरूपं वा मुक्तौ नित्यं सुखमनुभवतीति युज्यते योग्यानुपलब्ध्या नित्यसुखाभावनिश्चयात् । न च दुःखाभावार्थमात्मश्रवणे प्रवृत्तिरिति वाच्यम् । सकलसुखविरोध्यवस्थापेक्षया स्वल्पदुःखयोगे ऽपि देवादिभोगस्य श्रेयस्त्वात् । तस्मादधिकार्यभावान्मोक्षशास्त्रं नारम्भणीयं नित्यफलार्थिनां कर्मण्येव प्रवृत्तेरिति प्राप्ते तदाशङ्कानिरासेन विवेकादीनां ब्रह्मजिज्ञासाहेतुत्वमतःशब्देन समर्थ्यते इत्यर्थः । परमाणुतल्लौहित्ययोर्नित्यत्वे मानाभावाद्यदल्पं यच्च कृतकं तदनित्यमिति न्यायविरुद्धा चातुर्मास्यश्रुतिर्विध्यनपेक्षितं कर्म फलनित्यत्वं न प्रमापयति उक्तन्यायोपेता तद्यथेहेत्यादि श्रुतिः श्रवणविध्यपेक्षितं कर्म फलानित्यत्वं प्रमापयतीति ततो वैराग्यं सिध्यति । एतेन स य आत्मानमेव लोकमुपास्ते न हाऽस्य कर्म क्षीयते इति श्रुतिर्व्याख्याता । फलनित्यत्वस्याश्रुतेर्न्यायविरोधे कल्पनानुपपत्तेः । कर्मपदेनात्रोपासनानुवादेन ज्ञानद्वारा ऽक्षयफलकत्वेन स्तुतिकरणात् । अनेवंविन्महत्पुण्यं कर्म करोति । तद्धास्यान्ततः क्षीयते इत्युक्तेश्च । न कर्मफलस्य नित्यत्वं न व्यतिरेकमुखेनात्रात्मविदा कृतं कर्माक्षयफलकमुच्यते इति समुच्चय इत्यपि वाच्यम् । नान्यः पन्था इत्यादिना मुक्तावुपायान्तरनिषेधादत एव महत्पुण्यमिति प्रकृतत्वान्न हास्य कर्म क्षीयते इत्यग्निहोत्रादिपरामर्श एव नात्मोपासनाया इति निरस्तम् । निषेधश्रुतेर्बलवत्त्वात् । यत्तु फलाभावान्न ब्रह्मविचारे प्रवृत्तिरिति । तदसत् । ब्रह्म वेद ब्रह्मैव भवतीत्यादिश्रुत्या स्वप्रकाशानन्दब्रह्मभावस्य सत्त्वाद्धर्माणां कल्पितत्वेन बिम्बयोरैक्ये विरोधाभावादनाद्यविद्यावृतत्वेनानुपलब्धिसम्भवात् । न चात्मनः सुखत्वे ऽहं सुखीति न स्यादिति वाच्यम् । शुभकर्मोपार्जितवृत्तिकृतभेदेन तथानुभवत्वोपपत्तेः । न च मुक्तौ भेदाभावादहं सुखीति न स्यात्तथा च पुरुषार्थतेति वाच्यम् । सुखापरोक्षानुभवस्यैव पुरुषार्थत्वान्न हि सुखात्मनोर्भेदः कस्य चिदिष्टः ऋते कुतार्किकबलीवर्दादित्यलम् । तस्मादतःशब्दबलाद्विवेकादीनां ब्र[illegible]जिज्ञासाहेतुत्वं सिद्धमित्यधिकारिणा सा ऽवश्यं कर्तव्येति भावः ।

ननु भाष्यकारैर्ब्रह्मणो जिज्ञासेति षष्ठीसमासः किमिति दर्शितः धर्माय जिज्ञासेतिवत् सम्भवादित्यत्राह । इच्छाप्राधान्यमिति—

इच्छाप्राधान्यमाश्रित्य षष्ठी कर्मणि भाषिता ।
प्राक् चतुर्थीसमासस्तु विचारापेक्षया कृतः ॥

इच्छाया अपेक्षितकर्मफलयोरैक्यात् षष्ठ्या प्रधानत्वेन कर्मोक्तौ फलं सिध्यतीति षष्ठीसमासः कृतः। विचारप्राधान्ये तु कर्मफलत्वयोर्भेदात् क्लेशात्मकविचारस्यादौ फलस्यापेक्षत्वाद्धर्मायेति चतुर्थीसमासः पूर्वतन्त्रे कृतः। अर्थाद्वेदवाक्यानां कर्मत्वलाभादित्यर्थः।

ननु जातिजीवकमलासनवेदपरेषु ब्रह्मशब्दः प्रयुज्यते तत्र सूत्रे ब्रह्मशब्दार्थः क इति चेत्। जगज्जन्मादिकारणं परमिति ब्रूमः। मुमुक्षुभिः तस्यैव जिज्ञास्यत्वाद्वक्ष्यमाणलक्षणादिसम्भवाच्चेत्यभिप्रेत्याह। जात्यादिरिति—

जात्यादिर्ब्रह्मशब्दार्थो न भवेद्ब्रह्मगोचरा।
षष्ठी न स्यात्प्रधानस्य ग्रहाच्छेषोऽर्थसिद्धिकः॥

ब्रह्मण इति कर्मणि षष्ठीत्युक्तं वृत्त्यन्तरे तु शेषलक्षणा व्याख्याता तां निरस्यति शेषगोचरा षष्ठी न स्यादिति। सम्बन्धसामान्यं शेषः तस्मिन्षष्ठ्या ऽभिहिते विशेषाकाङ्क्षायां जिज्ञासायाः कर्मापेक्षितमिति कर्मत्वलाभ इति वृत्तिकारमतम्। ननु कर्मणि द्वितीया कर्तृकरणयोस्तृतीया सम्प्रदाने चतुर्थी अपादाने पञ्चमी अधिकरणे सप्तमीति विभक्तिपञ्चकाभिहितेभ्यः कर्मत्वादिकारकसंबन्धेभ्यो ऽन्यः स्वस्वामित्वादिः शेष इति शाब्दिकोक्तिविरुद्धं मतमिति चेत्। उच्यते। यथा देवदत्तस्य स्वमिति सम्बन्धसामान्यवाचिपदे षष्ठ्याः स्वत्वादिविशेषसम्बन्धवाचिना ऽन्विताभिधायित्वं न तथा कर्तृत्वकर्मत्वादिकारकसम्बन्धवाचिपदेनान्विताभिधायित्वं देवदत्तस्य गच्छति देवदत्तस्य गम्यते इति वा प्रयोगे तिङाद्यभिहितकर्तृत्वादिना षष्ठ्यर्थसामान्यस्यान्वयाप्रतीतेरिति शाब्दिकाभिप्रायः। अतो न विरोधः। कारकसंबन्धवाचिपदाभावे षष्ठ्या तदाक्षेपसम्भवादिति तन्मतमत्रायुक्तं कर्मत्वस्य षष्ठ्या साक्षादभिधानसम्भवेनापेक्षायोगात्। ननु ब्रह्मसम्बन्धिनां लक्षणप्रमाणाविरोधसाधनफलानां जिज्ञास्यत्वेन प्रतिज्ञासिद्धये शेषे षष्ठी युक्ता अतः कर्मत्वाक्षेप इति चेत् न। कर्मणि षष्ठ्या प्रधानस्य ब्रह्मणो जिज्ञास्यप्रतिज्ञायां सत्यां यैर्विना ब्रह्मज्ञानं न सम्भवति तेषामर्थसिद्धत्वात्। न हि शेषस्य मुख्योक्तिः प्रधानस्य त्वाक्षेप इति युक्तं सत्यां गतावित्यर्थः। तद्विजिज्ञासस्वेति सूत्रमूलश्रुतौ ब्रह्मणः कर्मत्वं व्यक्तं निर्दिष्टम्। ननु जिज्ञासापदं योगेन ज्ञानेच्छावाचकं विचारलक्षकमित्युक्तं तत्रेच्छायाः फलविषयत्वात् ज्ञानस्य फलत्वं व-

कर्तव्यं तन्न युक्तम् । इच्छाया ज्ञानसाध्यत्वेन कर्मफलत्वायोगादित्यत आह । ज्ञातुमिति— .

> ज्ञातुमिच्छेति चेच्छायाः फलमूलविवेचनम् ।
> प्रमातृव्यापृतिर्ज्ञानं तद्व्यक्तं स्फुरणं फलम् ॥

ज्ञातुमिच्छा जिज्ञासेत्यादिभाष्ये ऽवयवार्थकथनेनेच्छायाः फलमूलज्ञानयोर्विवेचनं कृतं तत्रावाप्तिपर्यन्तं ज्ञानं सन्वाच्यायाः इच्छायाः कर्मेति फलोक्तौ सत्यामर्थादापातज्ञानं मूलमित्युक्तं भवति तत्रावगतिराभिव्यक्तं चैतन्यं तदभिव्याञ्जिका अपरोक्षवृत्तिर्ज्ञानशब्दार्थः । शब्दात्परोक्षज्ञानमेवेति मते शाब्दमापातज्ञानं मूलं साक्षात्कारः फलम् । शब्दादपि अपरोक्षमिति मते पुरुषापरोक्षज्ञानं मूलम् । अप्रतिबद्धापरोक्षज्ञानं फलमिति विवेकः । ननु ज्ञानावगत्योर्न भेदः वादिनां विप्रतिपत्तेरित्यत आह प्रमात्रिति । घटः स्फुरतीति प्रमाणफलं प्रत्यक्षं तत्कर्तृव्यापारजन्यं कारकचक्रं फलत्वात् । कुठारादिसाध्यवृक्षभेदनवत् । न च हेत्वसिद्धिः । ज्ञानेनावरणनिवृत्तिरूपाभिव्यक्तिद्वारा चैतन्यस्य साध्यत्वेन कारकचक्रफलत्वात् । न च ज्ञानमेव फलमित्यप्रयोजकता कारकसमुदायफलस्य प्रातिस्विकव्यापाराभावे जन्मानुपपत्तेः । तत्र यः कर्तृव्यापारस्तज्ज्ञानं समुदायफलं तु स्फुरणं संविदवगतिरिति चोच्यते । असङ्गात्मनि व्यापारः कथमिति चेत् । अध्यासपरिनिष्पन्नान्तःकरणसंपिण्डितस्यात्मनः प्रमातृव्यापारो ज्ञानमिति ब्रूमः । यद्यपि ज्ञानं कारकचक्रसाध्यं तथापि न फलं न हि गमनमेव कारकफलं किन्तु गन्तव्यप्राप्तिः । एवं ज्ञापनाज्ज्ञानद्वारा ज्ञेयस्फूर्तिरिति संक्षेपः । अत्र वृद्धाः अर्थजवृत्तिप्रतिबिम्बितं चैतन्यं फलमित्याहुः । अन्ये तु साक्ष्यभेदेन वृत्त्यभिव्यक्तं विषयावच्छिन्नचैतन्यं फलमिति । एवं भगवान् भाष्यकारः सूत्रस्यावयवार्थमुक्त्वा तस्माद्ब्रह्म जिज्ञासितव्यमिति विचारकर्तव्यतां वाक्यार्थं बभाषे । तत्रेयमाशङ्का समुल्लसति । किमिदं सूत्रं विचारात्मकशास्त्रात् बहिर्भूत्वा शास्त्रारम्भकम् । सूत्रस्यारम्भः केनेति वक्तव्यम् । स्वेनैव चेदात्माश्रयः स्वसिद्धौ स्वस्यारम्भकत्वात् । अन्येन चेदनवस्थेति । तत्राह शास्त्रमध्यगतं सूत्रमिति—

> शास्त्रमध्यगतं सूत्रं सानुबन्धचतुष्टयम् ।
> विचारं कार्यमाहातः कर्तव्यः सो ऽधिकारिणा ॥

अध्ययनविधिवत् श्रवणविधिरेव स्वापेक्षितानुबन्धं निर्णायक-

न्यायविचारात्मकमाद्यसूत्रमारम्भयति । अत एवास्य श्रुतिसङ्गतिः । अनेन सूत्रेण श्रवणविधेः स्वार्थे वेदान्तविचारकर्तव्यतारूपे सिद्धे सति विचारात्मकशास्त्रं प्रवर्तते इति शास्त्राध्यायादिसङ्गतयः । इदानीं वर्णितं सूत्रार्थं वदन् फलितमाह । सानुबन्धेति । मुमुक्षुर्हि मोक्षोपायं जिज्ञासते । तत्र ज्ञानस्यैव श्रुतावुपायत्वावगमात् तस्य कर्तुमशक्यत्वात्तदिच्छायाश्च सिद्धत्वात् कर्तव्यत्वायोगात् सूक्ष्मवस्तुविज्ञाने तत्प्रमाणविचारं कर्तव्यं पश्चाद्वेदान्तविचारः कर्तव्यतया ऽवगच्छतीति तन्नियमार्थः श्रवणविधिः । ब्रह्मज्ञानाय वेदान्तवाक्यविचारः कर्तव्य इति तत्राज्ञातत्वेन ब्रह्मविषयः ज्ञातत्वेन प्रयोजनं तत्कामो ऽधिकारी एतेषां यथायोगं शास्त्रेण सम्बन्ध इति । तस्मादनुबन्धसद्भावादधिकारिणेदं शास्त्रं श्रोतव्यमिति सिद्धम् ॥

इति तृतीयं वर्णकं समाप्तम् ॥



नन्वेवं शास्त्रारम्भस्य सिद्धत्वादग्रिमसूत्रं व्याख्यायतां किं चतुर्थवर्णकेनेत्यत आह । ब्रह्मेति—

ब्रह्मप्रसिद्ध्यप्रसिद्ध्योर्विषयादेरसम्भवात् ।
अनारभ्यमिति प्राप्ते वर्णकान्तरमुच्यते ॥
आपाततः प्रसिद्धत्वात्सम्भवेद्विषयादिकम् ।
आदौ तत्त्रितयम् वाच्यं प्रवृत्त्यङ्गत्वकारणात् ॥

वेदान्तशास्त्रमारभ्यं न वेति सन्देहे विषयाद्यसम्भवान्नारभ्यमिति प्राप्तम् । तथा हि । ब्रह्म यदि प्रसिद्धं तर्हि नास्य शास्त्रस्य विषयः अज्ञातत्वाभावात् । नापि प्रयोजनम् अज्ञानाभावेन तन्निवृत्तेरसम्भवात् । अथाप्रसिद्धं तर्हि तदुद्देशेन विचारासम्भवात् विचारापेक्षैर्वेदान्तैस्तत्प्रतिपादनमशक्यमिति शास्त्रेण ब्रह्मणस्तज्जन्यज्ञानविषयत्वरूपसम्बन्धाभावः फलाभावश्च । ज्ञानासम्भवेनाज्ञानानिवृत्तिरिति एतन्निरासार्थं चतुर्थवर्णकमित्यर्थः । निरासप्रकारमाह । आपातत इति । यद्यपि प्रथमं वेदान्तैर्ब्रह्मज्ञानं भवति तथापि तदनवधारणात्मकमेवाग्रे संशयदर्शनात् । तथा च केवलप्रमाणादनिश्चिते ऽर्थे तर्कस्य प्रमाणसहायत्वाद्वेदान्तैः सन्दिग्धतया प्रसिद्धं ब्रह्मोद्दिश्य तर्करूपविचारे विधिसम्भवाद्विषयादिसम्भवाच्च स कर्तव्यः । ननु सर्वज्ञबादरायणप्रणीतत्वेन शास्त्रस्य विषयादिमत्त्वसिद्धेः समन्व-

शाद्यग्रिमविचारे विषयादेर्विशिष्य ज्ञानसम्भवात् भाष्यकारा-णामादौ विषयाद्यनुबन्धचिन्ता निष्फलेति चेन्न । अधिकारि-प्रवृत्त्यर्थत्वात् । ननु शास्त्रस्यादौ प्रवृत्त्यङ्गत्वेन फलमेव वाच्यम् । इष्टसाधनताज्ञानस्य प्रवर्तकत्वान्न विषयसम्बन्धौ वक्तव्यौ फल-ज्ञाने तयोरन्तर्भावात् । कारकसाध्यविषयस्यातिशयो हि फलं तज्ज्ञाने फलशालिविषयो ज्ञात एव भवति । स कारकसम्बन्ध एव यथा कुठारस्य वृक्ष इति चेन्न । विषयस्य द्विविधत्वात् । तत्र फल-शालिविषयः फलज्ञाने ऽन्तर्भवति नान्यसाधारणाख्यः । अतः सो ऽवश्यं वाच्यः प्रवृत्तिनियमाय यदि फलमात्रमुच्येत तदा तच्छास्त्रविषयस्य ज्ञाने ऽपि तस्य शास्त्रान्तराप्रतिपाद्यताया अज्ञानात्तत्रापि प्रवृत्तिः स्यात् । यथा चिकित्साशास्त्रविषयकत्वरकसुश्रुतात्रेयादिग्रन्थेष्वनियता प्रवृत्तिः अतः शास्त्रान्तरप्रवृत्तिनिरासाय तदप्रतिपाद्यतारूपविषय-ता वक्तव्या एतच्छास्त्रे प्रवृत्तिसिद्धये एतत्प्रतिपाद्यतारूपसम्बन्धो ऽपि वक्तव्य इति त्रितयमादौ वाच्यमित्यर्थः । ननु वेदान्तविषयो ब्रह्म न न्यायविचारात्मकशास्त्रस्य विषयो नापि तेन सम्बन्धः शास्त्रस्थ-न्यायैः प्रमाणादिसम्भावनाविषयकत्वात् । ननु यथा प्रयाजाद्यङ्गा-ङ्गिनोरेकस्वर्गफलकत्वं तथा विचारवेदान्तयोरेको ब्रह्मावगमः फलं शब्दशक्तितात्पर्यविचारस्य प्रमाणस्वरूपोपकार्यङ्गत्वात्प्रमेयविचा-रस्य फलोपकार्यङ्गत्वादेवमवगमहेतोर्विचारस्यावगम्यब्रह्मविषय इ-त्येकदेशिनः । न च शास्त्रस्य भावनैव विषयः अव्यवधानात् । सम्भा-वनाबुद्धिव्यवहितं ब्रह्म न विषय इति वाच्यम् । व्यवहितस्याप्युद्दे-श्यतया विषयत्वदर्शनात् । यथा देवदत्तकर्तृकस्योद्यमननिपतन-व्यापारस्याव्यवधानेन कुठारकर्मस्य कुठारव्यापारव्यवहितो ऽपि वृक्ष उद्देश्यद्वैधीभावफलशालितया कर्म भवति तद्वत् । ननु कर्तृकरण-कर्मणां को भेद इति चेदुच्यते । सर्वाणि कारकाणि स्वस्वव्यापारे कर्तॄणि अवान्तरभेदेन कर्त्रादिव्यवहारः । तत्र स्वतन्त्रः कर्ता । फलं प्रति सन्निपत्योपकारकं करणम् । परसमवेतक्रियाफलशालि कर्मेति । नैतद्युक्तं विचारस्य वेदान्ताङ्गत्वे मानाभावात् । न हि श्रुत्यादिकम-स्ति न वा ऽन्वयव्यतिरेकौ विना विचारं शाब्दबोधदर्शनात् । न च संशयविपर्ययोत्तरशाब्दबोधे विचारो हेतुरिति वाच्यम् । निर्दो-षशब्दस्य संशयाद्यहेतुतया निर्णयस्य शब्दैकसाध्यत्वात् । शब्दशक्ति-तात्पर्यादिविचारस्तु शक्त्याद्यज्ञानभ्रमादिपुरुषापराधनिबन्धनसंश-

यादिनिरासहेतुः। निरस्ते प्रतिबन्धे शब्दादेव ज्ञानं जायते जातं वा निश्चलमवतिष्ठते। तस्माद्विचारस्यावगमहेतुत्वाभावान्न वेदान्तगम्यब्र-विषयकत्वमिति शङ्कते। नन्वि वेदान्तविषय इति—

ननु वेदान्तविषयो विचारविषयः कथम्।
अङ्गाङ्गिनोः फलैक्याच्चेद्विचारो नाङ्गमिष्यते॥

सत्यं शक्तितात्पर्यावधारणेन विचारस्य प्रतिबन्धनिरासे उपक्षयः परन्तु निरस्ते प्रतिबन्धे शाब्दज्ञानं निर्णयात्मकं भवतीति उपचाराद्विचारस्य ब्रह्मनिर्णयहेतुतया वेदान्तैः समानविषयत्वमिति सिद्धान्तयति अत्र ब्रूम इति—

अत्र ब्रूमो विचारो हि प्रतिबन्धानिरासतः।
वेदार्थज्ञानहेतुत्वाद्वेदैकविषयो भवेत्॥

तात्पर्यं शाब्दबोधे हेतुरिति तार्किकमतं दूषयति तात्पर्यमिति—

तात्पर्यं तन्मतिर्वापि शाब्दबोधे न कारणम्।
प्रतिबन्धनिरासार्थं तात्पर्यज्ञानमिष्यते॥

किमज्ञातं तात्पर्यं वा वाक्यार्थसंसर्गज्ञानहेतुः तात्पर्यज्ञानं वा। नाद्यः। तात्पर्यविचारवैयर्थ्यप्रसङ्गात्। न द्वितीयः। वाक्यार्थज्ञानात्प्राक् तद्विषयकस्य तात्पर्यस्य ज्ञातुमशक्यत्वात्। न च पदार्थेषु ज्ञातेषु योग्यतया संसर्गमुत्प्रेक्ष्य तत्र तात्पर्यं ज्ञातुं शक्यमिति वाच्यम्। उत्प्रेक्षाया अनुमितित्वे वाक्यवैयर्थ्यात्। न च वैशेषिकमतेनेष्टापत्तिरिति वाच्यम्। प्रकृततात्पर्यज्ञानवैयर्थ्यापातात्। वाक्येनेममर्थं जानामीत्यनुभवविरोधात्। पक्षादिज्ञानविलम्बाभावात्। अनुमिनोमीत्यनुभवाभावाच्च। न च सा तर्कः। अनारोपत्वात्। न चानारोपोपस्थापितलिङ्गयोः बोहवत्तर्कत्वमिति वाच्यम्। तर्किता वाह्लिङ्गपदसङ्गतिरित्यनङ्गीकारात्। ननु तर्कात्मकविचारोपस्थिते ब्रह्मणि सत्यादिपदलक्षणेति सिद्धान्तः न च तदुपस्थितेस्तर्कत्वे ऽप्यारोपत्वमस्ति अबाधादिति चेत् उच्यते। भागत्यागलक्षणायां पदजन्यविशिष्टवाच्योपस्थितिरेव लक्ष्यभागविषयतया हेतुः। अत्र विशेषणानां कल्पितत्वात् विशेष्यमात्रस्यैवाबाधितानधिगतत्वे सति फलवत्त्वादित्याद्यनुमानरूपविचारस्य विशेष्यमात्रे तात्पर्यग्रहद्वारा लक्षणायामुपयोग इति विचारोपस्थिते लक्षणेत्युच्यते। किं बहूक्त्या ऽत्रानारोपे तर्कत्वव्यवहारः स तर्को ऽनुमानमेवेति नाभ्रमस्यातर्कत्वम् अनिष्टारोपस्तर्क इति लक्षणादित्युपन्यासग्रन्थे ऽप्यधिकं प्रसङ्गागतमिति क्षन्तव्यम्। नापि सा स्मृतिः। अज्ञातार्थ-

त्वात् । अतः परिशेषात्सा शाब्दप्रमैवेति तात्पर्यज्ञानं जातायां तस्यां न हेतुः । अपि च तात्पर्यज्ञानं भ्रमादिमूलवाक्यार्थभ्रमादिप्रतिबन्धनिरासार्थमित्यर्थः । एवं वेदान्तानां विषयभूतमापाततः प्रसिद्धं ब्रह्म वेदान्तापेक्षितन्यायविचारस्यापि परम्परया विषय इत्युक्तम् । तत्र कथं वेदान्तेष्वापाततः प्रसिद्धिः न तावत् ब्रह्मशब्दात् । ब्रह्माप्रसिद्ध्या सङ्गतिग्रहाभावात् नापि वाक्यात्पदार्थाज्ञानादित्यत आह । इत्यादाविति—

इत्यादौ ब्रह्मशब्दस्य सार्थकत्वे विनिश्चिते ।
विशिष्टार्थप्रसिद्ध्यर्थं लक्षितं निगमादिकम् ॥

ब्रह्मशब्दस्य श्रुतिसूत्रयोः प्रयोगान्यथानुपपत्त्या कश्चिदर्थोऽस्तीति निश्चीयते प्रमाणवाक्ये व्यर्थशब्दप्रयोगायोगात् तत्रार्थविशेषाकाङ्क्षायां जात्यादेर्निरस्तत्वान्निगमनिरुक्तव्याकरणानां शेषसिद्धिहेतुत्वात् प्रकृते च बृंहतेर्धातोर्वृद्धौ स्मरणात् निरवधिकमहत्त्वसंपन्नं वस्तु ब्रह्मशब्दार्थ इति निश्चीयते । निगमो नाम शब्दस्य लक्षणां विना प्रकृत्यर्थानुगमेनार्थान्तरे वृत्तिः यथा देहशब्दस्य प्रसिद्धार्थादर्थान्तरे उपचयवति प्रयोगः । निरुक्तं नाम शब्दस्य सर्वावयवार्थानुगमेन रूढ्यर्थादर्थान्तरे वृत्तिः यथा सोमशब्दस्य चन्द्रादन्यस्मिन् उमासहितेश्वरे वृत्तिः । अस्मिन्नर्थे ऽयं प्रत्ययो भवतीति विधानं व्याकरणं यथा वदनशीलो वादीति ताच्छील्ये इनिप्रत्ययविधानम् । ननु बृंहणाद् ब्रह्मेति प्रवृद्धवस्तु यत्किञ्चित्प्रतीयते न पदार्थविशेषः तत्र वाक्यार्थनियमः कथमिति चेदुच्यते वाक्यार्थनिर्णयार्थं प्रसिद्धार्थकैः सत्यादिपदान्तरैः सह ब्रह्मशब्दस्य प्रयोगानुपपत्तिरेव निगमादिबलेनार्थमाददाना सन्निहितानन्तादिपदार्थान्वययोग्यनिरवधिकमहत्त्वसंपन्नं वस्तु ज्ञापयति सङ्कोचकाभावाच्च ततो वाक्यार्थनियम इति । अत्रायं निष्कर्षः । श्रौतादिप्रयोगानुपपत्त्या ऽर्थमात्रस्य निश्चयः निगमादिना वृद्धिरूपार्थस्य पदान्तरासत्त्या निरवधिकवृद्धेरिति । ननु ब्रह्मणो महत्त्वमात्रेण कथं मुमुक्षुजिज्ञास्यत्वमित्यत आह । नित्यशुद्धमिति—

नित्यशुद्धं बुद्धमुक्तं सर्वज्ञं सर्वशक्तियुक् ।
ब्रह्मशब्दबलादेव वस्त्वेतादृक् प्रतीयते ॥

निरवधिकमहत्त्वं देशकालवस्तुकृतालपत्वस्याभावरूपं नित्यशब्दार्थः । तथाप्यविद्यादिदोषवत्त्वे अल्पत्वं स्यादिति न निरवधिकं मह-

स्वं लोके गुणहीनस्य दोषवतश्चाल्पत्वप्रसिद्धेः अतोऽस्य ब्रह्मशब्द-बलादेव सर्वदोषराहित्यं सर्वगुणवत्त्वं च सिध्यतीति मत्वाह। शुद्ध-मित्यादिना। शुद्धिर्दोषाभावः तस्यापेक्षिकत्वं वारयति। मुक्तमिति। बन्धकालेऽपीति शेषः। जडत्वेनाल्पत्वं प्रत्याह। बुद्धेति पाठस्तु भाष्यानुसारी चेतनत्वेपि ज्ञेयस्य कार्यस्य वाऽवशेषेऽल्पता स्यात्तां निरस्यति। सर्वज्ञं सर्वशक्तियुगिति। निरस्तसमस्तदोषत्वात्परमपुरुषार्थत्वाच्च ब्रह्मणो जिज्ञास्यत्वमिति भावः। जात्यादेर्ब्रह्मशब्दार्थत्वेऽपि न नित्यशुद्धादिरूपत्वं धर्मिग्राहकमानाविरोधात्। ब्रह्मणस्त्वादौ शब्दादेव प्रसिद्धिरिति बाधकाभावान्निरङ्कुशं सर्वरूपत्वेन महत्त्वमिति मन्तव्यम्। ननु स्वरूपतटस्थलक्षणश्रुतिवाक्याभ्यां ब्रह्मनिर्णयात् ब्रह्मपदव्युत्पत्त्यैवादौ प्रसिद्धिरिति कथमिति चेत् उच्यते। पदार्थज्ञानात् प्राक् वाक्येन निर्णयायोगादत्र सूत्रे श्रुतौ वा ब्रह्मपदव्युत्पत्त्या प्रसिद्धिः। यदीत्थं नोच्यते जन्मादिसूत्रात्प्राक् लक्षणवाक्यस्यानिर्णायकत्वाच्चात एव पदात्प्रसिद्धेरमानत्वात् जिज्ञासोपपत्तिरिति सुस्थम्। इदानीं अज्ञानाविरोधेन ब्रह्मणः प्रसिद्धौ हेत्वन्तरमाहापि चेति—

अपि चात्मत्वतो ब्रह्म प्रसिद्धं किन्तु वादिनाम्।
विवादात्तत्र जिज्ञासाविवादस्त्वधुनोच्यते॥

अस्ति तावत्सर्वप्राणिनामहमित्यात्मनि प्रसिद्धिः सा वस्तुतो ब्रह्मगोचरा अयमात्मा ब्रह्मेत्यादिश्रुत्या ब्रह्मणः आत्मत्वावगमात्। न चात्यन्ताभेदे सामानाधिकरण्यायोगात् भेदाभेदः श्रुत्यर्थ इति वाच्यम्। कल्पितभेदेनात्र सामानाधिकरण्यसम्भवात्। तत्र प्रसिद्धजीवानुवादेनाप्रसिद्धब्रह्माभेदबोधनादहमिति वस्तुतो भवति ब्रह्मप्रसिद्धिः। यथेदं रजतमिति वस्तुतः शुक्तिप्रसिद्धिरित्यर्थः। ननु ब्रह्मणो निःसामान्यविशेषात्प्रसिद्ध्यङ्गीकारे सर्वात्मनाऽपि प्रसिद्धेः शास्त्रविषयत्वं न स्यादिति शङ्कते। किन्त्विति। यदि सर्वात्मना प्रसिद्धिः स्यात्तर्हि वादिविवादो न स्यात्। न हि शरदिन्दुकुन्दधवलिम्नि निबिडनीरदनीलिम्नि वा विवदन्ति वादिनः। अतो विशेषविप्रतिपत्तेः सामान्यरूपेण प्रसिद्धं ब्रह्म किं तत्सामान्यं देहेन्द्रियाद्यनुगतं तदधिष्ठानचैतन्यरूपं पराग्घटादिव्यावृत्तं प्रत्यक्त्वमिति ब्रूमः। यद्यपि चैतन्यं सर्वानुगतं तथापि जीवसाक्षिचैतन्यं देहादिषु मानमनपेक्ष्यानुगतत्वात् घटादिषु तदभावात् भवति प्र-

स्यक्त्वं सामान्यं तत्सम्बन्धाद्देहादिविशिष्टात्मत्वभ्रमो वादिनां तत्र प्रत्यक्त्वेन प्रसिद्धे वस्तुनि देहादिविशेषनिरासेन पूर्णानन्दब्रह्मरूपो विशेषः शास्त्रेणैव प्रतिपाद्यते इति भवति शास्त्रस्य विशेषो विषयः भ्रमाविरोधेन भासमानोऽधिष्ठानांशः सामान्यं भ्रमविरोध्यज्ञातांशो विशेषः अंशभेदस्तु ब्रह्मणि चैतन्यपूर्णादिपदवाच्यभेदेन कल्पित इति सर्वमनवद्यम् । अधुना सङ्क्षेपेण विप्रतिपत्तयः उपन्यस्यन्ते । यथा गोशब्दाव्यभिचारात् गोव्यक्त्याकृतिजातिषु शब्दार्थत्वविप्रतिपत्तिः । तथा देहादिष्वहंप्रत्ययाव्यभिचारादात्मत्वविप्रतिपत्तिः सम्भवति । तत्र देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृता लौकायतिकाश्च विप्रतिपन्नाः मनुष्योऽहमित्यनुभवात् । भूतचतुष्टयातिरिक्ते वस्तुनि मानाभावादिति इन्द्रियाणि प्रत्येकमात्मेत्यपरे । काणोऽहमित्याद्यनुभवात् इन्द्रियाणां रूपादिज्ञानाश्रयत्वस्यैवान्वयव्यतिरेकाभ्यां जघन्यकरणत्वापेक्षया कल्पनौचित्याद्बहूनामपि वरगोष्ठीन्यायेन स्वसाधारणविषयभोगक्रमोपपत्तेरेकदेहाश्रयत्वेन द्रष्टाऽहं श्रोतेत्यादिप्रत्यभिज्ञोपपत्तेश्चेति मन एवात्मेत्यन्ये । यत इन्द्रियान्तराणामभावेऽपि स्वप्ने च भोगदर्शनात् । बौद्धास्तु विज्ञानमात्रं क्षणिकमात्मेत्याहुः । तथा हि देहेन्द्रियाणां ज्ञेयत्वेनानात्मत्वात् मनसोऽपि समनन्तरप्रत्ययमात्रत्वात् अन्यस्य विज्ञानाश्रयस्याननुभवाद्विज्ञानमेव स्वरसभङ्गुरं हेतुफलभावेनाविरतोदयत्वात् सोऽहमिति प्रत्यभिज्ञास्पदं कर्मफलास्पदं चेति वदन्ति । माध्यमिकास्तु विज्ञानातिरिक्तात्मनो निरस्तत्वात् विज्ञानस्यापि सुषुप्तावदर्शनात् तदानीं निराकारज्ञानसन्ततौ मानाभावात् यज्ज्ञानं तत्साकारमिति नियमादुत्थितस्याहमिति निर्विषयासद्विकल्पमात्रमिति शून्यमेवात्मेति सङ्गिरन्ते । कणभक्षाक्षपादपक्षपातिनस्तु अस्ति देहादिव्यतिरिक्तः स्थायी कर्ता भोक्तेत्याहुः । तथा हि अहमुल्लेखविषयो ज्ञानसुखाद्याश्रय आत्मा सर्वैरनुभवबलादेष्टव्यः न च सुषुप्तौ तदभावः यो ऽहं पूर्वेद्युर्विश्वेशमद्राक्षं सो ऽहमद्य बिन्दुमाधवं द्रक्ष्यामीति अबाधितप्रत्यभिज्ञया सुषुप्तौ सत्तानिश्चयात् । अतो न शून्यस्यात्मत्वं नापि विज्ञानस्यात्मत्वं मम विज्ञानमित्यात्मभिन्नत्वानुभवादहं विज्ञानमित्यप्रतीतेः । सोऽहमिति प्रत्यभिज्ञायाः क्षणिकेऽनुपपत्तेः । मुख्यैक्ये प्रत्यभिज्ञायमाने निरन्तरोत्पत्तिसादृश्ययोः कल्पनानौचित्याच्च । किञ्च कदलीफलदर्शनं तद्रसानुभवः ततः सुखं पुनः

फलान्तरदर्शनं व्याप्तिस्मरणं फलत्वेन सुखहेतुत्वानुमितिः ततो रागः प्रयत्न इत्यष्टक्षणेष्वेक आत्मा स्थिरो ऽङ्गीकार्यः । अन्यानुभूते अन्यस्य सुखाद्ययोगात् । चैत्रमैत्रादिसन्तानभेदेष्वन्यदृष्टे अन्यस्य स्मरणाद्यदर्शनात् । तस्यात्मनो ऽग्रे नाशकांशाभावान्नित्यत्वमिति । मनो ऽपि नात्मा तत्राप्यहं मन इत्युल्लेखाभावात् । युगपज्ज्ञानानुत्पत्त्या तस्य करणत्वेनैव क्लृप्तत्वाच्चेति । एवमिन्द्रियाणि नात्मा ममैतानीति प्रतीतेः । द्रष्टाहं श्रोतेत्यैक्यप्रत्यभिज्ञानात् । एकदेहस्थत्वेन प्रत्यभिज्ञाने चैकप्रासादस्थानामैक्यप्रत्यभिज्ञाप्रसङ्गाल्लाघवेनैकस्यैव रूपादिज्ञानाश्रयत्वौचित्यात्काणो ऽहमित्यादेर्भ्रमत्वादिति । तथा देहो ऽपि नात्मा स्वप्नादौ देहभेदे ऽप्यहमित्यनुवृत्तेः । जातमात्रस्य स्तन्यपानप्रवृत्तिदर्शनात् । स्तन्यपानं तृप्तिसाधनमिति व्याप्तिस्मृतिमूलानुभवार्थं जन्मान्तरसम्बन्धकल्पना । मम देह इति अबाधितभेदानुभवात् मनुष्यो ऽहमिति भ्रमः । तस्मादहमुल्लेखप्रत्यभिज्ञादिना देहेन्द्रियमनोविज्ञानशून्यव्यतिरिक्त आत्मा नित्यः सिद्धः । तस्य निर्विकारत्वे भोक्तृत्वायोगात् कर्तृत्वमेष्टव्यम् । एतेन श्लोके कर्त्रन्तभागः स्फुटीकृतः । एकशब्दः केवलवाची भोक्तैव केवलं न कर्तेति सांख्यपक्षः स चाग्रे वक्ष्यते । देहादेरनात्मत्वमिदानीं प्रकारान्तरेणाह व्यस्तानामिति—

देहेन्द्रियमनोबुद्धिशून्यकर्त्रेकभोक्तृषु ।
सर्वज्ञब्रह्मणोरात्मबुद्धिरस्तीह वादिना ॥
व्यस्तानां वा समस्तानां भूतानां भोक्तृता कुतः ।
इन्द्रियादेरपि तथा शून्या तेनात्मता ततः ॥

पृथिव्यादिभूतानां सङ्घातस्तावच्छरीरं देहात्मवादिनां न च भूमौ पार्थिवमेव शरीरं वरुणलोके त्वाप्यं स्वर्गे तैजसं ब्रह्मलोके वायव्यमेव न पाञ्चभौतिकं क्व चिच्छरीरमस्ति प्रत्यक्षाप्रत्यक्षभूतवृत्तित्वे देहस्य घटाकाशसंयोगवदप्रत्यक्षत्वापातादिति तार्किकोक्तिर्युक्ता । अस्मदादिशरीरं जलाद्युपादानकं जलाद्युपचयापचयानुविधाय्युपचयापचयवत्त्वाद्यदित्थं तत्तथा यथा नैकतन्त्वारब्धः पट इत्यनुमानात् । अन्नमशितमित्यादि छान्दोग्यश्रुतौ मांसलोहितास्थिमयदेहस्य भूजलतेजःकार्यत्वोक्तेश्च । पञ्चभूतात्मके तात शरीरे पञ्चतां गते इत्यादिस्मृतेश्च । महत्त्वोद्भूतरूपाभ्यां देहस्यातीन्द्रियद्व्यणुकवृत्तित्र्यणुकवत् प्रत्यक्षत्वोपपत्तेश्च । तस्मात्पञ्चभूतारब्धावयवी देहः । तस्यात्मत्वं पूर्वं

निरस्तम् । अधुना भूतचतुष्टयसङ्घात एव देह आत्मेति मतं निरस्यते । तथाहि सङ्घातः किं भूताभिन्नः भूतातिरिक्तो वा आद्ये ऽपि भूतानां व्यस्तानां भोक्तृत्वं समस्तानां वा तत्र न तावद्व्यस्तानां युगपत् भोक्तृत्वं सर्वेषां भूतानां स्वतन्त्रात्मत्वे सङ्घाताभावप्रसङ्गात् । अथ भिन्नात्मनामपि वरगोष्ठीवदङ्गाङ्गितया क्रमेण भोक्तृत्वमिति चेन्न । दृष्टान्तवैषम्यात् । वराणां कन्यात्मकविषयस्यासाधारणत्वादेकस्य स्वविषयभोगकाले अन्यस्य गुणाभावो युक्तः भूतानाङ्गन्धादिविषये साधारणाङ्गाङ्गिभावायोगाद्भोगक्रमायोगः । यदि भूम्यादिभूतात्मनाङ्गन्धादयो ऽप्यसाधारणास्तदा घ्राता ऽहं द्रष्टेति प्रत्यभिज्ञानुपपत्तिः । नापि समस्तानां भोक्तृत्वं सर्वेषामपि भूतानामसंहतानां भोक्तृत्वादर्शनात् । सङ्घाते च निमित्ताभावात् । आगामिभोगस्यासत्त्वेनानिमित्तत्वाच्छेषस्य शेष्याक्षेपकत्वात् । सर्वेषामपि भोक्तॄणां भोगे समप्रधानतया सङ्घातायोगात् । न च भूतानां भोक्तृतया भोगं प्रति प्राधान्ये ऽपि कर्तृतया शेषत्वात् संघातो ऽस्त्विति वाच्यम् । संघातात्प्राक् कर्तृत्वासिद्धेः संहन्त्रभावाच्च । कार्ये हि कारणानां संहन्तरि संघातो भवति यथा तिलानां ज्वालायां न तु भोगः । नाप्येकस्यैव भूतस्य भोक्तृत्वं विनिगमकाभावात् । एतेन भूतातिरिक्तः संघातो भोक्तेति निरस्तम् । संघातस्यावस्तुत्वाच्च । वस्तुत्वे चत्वारि भूतान्येव तत्त्वानीति मतहानिरिति । एवं व्याससमासविकल्पदूषणानीन्द्रियात्मवादे ऽपि समानि । एतेन भूतेन्द्रियसंघात आत्मेति प्रत्युक्तम् । इन्द्रियादेरपि तथेति न भोक्तृत्वमित्यर्थः । तस्माद्देहादिशून्यान्तेषु नात्मत्वमिति उपसंहारः । प्रसङ्गादिन्द्रियस्वरूपं निरूपयति । न गोलकानीति— न गोलकानीन्द्रियाणि नापि तच्छक्तयो ऽपि तु ।

शक्तिमद्द्रव्यरूपाणि भौतिकान्यविभूनि च ॥

गोलकानीन्द्रियाणीति सुगतमतमसङ्गतं गोलकासत्त्वे ऽपि सर्वस्य शब्दोपलम्भात् । पश्यन्ति पादपा इत्यादि शास्त्राच्च । गोलकशक्तय इति मीमांसकमतमप्ययुक्तम् । लाघवेन शक्तीनामात्मताप्रसङ्गाच्च । गोलकानामत्रैव भस्मीभावे तच्छक्तीनां विनाशात् । तमुत्क्रामन्तं प्राणो ऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्तीतीन्द्रियाणां उत्क्रान्तिश्रुतिविरोधाच्च । तस्माच्छक्तिमद्द्रव्याणि तेषूक्तश्रुतिर्मानं तदपरिचयाल्लोकानां गोलकेष्विन्द्रियत्वबुद्धिर्मण्डले आदित्यत्वबुद्धिवत्° । तानि चाहङ्कारप्रकृतिकानीति सांख्याः तदयुक्तं मानाभावात् ।

"त्रिविधो ऽयमहङ्कारो महत्तत्त्वादजायत। इन्द्रियाणां ततः सृष्टिर्गुणश्चारा महामुने" इत्यादिपुराणवचनमहङ्काराधीनत्वपरम्। अहमित्यभिमानपूर्वकत्वादिन्द्रियप्रवृत्तेः नतु तत्प्रकृतिकत्वपरम् अन्नमयं हि सोम्य मन इति। य एष एतस्मिन्मण्डले करणात्मकः पुरुषस्तस्य ह्येष रस इति परोक्षापञ्चीकृतभूतप्रकृतिकत्वश्रुतिविरोधात्। अतः श्रुत्या भौतिकानीन्द्रियाणि। तानि विभून्यपि सांख्याः तदयुक्तं सर्वत्र रूपाद्युपलब्धिप्रसङ्गात्। नाडीद्वारोत्क्रान्त्यादिश्रुतिविरोधाच्चातः परिच्छिन्नानि सर्वे। न ता इति श्रुतिस्तूपासनेन्द्रियाणां सौरालोकादिवत् व्यापित्वाभिप्राया। अत एवोपासनासिद्धा ब्रह्मादयः सर्वमपरोक्षतया ऽनुभवन्ति। तान्यप्राप्यकारीणीति सुगताः। तदपि फल्गु। दूरस्थासम्बद्धरूपाद्युपलब्धिप्रसङ्गात्। चक्षुषः सौरालोकवत् शीघ्रगामित्वाद्ध्रुवादिसम्बन्धः श्रोत्रस्योचितदेशव्यापित्वाच्छब्दसम्बन्धो न वीचीतरङ्गन्यायेन शब्दागमनात्। तस्मात्प्राप्यकारीणीति चकारार्थः। मनो नित्यं निरवयवमणु चेति तार्किकास्तदसाधु। अन्नमयं मनः एतस्माज्जायते प्राणो मन इति श्रुत्या कार्यद्रव्यत्वेन सावयवत्वात्। अतो देहव्याप्यनित्यं सावयवत्वाद्दीपवत्सङ्कोचविकासवत्त्वेन गजपुत्तिकादिदेहप्रवेशयोग्यञ्च। यत्तु ज्ञानसन्ताने ऽनुत्तरज्ञानकारणं पूर्वज्ञानसमनन्तरप्रत्ययाख्यं मन इति शाक्यमतं तन्मानहीनमित्युपेक्ष्यम्। आत्मा जडः कर्ता प्रतिदेहं भिन्न इति तार्किकास्तन्न। अत्रायं पुरुषः स्वयंज्योतिरसङ्गो ह्ययं पुरुष उपाधिना क्रियते भेदरूप इत्याद्यनेकश्रुतिभिः सयुक्तिकाभिर्विरोधात्। युक्तयश्चाचार्यैर्दर्शिताः सुषुप्त्यनुसन्धानादय इति। मनआत्मनोः स्वरूपमाह। मन इति—

मनो ऽनित्यं सावयवं सङ्कोचि च विकासि च।
आत्मा विभुः स्वप्रकाशः सर्वप्राणिषु चैकलः॥

अनित्यमिति छेदः। आत्मनो विभुत्वमपि आकाशवत्सर्वगत इत्याद्यागमादेव। न चादृष्टं स्वाश्रयसंयुक्ताश्रयान्तरे ऽग्न्यादावूर्ध्वज्वलनादिक्रियां करोति अव्यासज्यवृत्तित्वे सति क्रियाहेतुगुणत्वात् गुरुत्ववत्। स्वाश्रयमात्रे क्रियाजनके नोदनाख्यसंयोगे व्यभिचारनिरासाय सत्यन्तम्। गुरुत्वं स्वाश्रयपतत्फलसंयुक्तपर्णादौ क्रियां जनयतीति दृष्टान्ते साध्यसिद्धिरित्यनुमानसिद्धविभुत्वानुवादत्वमात्रं श्रुतेरिति वाच्यम्। स्वाश्रयासंयुक्ते ऽप्याकाशे शब्दजन-

कत्ववदृष्टस्य क्रियाजनकत्वसम्भवेनाप्रयोजकत्वान्निरवयवात्मनः संयोगायोगाददृष्टवदात्मप्रदेशस्य देहादन्यत्रासत्त्वेनासंयोगात् । केवलात्मसंयोगस्य कार्याहेतुत्वाच्च । तस्मादतीन्द्रियार्थेष्वागम एव शरणम् अनुमानं तदनुग्राहकं न स्वतन्त्रमिति द्रष्टव्यम् । इन्द्रियादिस्वरूपकथनं प्रासङ्गिकं समाप्य आत्मनि विप्रतिपत्त्यन्तरमाह । भोक्तारमिति—

भोक्तारं केवलं सांख्या आत्मानं प्रतिपेदिरे ।
ततो ऽन्यमीश्वरं केचित्स आत्मा वेदवादिनाम् ॥

निरवयवस्यात्मनः स्वतः परतो वा ऽऽगन्तुककर्तृत्वायोगात् कर्तृत्वस्य स्वाभाविकत्वे चैतन्यवत्सदा भानप्रसङ्गादनिर्मोक्षापत्तेश्चाकर्ता आत्मा । नाऽपि बुद्धिस्थकर्तृत्वस्यात्मन्यध्यासः अख्यातिवादित्वात् । अतो दृश्यसाक्षित्वमात्रमात्मनो भोक्तृत्वमित्यर्थः । पक्षान्तरमाह । ततो ऽन्यमिति । केचिद्वैशेषिकादयो योगिनश्च जीवाद्भिन्नमीश्वरमिच्छन्ति । तनुभुवनादिकार्यं स्वरूपोपादानादि विज्ञानवत्कर्तृकं विचित्रकार्यवत्त्वात् प्रासादादिवदित्यनुमानेन लाघवादेकः सर्वज्ञः सिध्यतीति तार्किकाः । योगिनस्तु ज्ञानैश्वर्यतारतम्यं क्वचिद्विश्रान्तं सातिशयत्वात् परिमाणतारतम्यवदिति निरतिशयज्ञानैश्वर्यशालीश्वरसिद्धिः । तथा च योगसूत्रम् निरतिशयं सर्वज्ञबीजमिति । यत्सातिशयं तन्निरतिशयेनाविनाभूतमिति व्याप्त्या निरतिशयं ज्ञानं सिध्यत् सर्वज्ञसिद्धिहेतुरित्यर्थ इति मन्यन्ते । नन्वात्मविप्रतिपत्तिषु अनात्मेश्वरोपन्यासो न युक्त इति चेत् उच्यते । अत्र हि प्रत्यगभिन्ने ब्रह्मण्यखण्डैकरसे आत्मत्वसामान्याकारेण प्रसिद्धिः जिज्ञासा तु विप्रतिपत्तिद्वारा कथ्यते । तत्रात्मा देहादभिन्नस्तद्भिन्नो वेति विप्रतिपत्तिकोटित्वेन देहाद्युपन्यासवदात्मा किमीश्वरादभिन्नो भिन्नो वेति विप्रतिपत्तिकोटित्वेन भिन्नेश्वरोपन्यासो युज्यते । एवं विप्रतिपत्त्या विरुद्धकोटिद्वयसाधारणात्मत्वाकारेण प्रत्यगात्मनि प्रसिद्धे तदुद्देशेन विचारविधौ सत्यनभिमतकोटिनिरासेन स्वाभिमताद्वयानन्दब्रह्मत्वनिर्णयो मुक्तिफलो वेदान्तैर्जायते । अत्र कश्चिदाह । आत्मनि विप्रतिपत्त्युपन्यास एवायुक्तः तस्याजिज्ञास्यत्वात् । किन्तु जगत्कारणे किं प्रधानम् परमाणवो वा ऽन्यद्वेति विप्रतिपत्तिर्वक्तव्या । जन्मादिसूत्रालोचनायां जगत्कारणस्यैव जिज्ञास्यत्वावगमादिति । तन्न । फलाभावेन तटस्थजगत्कारणस्याजिज्ञास्यत्वात् । न चोपा-

सनार्थं तज्जिज्ञासेति वाच्यम्। तस्यासत्त्वे ऽप्यारोपेणोपासनासम्भवादुपासनया ऽपि मुमुक्ष्वभीष्टासिद्धेश्च। तस्मान्मुक्त्यर्थं प्रत्यग्ब्रह्मणो जिज्ञास्यत्वात्। प्रत्यगात्मनि विप्रतिपत्त्युपन्यासो युक्ततम इति सङ्क्षेपः। सिद्धान्तकोटिमाह। स इति। ईश्वरः प्रत्यगात्मा ऽस्माकमित्यर्थः। ब्रह्म सच्चिदानन्दरूपम् अहमस्मि भामि प्रियतम इति प्रतीतेः प्रत्यगात्मा ऽपि तथा। तथाच जीवो ब्रह्मैव तदविलक्षणत्वात् ब्रह्मवत्। भेदस्त्वौपाधिक एवाहङ्काराद्युपाध्यनुविधायित्वात्। तत्त्वमस्यादिश्रुतेश्चाभेदः जीवाद्भिन्नस्य घटादिवत् ब्रह्मत्वायोगाच्च वस्तुतः परिच्छेदादिति भावः। ननु यदि ब्रह्मणो ब्रह्मत्वादेव जीवाभेदः तर्हि दुःखात्मकजगद्भेदो ऽपि तस्यास्ति कुतश्चिदपि भिन्नस्य जगतो ब्रह्मत्वायोगात्। उपादानत्वाच्च ब्रह्मणो हेयाभेद इत्यपरिमितानर्थरूपत्वादजिज्ञास्यत्वमापन्नमिति शङ्कते। नन्विति—

ननु ब्रह्मत्वतो ब्रह्म जीवाभिन्नं यथा तथा।
दुःखभिन्नमजिज्ञास्यं नैवं दुःखादिकल्पनात्॥

नेह नानास्तीति अधिष्ठाने निषिद्धस्य द्वैतस्य कल्पितत्वेन रज्जुसर्पवदधिष्ठानानतिरेकात् ब्रह्मत्वं कल्पितानर्थासंस्पर्शादधिष्ठानस्य जिज्ञास्यत्वं च युक्तमिति। परिहरति। नैवमिति। ननु देहात्मादिपक्षेषु जागरूकेषु ब्रह्मण एव मुमुक्षुभिर्जिज्ञास्यत्वं कथमित्यत आह। प्रत्यगिति—

प्रत्यग्ब्रह्मैक्यमेवात्र युक्तिवाक्यसमाश्रया।
युक्त्यङ्गा ब्रह्ममीमांसा कर्तव्या ऽतो मुमुक्षुणा॥

अत्र उक्तपक्षेषु अन्त्यपक्षे संक्षेपतो युक्तिवाक्ये दर्शिते। ननु स वा एष पुरुषो ऽन्नरसमयः इन्द्रियसंवादे चक्षुरुवाच मन उवाच यो ऽयं विज्ञानमय असदेवेदमग्र आसीत् कर्त्ता बोद्धा अनश्नन्नन्यः आत्मानमन्तरा यमयतीति वाक्यानि देहाद्यात्मत्वे युक्तयश्च सन्तीति चेत्। न। युक्तीनामाभासताया दर्शितत्वात्। आनन्दमयो ऽभ्यासादित्यादिना वाक्यानां ब्रह्मात्मनि समन्वयस्य सूत्रयता वक्ष्यमाणत्वात्। ननु ब्रह्मण एव जिज्ञास्यत्वे ऽपि तद्विचारस्य जिज्ञासापदलक्षितस्येष्यमाणज्ञानेनार्थाक्षिप्तस्य वा किमुपकरणं किं वा फलमित्याशङ्कां निराकुर्वन् सूत्रार्थमुपसंहरति। युक्त्यङ्गेति। युक्तिर्ब्रह्मणि प्रमाणविचारो मुक्तये कर्तव्य इत्यर्थः। मुक्तिस्तु ज्ञानेनाज्ञाननिवृत्तौ प्रमातृत्वाध्यासनिवृत्तेः सत्यपि मायिकद्वैते अनर्थदर्शनाभाव इत्येकः

पक्षः । इतरस्तु सर्वद्वैतनिवृत्तिपक्षः सकलवृद्धसंमतः समन्वयसूत्रे वक्ष्यते । यस्यायमपरोक्षतया ब्रह्मानुभवः तस्य निरस्तसमस्तानर्थस्वप्रकाशातिशयानन्दात्मना ऽवस्थानमित्यत्र न विवादः । तस्मादनुबन्धचतुष्टयसम्भवात् वेदान्तविचारकर्तव्यता युक्तेति रमणीयम् ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दसरस्वतीपूज्यपादशिष्यरामानन्दविरचिते विवरणोपन्यासे अनुक्रमणिकाव्याख्याने चतुर्थवर्णकं प्रथमसूत्रञ्च समाप्तम् ॥

---

जगज्जन्मस्थितिध्वंसहेतुं सच्चित्सुखात्मकम् ।
सीताभिरामं श्रीरामं सगुणं केवलं भजे ॥

प्रथमसूत्रे यथोक्ताधिकारिणा ब्रह्मज्ञानाय विचारः कर्तव्य इति प्रतिज्ञातम् । तत्र ब्रह्मणि लक्षणप्रमाणाविरोधज्ञानसाधनफलानां विचारो ऽर्थात्प्रतिज्ञातः तं विना फलसमर्थब्रह्मज्ञानायोगाद्विचारः क्रियते इत्याह । ब्रह्मेति—

ब्रह्म मीमांस्यमित्युक्तौ विचारो लक्षणादिषु ।
अर्थादेव प्रतिज्ञातो लक्षणं तु विचार्यते ॥

जन्माद्यस्य यतः । ब्रह्मणि लक्षणाभावात् निःस्वरूपब्रह्मविचारो न सम्भवतीत्याक्षेपसङ्गत्या ऽस्याधिकरणस्य प्रवृत्तिः । यतो वा इमानि भूतानि जायन्ते इत्यादिश्रुतिसिद्धलक्षणविचारात्मकत्वाच्छ्रुतिसङ्गतिः । अत्र श्रूयमाणं जन्मादिकं ब्रह्मलक्षणं न वेति सन्देहे सम्बन्धाभावान्न लक्षणमिति प्राप्ते सिद्धान्तः । जन्म आदिर्यस्य जन्मस्थितिभङ्गस्य तज्जन्मादीति तद्गुणसंविज्ञानो बहुव्रीहिः जन्मस्थितिभङ्गं समासार्थ इति नपुंसकलिङ्गनिर्देशात् प्रतीयते । ननु बहुत्वविवक्षया जन्मादय इत्येव किमिति न कृतमिति चेत् । जन्मस्थितिभङ्गनिरूपितं कारणत्वत्रयं मिलितमेवाद्वितीयब्रह्मणो लक्षणमिति ज्ञापनार्थमिति ब्रूमः । प्रत्येकं लक्षणत्वे जन्मकारणादन्यदेव स्थितिकारणमिति कारणस्य सद्वयत्वज्ञानात् जगत्कारणानुवादेन तद्ब्रह्मेति ब्रह्मत्वप्रतिपादनमशक्यं स्यादतः कारणस्य ब्रह्मत्वस्यानुकूललक्षणसिध्यर्थं युक्त एव समाहारलिङ्गनिर्देशः । ननु तथापि जन्मस्थितिभङ्गानामनादिसंसारे घटीयन्त्रवदावृत्तेः कथं जन्मन आदित्वमिति चेत् श्रुतौ जन्मनः आदौ निर्देशात् जनित्वा स्थित्वा नश्यतीति वस्त्वनुसाराच्चेत्याशयेनाह तृतीयेति—

तृतीयलिङ्गनिर्देशात्समाहारो ऽत्र गम्यते ।
तदादि जन्म विज्ञेयं श्रुतिर्यस्त्वनुसारतः ॥ इति ।

अद्वितीये लक्ष्ये जन्ममात्रकरणत्वस्यासम्भवादादिपदम् । निरपेक्षं लक्षणत्रयमिति शङ्कानिरासार्थं नपुंसकैकवचननिर्देशः । अस्येति सर्वनाम्ना कार्यं सर्वमुपस्थाप्यते सङ्कोचकाभावात् । षष्ठी तु जगतो जन्मादिभिर्भावविकारैरनिर्वचनीयतादात्म्यसंबन्धार्था सतो ऽसतो वा कार्यस्य तैः सत्यसंबन्धायोगादित्याह । इदमर्थ इति—

इदमर्थो जगत्सर्वं षष्ठी संबन्धबोधिका ॥

तेन लक्षणत्वमविरुद्धमिति मन्तव्यम् । यस्य जगतः कारणं ब्रह्म तस्य स्वाभिमतं विभागमाह । जगदिति—

जगद्विभागः श्रौतो ऽत्र नाम्ना रूपेण कर्मणा ।
सर्वविज्ञप्तिमात्रं च स्वरूपं लक्षणं भवेत् ॥

त्रयं वा इदं नामरूपं कर्मेति श्रुत्या जगतः सर्वस्य त्रेधा विभागो दर्शितः अत्र नामरूपकर्माणि शब्दार्थतत्सम्बन्धाः । तत्र संबन्धस्य सबन्ध्यन्तर्भावाच्छब्दार्थौ द्वावेव पदार्थौ इति वृद्धाः । श्रुतिभाष्यवार्तिकपरिशीलने तु प्रकाशकमात्रं नाम प्रकाश्यं रूपं चलं कर्मेति व्याख्यानात् सत्त्वतमोरजांसि सर्वं जगदिति विभागो भाति । एतेषु सर्वान्तर्भावस्यातो हि सर्वाणि नामान्युत्तिष्ठन्तीत्यादिश्रुत्या दर्शितत्वाच्च नामरूपाभ्यामेव व्याक्रियते इति । द्वित्वोक्तिस्तु कर्मणः प्रकाश्यत्वेन रूपे ऽन्तर्भावाभिप्रायेणेति द्रष्टव्यम् । अश्रौतास्तु पुम्बुद्धिभवा विभागा अधुनोच्यन्ते । द्रव्यगुणकर्मसामान्यानि चत्वारः पदार्था इति वार्तिककारीयाः । गुरूणां विशेषशक्तिसमवायनियोगा उक्तैः सहाष्टौ । वैशेषिकाणां षट् । नैयायिकानां षोडश पदार्थाः प्रसिद्धाः । कार्यकारणयोगविधिदुःखान्ताः पञ्चेति शैवाः । कार्यं महदादि । कारणमीश्वरः । योगः समाधिः । विधिस्त्रिषवणस्नानादिः । दुःखान्तो मोक्षः । जीवाजीवास्रवसंवरनिर्जरबन्धमोक्षाः सप्तेति क्षपणकाः । जीवश्चेतनः । अजीवः परमाण्वादिः । विषयेषु इन्द्रियाणां प्रवृत्तिरास्रवः । तं संवृणोतीति शमदमादिः संवरः । नितरां जरयति कल्मषमिति तप्तशिलारोहणादिर्निर्जरः । बन्धः कर्म । सततोर्ध्वगमनं मोक्षः । पृथिव्यप्तेजोवायवश्चत्वारि तत्त्वानीति लौकायताः । चित्तचैत्ये इति सुगताः । पञ्चविंशतितत्त्वानीति

सांख्याः । षड्विंश ईश्वर इति पातञ्जला इति । अश्रौतत्वादेते विभागा नादर्तव्या इति । ननु किं ब्रह्मणः स्वरूपलक्षणं न च यतः सर्वज्ञात्सर्वशक्तेः कारणादिदं भवति तद्ब्रह्मेति भाष्यात् सर्वज्ञत्वं सर्वशक्तित्वं वा स्वरूपमिति वाच्यम् । सर्वापेक्षधर्मत्वादित्यत आह । सर्वविज्ञप्तिमात्रमिति । आनन्दस्य विज्ञानादभेदान्मात्रपदमविरुद्धं अविद्यादशायां स्वाध्यस्तसर्वावभासनक्षमं स्वतो विषयानपेक्षं विज्ञानमात्रं स्वरूपलक्षणमित्यर्थः । ननु सिद्धान्ते ब्रह्मणः सर्वज्ञत्वं कथं स्वरूपज्ञानस्यातीतानागतवस्तुसम्बन्धाभावात् । इन्द्रियाणामपि वर्तमानसन्निकृष्टमात्रग्राहित्वात् । अचक्षुरश्रोत्रमित्यादिश्रुत्या ब्रह्मणि तेषामभावादिति चेत् । उच्यते । विद्यमानसर्ववस्तुगोचरः सत्त्वप्रधानमायावृत्तिरूपः परिणाम उदेति तत्राभिव्यक्तं चैतन्यं प्रत्यक्षानुभवः । वृत्तिनाशे सति संस्कारान्नियमेन स्मरणं पूर्वानुभूतवस्तुगोचरमायावृत्त्यभिव्यक्तचैतन्यरूपं तथा ऽनागतज्ञानमपि वृत्त्युपाधिकं द्रष्टव्यम् । कालत्रयावगाहिनी एकैव वृत्तिरिति केचित् । स्वरूपचैतन्येनैव विद्यमानसर्वज्ञत्वमित्यपरे । उपादानत्वमात्रमस्मिन्सूत्रे तटस्थलक्षणमुक्तं न कर्तृत्वमिति कृत्वा चिन्ता ऽऽरभ्यते । ननु जगदुपादानत्वं न ब्रह्मलक्षणं मायां तु प्रकृतिमिति श्रुत्या सर्गाद्यकालीनं कार्यं जडोपादानकं कार्यत्वात् घटवत् । अन्यथा जगति जाड्यानुगमो न स्यादित्यनुमानेन च मायायामतिव्याप्तेः । न च मायाया उपादानत्वे इन्द्रो मायाभिः पुरुरूप ईयते इति करणत्वं विरुद्धमिति वाच्यम् । मायाकार्यबुद्धीनामात्मबहुत्वभ्रमहेतुतायास्तृतीयार्थत्वात् । माया प्रज्ञा च संविद्धेति बुद्धिपर्यायेष्वपि मायाशब्दस्मरणात् । एतेन मायां तु ब्रह्मस्वरूपप्रज्ञाप्रकृतिं विद्यादिति श्रुत्यर्थ इति ब्रह्मैवोपादानमिति निरस्तम् । मायिनं तु महेश्वरमिति श्रुतेश्च न चैतन्यं माया प्रकृतौ शक्तिशब्दः पारतन्त्र्यद्योती न विरुध्यते । अत एव शक्तिशक्तिमतोरभेदात् सत्यमायाशक्त्यभिन्नं ब्रह्मैवोपादानमिति नातिव्याप्तिरिति निरस्तम् । लोके मायाविसृष्टानेकमिथ्यागजाद्यनुस्यूतोपादाने मायाशब्दप्रयोगात् । मायाविद्यैक्यसाधनाच्च । सत्यत्वस्य मायायामसिद्धेः । तस्मादनिर्वचनीयमायोपादाने ब्रह्मलक्षणस्यातिव्याप्तिरिति । अत्रोच्यते । ब्रह्ममाये साम्येन मिलित्वा जगदुपादाने इत्येकं मतम् । अत्रोपादानत्वस्य तुल्यत्वे ऽपि चिदानन्दस्वरूपलक्षणान्मायातो ब्रह्मणो भेदज्ञानम् । अन्ये तु

ब्रह्मज्ञानात्सर्वज्ञानश्रुतेः सच्चासच्चाभवदित्यादिश्रुतेश्च ब्रह्मैवोपादानं माया तु ब्रह्मणः प्रकृतित्वनिर्वाहकशक्तित्वेन प्रकृतिरिति व्यपदिश्यते इत्याहुः । अत्रोपादानत्वमनतिव्याप्तं लक्षणं ब्रह्मण एव प्राधान्येनोपादानत्वात् । केचित्तु मायैव जगद्योनिस्तदधिष्ठानत्वमात्रेण ब्रह्मणः कारणत्वमिति वदन्ति । अत्र परिणममानाविद्याधिष्ठानत्वं लक्षणमिति विभागमभिप्रेत्याह । ब्रह्ममाये इति—

ब्रह्ममाये जगद्योनी माया शक्त्यथवा महत् ।
यद्वा योनिस्तु मायैव ब्रह्माधिष्ठानमिष्यते ॥

महद्ब्रह्म मायाशक्तिकं योनिरिति मध्यमं मतमित्यर्थः । के चित्तु ब्रह्मपरिणामीत्याहुः । तन्न । तथा हि पूर्वस्वरूपोपमर्देन रूपान्तरापत्तिः परिणामः स चोपादानसमसत्ताकः यथा क्षीरस्य दधिभावः । विवर्तस्तु पूर्वस्वरूपानुपमर्देन रूपान्तरापत्तिः उपादानभिन्नसत्ताकः यथा शुक्तेर्व्यावहारिकसत्तावत्याः प्रातिभासिकं रजतं तत्र प्रलयावस्थमायास्वरूपोपमर्दाज्जगत्तस्याः परिणामः सच्चिदानन्दनिष्कलब्रह्मस्वरूपानुपमर्दाद्ब्रह्मणो विवर्त एव एतावानस्य प्रपञ्चो महिमा अतो ज्यायांश्च पुरुषः नामरूपयोर्निर्वहिता ते यदन्तरा यत्र विलक्षणे कल्पिते तद्ब्रह्मेत्याद्याः श्रुतयो ब्रह्मस्वरूपानुपमर्दे मानं निष्कलं निष्क्रियं शान्तमसङ्गमरसमगन्धमित्यादिना निरवयवत्वादिश्रुतेश्च ब्रह्मणः परिणामो न युज्यते । अत्र कश्चिन्निरवयवमपि परिणमते इति जल्पति । हेयावयवपरमाणूनां परिणामाभावे हेम्नः कथं रुचकाकारः परिणामः स्यात् । अवयवविकारं विना अवयविविकारायोगात् । स वक्तव्यः को ऽयं परिणामो नामेति यद्यवयवानां संयोगविशेषः परिस्पन्दो वा गुणान्तरोदयो वा परिणामः तर्ह्येकस्मिन् अचले निर्गुणे ब्रह्मणि स नास्ति लोके द्रव्यरूपकार्यासिद्धिश्च । अथोपादानानुरक्तं द्रव्यान्तरं परिणामः तर्हि यथादर्शनं हेमाद्यवयविन एव परिणामो ऽस्तु अवयवानां नाशादिकं विना ऽप्यवयविनो नाशवत् घटत्वादिजातिविशेषसमवायवच्च तेषां परिणामं विना ऽपि तस्य परिणामोपपत्तेः न ह्यवयविनि यावदस्ति तत्सर्वमवयवेषु कल्पयितुं शक्यम् अनुभवविरोधात् । ननु स्वाभिन्नावयवेष्वविकारिषु कथमवयविनो विकार इति चेत् स्वाभिन्नजातिगुणादिष्वविकारिषु द्रव्यपरिणामवदिति ब्रूमः । ननु अवयविनि संयोगो ऽवयवसंयोगपुरःसरो दृष्ट इति चेत् । न । संयोगद्वयादृष्टेः ।

अवयवानामवच्छेदकत्वमात्रमिति नास्ति निरवयवे परिणामः किन्त्वावयवानां मायिकानां सावयवतया परिणामे ऽपि न निरवयवब्रह्मणः परिणामः दृष्टान्ताभावात् । अस्तु तर्हि ब्रह्म सावयवमिति चेन्न । अवयवानां स्वप्रकाशत्वे ब्रह्मसम्बन्धासिद्धेः तुल्यानां मिथो ग्राह्यग्राहकत्वायोगात् । तेषां जडत्वे च न स्वयंप्रकाशब्रह्मांशत्वं वस्तुविरोधान्मानाभावाच्च निष्कलमित्यादिश्रुतेश्च । तस्मान्मायया ब्रह्म जगद्रूपेण भातीति विवर्त एवेति मत्वाह । ब्रह्मरूपेति—

ब्रह्मरूपापरित्यागाद्विवर्तो जगदिष्यते ।
निष्कले निष्क्रिये ऽसङ्गे परिणामो न युज्यते ॥

अन्ये त्वाकाशवन्महाभूतानि न जायन्ते इत्याहुः तन्न । पृथिव्यप्तेजोवायवः प्रत्येकं पञ्चीकृताः जायन्ते पृथिवीत्वादप्त्वात्तेजस्त्वात् वायुत्वात् घटवच्चन्द्रकान्तजलमथिताग्निव्यजनपवनवदित्यनुमानानुगृहीताददृभ्यः पृथिवीत्यादिसृष्टिवाक्यात् जन्मसिद्धेराकाशदृष्टान्तासिद्धेश्च । अत एव यतो वा इत्यादिवाक्ये जन्मादीनि सिद्धवदनुवाद इति मन्तव्यम् । अत्र लक्षणसूत्रे ब्रह्मणो जगद्धेतुत्वसिद्धये ब्रह्मान्यहेत्वसम्भवयुक्तिरर्थात्सूत्रिता हेत्वन्तरसत्त्वे ब्रह्मासिद्धेस्तल्लक्षणायोगादिति मत्वाह । प्रधानेति—

प्रधानपरमाणूनां शून्यजीवस्वभावतः ।
हेतुत्वासम्भवाद् ब्रह्म जगद्धेतुः स्वमायया ॥

षष्ठीबहुवचने तसिप्रत्ययः । अत्र सांख्याः । सर्वे भावाः सुखदुःखमोहात्मकसामान्यप्रकृतिकाः नियमेन तदन्वितत्वात् यदित्थं तत्तथा यथा मृदन्विता घटादयः तत्प्रकृतिकाः । इति सत्त्वरजस्तमोरूपं प्रधानमनुमिमते । तार्किकास्तु आद्यं कार्यद्रव्यं स्वन्यूनपरिमाणसंयुक्तानेकद्रव्यारब्धं कार्यद्रव्यत्वात् घटवदिति परमाणून् कल्पयन्ति । बाह्यास्तु सर्वं कार्यमभावजन्यं योग्यत्वे सत्यनुपलभ्यमानपूर्वावस्थत्वात् व्यतिरकेण वैदिकात्मवदिति जल्पन्ति । हैरण्यगर्भास्तु हिरण्यगर्भमागमबलेन कारणं वदन्ति । स्वभाववादिनस्तु सर्वं कार्यं निर्निमित्तं जायते निमित्तकल्पने ऽनवस्थापातात् । निमित्तस्यान्यानपेक्षत्वे स्वभाववाद इति वदन्ति । तदयुक्तम् । अनुमानार्थयोरसम्भवात् । तथा हि न तावत्सांख्यानुमानं साधु सुखादीनामान्तरत्वानुभवेन पक्षे हेत्वसिद्धेः । प्रधानस्याचेतनतया विचित्रजगद्रचनारूपार्थासम्भवश्च । तार्किकानुमाने हेतोरति-

विस्तृतदीर्घदुकूलारब्धरज्जौ व्यभिचारः। ज्ञानत्वेन शरीरत्वेन कार्यकारणभावात्। नित्यज्ञानकल्पनायोगादीश्वरे शरीराङ्गीकारे सुखदुःखयोरावश्यकत्वाद्दुःखिनो जीवत्वेनाल्पज्ञतया परमाणुप्रेरकत्वानुपपत्तिः। शून्यानुमाने घटस्य पूर्वावस्था मृदुपलभ्यते इति हेत्वसिद्धिः। अभावप्रकृतिकत्वे कार्येषु सद्रूपत्वासम्भवः। किञ्च पूर्वकल्पस्य नाशे सत्याश्रयाभावेन संस्काराणां सजातीयकार्यनियामकानामभावाद्विलक्षण एवायं कल्पः स्यात्। तथा च धर्मः सुखायाऽधर्मो दुःखाय मृदादेरेव घटादिकार्यमस्य शब्दस्यायं वाच्य इत्यादिव्यवस्था लुप्येत प्रतिक्षणविलक्षणत्वात् स्वलक्षणानामित्यलम्। हिरण्यगर्भस्य जीवत्वात् न सर्वहेतुत्वम् ईश्वरत्वं त्वथ यन्मर्त्यः सन्नमृतानसृजतेत्याद्यागमबाधितम्। स्वभाववादे तैलार्थी तिलेषु न प्रवर्तेत। न चानवस्थाऽनादिकारणे पर्यवसानात् इत्थं प्रधानादीनां हेतुत्वासम्भवादचिन्त्यमायाशक्त्या ब्रह्मैव निखिलजनिमन्निदानमिति सिद्धम्। येयं युक्तिरभिहिता विना कर्तारमचेतनात्कार्यं न भवतीति तां युक्तिं सतीमनुमानं सर्वज्ञसाधकं मन्यन्ते वैशेषिकादयः। युक्तिर्नाम सम्भावनाहेतुर्व्याप्त्याभासज्ञानम्। यथाग्निमत्त्वाद् धूमोऽत्र स्यादस्यतीति। वस्तुनिश्चायकं व्याप्तिज्ञानमनुमानं यथाऽत्र धूमाद्वह्निरस्त्येवेति। तत्र यत्कार्यं तत्सकर्तृकमिति व्याप्त्या सर्वज्ञः कर्ता निश्चेतुं न शक्यते जगदनेककर्तृकं विचित्रकार्यत्वात्प्रासादादिवदिति प्रत्यनुमानसम्भवात्। न च लाघवात् कर्त्रैक्ये सति सर्वज्ञसिद्धिरिति वाच्यम्। यज्ज्ञानं तच्छरीरजमिति निश्चयेनाशरीरस्य कर्तुर्बाधे सति लाघवानवतारात्। न च यत्सातिशयं तन्निरतिशयजातीयमिति व्याप्त्या सर्वगोचरज्ञानसिद्धिरित्युक्तम्। लक्षकोटिवस्तुगोचरज्ञानेनार्थान्तरत्वात्। अशरीरस्य ज्ञानायोगेन शरीरिणोऽल्पज्ञत्वेन सङ्कोचस्य न्याय्यत्वात्। तस्माच्छ्रुत्या सर्वज्ञे कारणे सिद्धे सत्युक्तव्याप्त्या सम्भावनामात्रं भवतीत्येषा युक्तिरेवेति मत्वाह। अनुमानमिति—

अनुमानमिमां युक्तिं मन्यन्ते तार्किका जनाः।
श्रुतिरेव स्वतन्त्राऽत्र युक्तिः सम्भवबुद्धिकृत्॥

नन्वनुमानमेव स्वतन्त्रमनेन सूत्रेण विचार्यते न श्रुतिस्तस्यास्तत्रान्तर्भावादित्यत आह। श्रुतिरेवेति। यदि श्रुतिरनुमानान्तर्भूता स्यात्तदा तस्याः शक्तितात्पर्यवत्त्वं ब्रह्मणि तत्तु समन्वयादित्यादिना

त्रकारो न ब्रूयात् । तस्मादतीन्द्रिये प्रत्यग्ब्रह्मणि श्रुतेरेव स्वातन्त्र्यं लौकिकदृष्टान्तमात्रेण तस्योहितुमशक्यत्वात् इत्यर्थः । ननु तर्हि श्रुतिसिद्धार्थे युक्त्या किं क्रियते ननूक्तं सम्भावनेति सत्यमुक्तं परन्तु तस्याः फलं पृच्छाम इत्यत आह । एवञ्चेति ।

एवञ्च श्रुतियुक्तिभ्यां ब्रह्मण्यनुभवो भवेत् ।
धर्मे त्वनुभवायोग्ये श्रुत्यादेरेव मानता ॥

श्रोतव्यो मन्तव्य इत्यादिश्रुतेरिति भावः । नन्ववधृततात्पर्याच्छब्दात् ज्ञाने धर्मे मननादिनिदिध्यासनानुभवा नापेक्ष्यन्ते तथा ब्रह्मणो ऽपि वेदार्थत्वात् शब्दमात्रमपेक्ष्यतां नत्वेते इत्याशङ्क्याह । धर्मे त्विति । धर्मस्यानुभवितुमशक्यत्वादनपेक्षितानुभवाच्च ते नापेक्ष्यन्ते । किन्तु अनुमानोपयोगिश्रुत्यादिमात्रमपेक्ष्यते । आदिपदेन लिङ्गादयः श्रुतिगमकाः शब्दप्रभेदा उच्यन्ते । ब्रह्मणः प्रत्यक्त्वेनाऽनुभवितुं शक्यत्वादपरोक्षभ्रान्तिध्वंसायापेक्षितानुभवत्वाच्च ते ऽपेक्ष्यन्ते । साक्षादनुभवाय श्रुत्यादयो ऽप्यत्र शाब्दबोधायापेक्ष्यन्ते । यदि वेदार्थत्वमात्रेण ब्रह्मणि धर्मवन्मननाद्यपेक्षोच्येत तर्हि धर्मे इव ब्रह्मण्यपि प्रकृतिसाध्यत्वविधेयत्वनिषेध्यत्वोत्सर्गापवादादयो ऽपि प्रसज्येरन् । तच्चानिष्टम् । सिद्धस्य वस्तुन एकरूपत्वात् वस्त्वनुसार्येकमेव ज्ञानं प्रमा भवति साध्यस्य तु ज्ञानाधीनत्वाद्यथाशास्त्रं विकल्पादिज्ञानं सर्वं प्रमा ऽतो धर्मविलक्षणत्वाद्ब्रह्मणि मननाद्यपेक्षा युक्तेति भावः । ननु ब्रह्मणि श्रुतेर्युक्त्यपेक्षा न युक्ता भिन्नविषयत्वात् । तथाहि । सद्ब्रह्मैकमद्वितीयमित्यादिश्रुतिर्विशेषविषया मृदादिदृष्टान्तवाक्यलभ्यं यत्कार्यं तत्स्वोपादानाभिन्नमिति युक्तिः सामान्यविषयेत्यत आह । सामान्येति—

सामान्यद्वारतो युक्तेर्वेदार्थे स्यात्सहायता ।
तस्माद्वेदविचारार्थमिदं सूत्रमिति स्थितम् ॥

अद्वितीयब्रह्मण उपादानत्वे श्रुते सत्युपादानत्वादिसामान्यद्वारा युक्तेरद्वितीयत्वादि सम्भाव्यते इति युक्त्यपेक्षा युक्तेति भावः । एवमतीन्द्रियार्थे युक्तेः स्वातन्त्र्याभावोक्तिफलमाह तस्मादिति । को ऽसौ वेद इत्यत आह । भृगुरिति—

भृगुर्वै प्रभृतिर्वेदः सूत्रे ऽस्मिन् विषयो भवेत् ।
जगद्धेत्वनुवादत्वमिति पूर्वकमीरितम् ॥
ब्रह्मताबोधकं तस्य निर्णयो वाक्यशेषतः ।

ननु भृगुर्वै वारुणिरित्यादि किमर्थमुदाहृतं लक्षणसूत्रे। न च पाठज्ञानार्थमिति वाच्यम्। अर्थज्ञाने पाठक्रमस्यानुपयोगात्। प्रसिद्धानुवादेन ह्यप्रसिद्धं बोध्यं तथा च यत आकाशादिकं सम्भूतमिति प्रसिद्धानुवादेन तत्सत्यं ज्ञानमनन्तं ब्रह्मेति पाठभङ्गेनैव बोध्यते इति सत्यं किन्त्वधिकारिणाऽऽचार्याधीनेन ब्रह्म विचार्यमिति प्रथमसूत्रे विचारितार्थकं भृगुर्वा इति वाक्यं किं तद्ब्रह्मेत्याकाङ्क्षायां तत्प्रतिपादकं यतो वा इमानीत्यादिलक्षणवाक्यं द्वितीयसूत्रेण विचार्यते इति क्रमज्ञानार्थमुदाहृतं भाष्यकारैरिति न दोषः। ननु यतो वा इमानीत्यादिवाक्ये जगत्कारणानुवादेन ब्रह्मत्वं विधीयते। तदयुक्तम्। कारणनानात्वस्य पटादाविव प्रतीतेरिति चेन्न। येन जातानीत्यपूर्वस्यैकत्वस्य विधानाद्। तत्र यज्जगत्कारणं तदेकमिति अवान्तरवाक्येनैकत्वप्रमितौ सत्यां यदुक्तकारणमेकं तद्ब्रह्मेति महावाक्येन बोध्यते। एवञ्च वाक्यान्तरे कारणस्येक्षितृत्वश्रवणादेकं सर्वज्ञं सर्वशक्ति सर्वतोऽवच्छिन्नं जगत्कारणं ब्रह्मशब्दाभिधेयमित्यर्थात्सिध्यति। तस्य स्वरूपाकाङ्क्षायामेकत्वस्य भेदाभावत्वात् सर्वज्ञत्वादीनां जडघटितधर्मत्वादस्वरूपत्वादाकाङ्क्षितं धर्मिस्वरूपमानन्दाध्येव खल्विमानि भूतानि जायन्ते इति वाक्यशेषेणानन्द इति निर्णीयते इत्याह। जगद्धेत्त्विति। न चानन्दस्य स्वरूपत्वे विज्ञानं गुणः स्यात्। अन्यथा विज्ञानमानन्दं ब्रह्मेति सामानाधिकरण्यायोगादिति वाच्यम्। केवलो निर्गुण इति श्रुतिविरोधात्। यत्तु निर्गुणस्योपादानत्वमयुक्तमिति भास्करोक्तं तन्न। भ्रान्त्यधिष्ठानत्वरूपोपादानत्वस्याज्ञातत्वमात्रेणोपपत्तेः। तस्मात् द्रव्यं घट इतिवत् कल्पितसामान्यविशेषभावेन विज्ञानमानन्दमिति सामानाधिकरण्यं वृत्त्यहीनचित्त्वं वृत्तिविशेषावच्छिन्नत्वमानन्दत्वमिति मत्वा सूत्रार्थमुपसंहरति। यज्जगदिति—

यज्जगत्कारणं तद्धि स्वप्रकाशमनन्तकम्।
आनन्दरूपं ब्रह्मेति पञ्चमे वर्णके स्थितम्॥

सर्वशाखासु सृष्टिवाक्ये पाठव्यत्ययेन कारणमनूद्य सत्यज्ञानादिरूपं बोध्यते इति भावः।

पञ्चमं वर्णकं द्वितीयसूत्रञ्च समाप्तम्॥



यस्य निःश्वसितं वेदाः सर्वार्थज्ञानशक्तयः ।
श्रीरामं सर्ववेत्तारं वेदवेद्यमहं भजे ॥

पूर्वं ब्रह्मणो जगत्कर्तृत्वोक्त्या ऽर्थात्सर्वज्ञत्वमुक्तम् । तत्र हेत्वन्तरोक्त्यर्थमिदं सूत्रं पूर्वाधिकरणान्तर्भूतत्वेनावतारयति । सर्ववित्त्वे इति—

सर्ववित्त्वे परो हेतुः शास्त्रयोनित्वमुच्यते ।
यद्वा वेदस्य नित्यत्वाशङ्कायामिदमुच्यते ॥

यद्वा ऽधिकरणान्तरमेतत् । तथा हि । शास्त्रयोनित्वात् । अस्य महतो भूतस्य निःश्वसितमेतत् यदृग्वेदो यजुर्वेदः सामवेद इति वाक्यं ब्राह्मणो वेदकर्तृत्वपरं न वेति सन्देहे पौरुषेयत्वेन वेदस्य सापेक्षत्वप्रसङ्गान्नेति पूर्वपक्षः । तथा च वेदस्य नित्यत्वाद्ब्रह्मणः सर्वप्रपञ्चहेतुत्वं पूर्वोक्तमसिद्धमित्याक्षेपसङ्गतिः । सर्वज्ञत्वासिद्धिः फलम् । सिद्धान्ते तूपलभ्यरचनानङ्गीकारेण पौरुषेयत्वाभावात्सर्वार्थप्रकाशनशक्तिमद्वेदोपादानत्वेन ब्रह्मणः सर्वज्ञत्वसिद्धिः । दीपस्य प्रकाशनशक्तेस्तदुपादानशक्तिपूर्वकत्वस्य तदभेदस्य वा दर्शनात् उपादानोपादेययोः शक्त्यैक्यादिति मत्वाह यद्वेति । वेदगता सर्वार्थज्ञानशक्तिः तदुपादानगतशक्तिपूर्विका तद्गता वा कार्यगतत्वे सति ज्ञानानुकूलशक्तित्वात्कार्यगतशक्तित्वाद्वा दीपगतशक्तिवदिति प्रयोगः । सगुणस्याकाशस्य ब्रह्मोपादानकतया शब्दगुणं प्रति उपादानत्वाभावान्नाकाशस्य सर्वज्ञत्वापत्तिः । यद्वा ज्ञानानुकूलशक्तिमत्त्वे ऽपि यथा वेदो न सर्वज्ञः अचेतनया ज्ञानं प्रति अकर्तृत्वात् तथा ऽऽकाशो ऽपीति मन्तव्यम् । तथा ऽन्यः प्रयोगः वेदः स्वविषयादधिकज्ञप्रणीतः प्रमाणवाक्यत्वात् पाणिन्यादिशास्त्रवदिति । ननु किं नाम प्रणीतत्वं यद्यध्येतृवाक्ये इवोच्चरितत्वं तर्ह्यध्येतृवन्नाधिकता ब्रह्मणः । अथ काव्ये इवार्थज्ञानवता कृतत्वं तदा पौरुषेयतापातो वेदस्येति शङ्कते यदीति—

यदि वेदस्य कर्तृत्वाद्ब्रह्म सर्वज्ञमुच्यते ।
पौरुषेयस्तदा वेदो मानं न स्यान्न वाक्यवत् ॥

अत्र केचित् । वेदस्य पौरुषेयत्वे को दोषः । ननु तथात्वे मानान्तरसापेक्षत्वेनाप्रामाण्यं दोष इति चेत् । उच्यते । वेदे लोके च वक्तृरागो वाक्यार्थः तत्र जीवानां ज्ञानस्यानित्यत्वात्तन्मूलरागार्थकं वाक्यं सापेक्षं भवति ईश्वरस्य तु ज्ञानरागयोर्नित्यत्वात् त-

त्कर्तृको वेदो नित्यरागार्थको न मानान्तरमपेक्षते इत्याहुः। तत्समाधानं दूषयति। नित्य इति—

नित्यो रागो न वेदार्थो मानाभावादितीरितम्।
ज्ञात्वा कृतत्वे वेदस्य सापेक्षत्वं ध्रुवं भवेत्॥

ज्ञानेच्छयोर्नित्यत्वेनानुमानमस्तीति पूर्वमुक्तं वेदस्य तु मानत्वमद्याप्यसिद्धं तादृग्वेदानुपलम्भाच्च। क्वापि रागो न वाक्यार्थ इति समन्वयसूत्रे वक्ष्यते इति भावः। अन्ये तु लौकिकवाक्यमेव रागे तात्पर्यवत् वेदस्त्वर्थं ज्ञात्वा कृतोऽपि न रागार्थकः अध्ययनविधिना विधौ तात्पर्यावगमादित्याहुः। तत्राह। ज्ञात्वेति। ज्ञात्वा कृतत्वे लौकिकवाक्यवत् विधिपरत्वमपि दुर्लभमिति भावः। अपरे तु ब्रह्मस्वरूपज्ञानस्य निर्विकल्पकत्वात् तज्जन्यत्वेऽपि न वेदस्य सापेक्षत्वमित्याहुः तदतिमन्दम्। तस्य वेदार्थगोचरत्वे निर्विकल्पकासिद्धेः तदगोचरत्वे हेतुत्वासिद्धेरिति। तस्मान्नैते परिहाराः। अस्तु तर्हि वेदस्य पौरुषेयत्वमिति तार्किकाः। तथा हि वेदो बहुज्ञकर्तृकः प्रमाणवाक्यत्वात् भारतवाक्यवदिति तेषां मते वेदस्य रचनायां भूताभूतज्ञानाभावात्प्रामाण्यं दुःसाधम्। न चेश्वरस्य नित्यं ज्ञानं वेदमूलमित्यत्र किञ्चिन्मानमस्ति ज्ञानत्वावच्छिन्नस्य मनःसंयोगकार्यत्वदर्शनेन नित्यज्ञानानुमानायोगात्। तेषां प्रामाण्यस्य संदिग्धत्वात्। अस्त्वीश्वरस्याप्यनित्यज्ञानं तन्मूलमिति चेत् न वेदार्थस्याप्रत्यक्षत्वात्। इन्द्रियजन्यज्ञानायोगात्। ननु योगजधर्मप्रत्यासत्त्या मनसा तस्य वेदार्थज्ञानमिति चेन्न तादृशप्रत्यासत्तौ मानाभावात्। भावे वा दूरस्थयोग्यवस्तुमात्रग्रहे तस्योपयोगात्। तदुक्तम्। "यत्राप्यतिशयो दृष्टस्तत्स्वार्थानतिलङ्घनात्। दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोतृवृत्तितेति"। तस्मादप्रामाण्यापातात् वेदस्य न पौरुषेयतेत्याह—

तार्किका घोषयन्त्यत्र वेदः पुरुषजोऽस्त्विति।
तेषां तत्र प्रमात्मत्वं दुःसाधं मूलशून्यतः॥

सुगतास्तु वेदाप्रामाण्यमिष्टमित्याहुः तैरिदं वक्तव्यं किमामुष्मिकफलसाधनं धर्मादिकम् अस्ति न वेति। आद्ये वेदं विना तत्सिद्धेः तत्प्रामाण्यं दुर्वारमित्याह। सुगता इति—

सुगताः सङ्गिरन्तेऽत्र वेदो मानं न चास्त्विति।
धर्माद्यतीन्द्रियार्थो हि तेषां पक्षे सुदुर्लभः॥

नेति पक्षं शङ्कते। लौकायतेति—

लौकायतवराकाश्च परोक्षं नेति भाषते ।
लोकोक्तिवद्वेदमात्रे परोक्षार्थः प्रसिध्यति ॥

अप्रत्यक्षप्रमेयाभावात् । न वेदः प्रमाणमिति वदता वक्तव्यं किं लौकिकवाक्यं मानं न वेति न चेत्तव कथानधिकारः । मिथःशब्दानामबोधकत्वात् । आद्ये वेदेनानधिगताबाधितफलवदर्थबोधकेन किमपराद्धमित्याह । लोकोक्तिवदिति । एवं तार्किकाणां पौरुषेयत्वानुमाने वेदस्याप्रामाण्यापातो बाधकतर्क उक्तः इष्टापत्तिः प्रसंगाद्वारिता । किञ्च किमिदं पौरुषेयत्वं शब्दार्थसम्बन्धस्य पुरुषकृतत्वं वा उत वेदवाक्यस्य तत्कृतत्वमात्रम् । आहोस्वित् अर्थज्ञानवत्पुरुषकृतत्वं नाद्यः । तत्र मानाभावात् । न हि सर्गादावीश्वरेण गोघटादिशब्दाः सर्वे संकेतिता इत्यत्र किञ्चिन्मानमस्ति किञ्च शब्दार्थसंकेतं कुर्वन्नीश्वरः पूर्वकल्पीयशब्दार्थसम्बन्धमनुसृत्य करोति उत स्वातन्त्र्येणाभिनवसम्बन्धान्तरं अन्त्ये प्रतिकल्पं वेदार्थभेदाद्विदमिष्टसाधनमिदं दुःखसाधनमिति व्यवस्थालोपः । आद्येनेश्वरस्य सम्बन्धे स्वातन्त्र्यं सिद्धसम्बन्धस्मारयितृत्वात् । तथा च प्रयोगः एतत्कल्पस्यादौ गोशब्दार्थसम्बन्धव्यवहारः पूर्वसिद्धतत्सम्बन्धज्ञानजन्यः जीवेनाकृतशब्दार्थसम्बन्धव्यवहारत्वात् । अधुना तद्व्यवहारवत् सांकेतिकनिरासार्थं जीवाकृतेत्युक्तम् । न द्वितीयः सिद्धसाधनात् । प्रतिक्षणमानुपूर्वीविशिष्टवर्णात्मकवाक्यस्याध्येतृभिः क्रियमाणत्वात् । अभिनवानुपूर्व्या ईश्वरेणाप्यकरणात् । धाता यथापूर्वमकल्पयदिति श्रुतेः शब्दार्थसम्बन्धवदानुपूर्व्या अपि प्रवाहानादित्वानुमानाच्च । आद्या वेदानुपूर्वी तत्पूर्वानुपूर्वी स्मृतिजन्या वेदानुपूर्वीत्वात् । संमतवदिति एतेन निःश्वसितादिश्रुत्या वेदस्यापौरुषेयत्वामिति निरस्तम् । महाप्रलये प्रलीनवेदस्याकाशादिवद्विद्विवर्तस्येष्टत्वात् । अत एव न तृतीयः निःश्वसितश्रुत्या ऽर्थज्ञानप्रयासात् । तस्मान्न पौरुषेयो वेद इत्याह । शब्दार्थ इति—

शब्दार्थयोगः सहजो वेदे पुंसो स्वतन्त्रता ।
न चार्थज्ञानजो वेदः पौरुषेयः कथं भवेत् ॥

ननु लोके शब्दबोधप्रमात्वे वक्तृयथार्थज्ञानं गुणत्वे न हेतुः तज्ज्ञत्वज्ञानत्वं तु ज्ञापकं वेदस्याप्तप्रणीतत्वाभावे तदभावात् । कथं वेदार्थबोधे प्रमात्वमित्यत आह । स्वत इति—

स्वतो निर्दोषवेदो ऽत्र नाप्तज्ञानमपेक्षितम् ।
नित्योऽन्तःस्थायिवर्णात्मा वेदस्तु [illegible]ः ॥

स्वारसिकं प्रमाणानां प्रामाण्यं नान्यापेक्षं परन्तु लोके शब्दस्य भ्रान्त्यादिजन्यत्वं नाम दोषः स्वारसिकप्रमाप्रतिबन्धको भ्रान्तिहेतुः सम्भवतीति तन्निरासार्थमाप्तज्ञानं गुणो ऽपेक्ष्यते वेदे तु अपौरुषेयतया दोषाभावान्न तदपेक्षेत्यर्थः । अतो वेदे पुरुषस्य सर्प इव रज्जोरुपादानत्वे ऽपि स्वातन्त्र्याभावे न पूर्वकल्पक्रमविसदृशक्रमाभावात् प्रवाहात्मना नाद्यनन्तत्वं सिद्धमित्याह । नित्य इति । ननु वेदस्य सर्ववन्मिथ्यात्वे प्रामाण्यं कथमिति चेत् उच्यते । क्रमविशेषवन्तो वर्णा वेद इत्यविवादम् । नभोवद्व्यापिषु नित्येषु न देशकालनिमित्तः क्रमो वर्णेष्विति किन्तु श्रोतुः ज्ञानगतः क्रमो ज्ञेयेषु वर्णेषु आरोप्यते इति वेदज्ञानं सर्वेषां मते भ्रम एव न च क्षणिकत्वात् वर्णानां स्वतः क्रम इति युक्तम् । सो ऽयं गकार इत्यबाधितप्रत्यभिज्ञाविरोधात् । अनन्तव्यक्तिजातिकल्पनायां गौरवात् । तथा च पदवाक्यप्रत्यक्षायोगाच्च । नष्टानां वर्णानां श्रोत्रेणासम्बन्धात् । ज्ञानादेरप्रत्यासत्तित्वात् । तदात्वे पदवाक्यानुभवः प्रत्यक्ष इति अनुव्यवसायविरोधात् । न ह्यलौकिकज्ञाने क्वचिदपि प्रत्यक्षत्वोल्लेखो ऽस्तीत्यलम् । अख्यातिवाद एव नास्ति विशिष्टार्थतज्ज्ञानयोरभावात् । अन्यथाख्यातावपि तथैव विशिष्टार्थाभावात् । अस्माकं तु विशिष्टार्थो भ्रान्तावस्तीति विशेषः । यथा लिखितरेखासर्पबुद्धेर्भ्रान्तत्वे ऽपि तज्जन्यं वस्तुज्ञानं प्रमावेदज्ञानाज्जातं तदर्थज्ञानं प्रमेत्याह । मिथ्यात्वे ऽपीति—

मिथ्यात्वे ऽपि च वेदस्य प्रामाण्यं लिखितादिवत् ।
वेदयोनित्वतो ब्रह्म सर्वज्ञमिति सुस्थितम् ॥

ननूपलभ्यरचनानङ्गीकारे वेदस्य हेतुत्वेन पाणिनिदृष्टान्तेन सर्वज्ञत्वं कथमिति चेत् । उच्यते । वेदकर्तरि वेदविषयादधिकं ज्ञानमस्तीत्येतावन्मात्रं अनुमाने विवक्षितम् । नार्थज्ञानजन्यत्वं वेदस्य विवक्षितम् । ननु तर्ह्यध्येतृवद्वर्णावलीज्ञानमात्रेण वेदरचनोपपत्तेः प्रमाणवाक्यत्वादिति हेतुरप्रयोजक इति चेत् न । उपादाने ब्रह्मणि सर्वार्थज्ञानशक्त्यभावे तत्कार्ये वेदे तदनुपपत्तेः । तस्मात् अनावृतस्वप्रकाशब्रह्मणः स्वाध्यस्तानेकशाखाभेदभिन्नवेदानां ज्ञानवत्

तदर्थानामपि ज्ञानं नान्तरीयकतया ऽस्तीति वर्णकार्यमुपसंहरति । वेदयोनित्वत इति ॥

इति षष्ठं वर्णकं समाप्तम् ।

---

इदानीं सूत्रस्यानेकार्थत्वं भूषणमिति मत्वा ब्रह्मणि प्रमाणप्रतिज्ञामर्थान्तरमाह । यद्वेति—

यद्वा ब्रह्मप्रमित्यर्थे शास्त्रयोनित्वमुच्यते ।
वेदैकमानकं ब्रह्म नानुमेयमिति स्थितिः ॥

शास्त्रयोनित्वात् । किं ब्रह्म वेदान्तैकवेद्यम् उत कार्यलिङ्गकानुमानमिति संदेहे जन्मादिसूत्रे कार्यलिङ्गमेवोपन्यस्तमिति भ्रान्तिं निराचष्टे सूत्रकारः । शास्त्रयोनित्वादिति । वेदैकप्रमाणकत्वस्य तन्त्वौपनिषदमिति श्रुतत्वात् कार्यलिङ्गस्याद्वितीयब्रह्मसाधकत्वायोगात्तत्र वेदान्ता एव मानमित्यर्थः । ननु पूर्वं मायया जगद्योनित्वं ब्रह्मण उक्तम् । तस्याः पूर्वमुक्ततत्त्वज्ञानेन निवृत्तत्वात् इदानीं द्वैतोपलम्भः कथमिति चेत् । अत्र केचित् । बिम्बस्थानीयं ब्रह्म मायाशक्तिमत्कारणं जीवास्तु प्रत्येकं मायाभिन्नाभिरविद्याभिरवच्छिन्ना इत्येकस्याविद्यानिवृत्तावप्यन्यस्य मायिकद्वैतोपलम्भसम्भवादिति वदन्ति । अन्ये त्वविद्यानां समष्टिरेव माया जलाशयराशिवत् तस्य प्रतिबिम्बितं चैतन्यं ब्रह्म कारणं जीवास्तु व्यष्ट्या विद्योपाधिका इति वदन्तः पूर्ववत् बद्धमुक्तव्यवस्थामाहुः । अपरे तु जीवानां स्वरूपे ब्रह्मणि जीवस्थाविद्याभिर्विषयीकृते प्रतिजीवं भिन्ना एव प्रपञ्चाः कल्प्यन्ते शुक्ताविव प्रतिपुरुषं भिन्नानि रजतानि सादृश्यादेकवदवभासन्ते इति व्यवस्थां कल्पयन्ति । सिद्धान्तरहस्यज्ञास्तु मायैवाविद्या चिन्निष्ठा चिन्मात्रविषया चाचिन्त्यशक्तितया ब्रह्म जगद्रूपं भातीति वदन्ति । बद्धमुक्तव्यवस्था तु स्वप्ने तादृशव्यवस्थावदुपपद्यते । ननु श्रुतिस्मृतिपुराणेषु मूलप्रकृतेर्मायाविद्यादिपदवाच्याया एकत्वं प्रतीयते । सांख्या योगिनश्च प्रकृत्यैक्यं वदन्ति मुक्ता अपि बहवो जाता इति बहुशः श्रूयते बहवो ज्ञानतपसा पूता मद्भावमागता इत्यादौ । न चैतेषां वाक्यानां सर्वात्मना बाधितार्थकत्वं सर्वत्रानाश्वासप्रसङ्गात् । तस्मादीषदैक्याविरोधेन बद्धमुक्तव्यवस्था वाच्येति चेत् । यदि व्यवस्थायामाग्रहः

तर्हीत्थं व्यवस्था। तथा हि अविद्यायाः सांशत्वं तावत्सर्वैरेष्टव्यम् । अन्यथा अनन्तपरिणामानामेकस्यामयोगात् । तथा च यदन्तःकरणे ब्रह्मसाक्षात्कारोदयः तदीयकार्यकारणसंघातात्मना परिणताविद्यांशस्य नाशेन सङ्घातस्य नाशे सति तदंशोपाधिको जीवः स्वरूपानन्दब्रह्मात्मनाऽवतिष्ठते। अवशिष्टाविद्योपाधिको जीवोंशान्तरैः संसरतीति व्यवस्था। न च नानाविद्यापक्षादविशेषः मूलप्रकृतिभेदप्रपञ्चभेदादेरत्रासत्त्वात्। एवं क्रमेणांशनाशेनाविद्यानिवृत्तौ सर्वमुक्तिरिति। न च तस्यैवांशान्तरेणानर्थभाक्त्वे का नाम मुक्तिरिति वाच्यम्। श्रवणादिकर्तुः स्वानर्थनिवृत्तिमात्रस्योद्देश्यस्य लाभात् अंशान्तरानर्थे दुःखबुद्ध्यभावेन तन्निवृत्तेरनुद्देश्यत्वात् । कर्तुर्हितशासनात्मकशास्त्रस्य तावतैव चरितार्थत्वादित्यलं विस्तरेण । तदेतदाह । अज्ञा जीवा इति श्लोकद्वयेन—

अज्ञा जीवा ब्रह्म मायि प्रतिबिम्बमथापि वा ।
अज्ञातजीवरूपं वा यद्वा ब्रह्मैव मायया ॥
अविद्यया जगद्रूपमिति पक्षा उदाहृताः ।
बद्धमुक्तव्यवस्था तु यथा दृष्ट्युपपद्यते ॥

तस्मान्मायया ब्रह्म जगत्कारणं वेदान्तप्रमाणकमिति सिद्धम् ॥

सप्तमवर्णकं तृतीयसूत्रञ्च समाप्तम् ॥

---

रामनाम्नि परे धाम्नि कृत्स्नाम्नायसमन्वयः ।
कार्यतात्पर्यबाधेन साध्यते शुद्धबुद्धये ॥

ब्रह्मजिज्ञासां प्रतिज्ञाय ब्रह्मणो लक्षणमुक्त्वा वेदान्तप्रमाणकत्वं प्रतिज्ञातं तत्र सन्दिह्यते सिद्धं वस्तु वेदमानकं न वेति नेति पूर्वपक्षमाह । वेदान्तेति—

वेदान्तगम्यं ब्रह्मेति प्रतिज्ञातन्न युज्यते ।
वेदस्य कार्यनिष्ठत्वात् सिद्धे प्रामाण्यबाधनात् ॥

वेदतात्पर्यज्ञेन जैमिनिना आम्नायस्य क्रियार्थत्वादित्यादिना कार्यपरत्वं वेदस्य दर्शितं वेदमानकत्वव्यापकं कार्यत्वं तन्निवृत्त्या सिद्धस्वभावे ब्रह्मणि व्याप्यनिवृत्तिः । किञ्च यत् सिद्धं तद्वेदातिरिक्तमानयोग्यमिति व्याप्तेर्ब्रह्म मानान्तरयोग्यम् । तत्परत्वे वेदान्तानां मानान्तरसापेक्षता स्यात् । यथा घटोऽस्तीति वाक्यस्य नापौरुषेयत्वादनपेक्षत्वमिति चेन्न । अपौरुषेयत्वं हि वाक्यस्य मूल-

मानानपेक्षत्वे हेतुः न तु योग्ये वस्तुनि संवादानपेक्षत्वे । तथा च यदि वेदान्ताः सिद्धं वस्तु मानान्तरयोग्यं बोधयेयुः तदा संवादापेक्षा दुर्वारा । तन्न । सति संवादे तेषामनुवादकत्वम् असंवादे त्वादित्ययूपाभेदवाक्यवदप्रामाण्यम् किञ्चाध्ययनविधिगृहीतवेदान्तानां फलावसायित्वं वाच्यं फलन्तु प्रवृत्त्यधीनं प्रवृत्तिः कार्यज्ञानतन्मात्रत उदासीनं ब्रह्म निष्फलत्वान्न वेदार्थ इति निरर्थका वेदान्ताः सफलजयस्वाध्यायार्थाः कर्मकर्तृस्तावका वा । ननु कस्य कर्मणः कर्तृस्तावका न हि कर्मविशेषस्य प्रकरणे वेदान्ता अधीताः । अथाविशेषात्सर्वकर्मकर्तृस्तावका इति चेन्न । वेदान्तेषु सर्वकर्मणाम् उपस्थापकप्रकरणाद्यभावेन तच्छेषस्तुत्ययोगात् । जुह्वाः क्रत्वव्यभिचारित्वात्क्रतूपस्थितौ सत्यां तच्छेषपर्णताकार्यपरत्वं पर्णमयीवाक्यस्य युक्तं कर्तुः कर्ममात्रसाधारणत्वात् न वैदिककर्मोपस्थितिरिति न तत्कर्तुः स्तावकत्वमिति चेत्तर्हि स्वप्रकरणस्थोपासनाविधिशेषा भवन्तु वेदान्ताः । तथा चासदेव ब्रह्म सर्वज्ञत्वादिमत्तया ऽमृतत्वकाम उपासीतेति कार्यपरा वेदान्ताः इत्याह । सापेक्षत्वेति--

सापेक्षत्वाफलत्वाभ्यां वेदान्ता स्युर्निरर्थकाः ।
कर्मकर्तृस्तावका वा यद्वा ध्यानैकगोचराः ॥

तदुत्तरत्वेन तत्तु समन्वयादिति सूत्रं व्याचष्टे वेदान्तेति--

वेदान्तगम्यं तद्ब्रह्म तुशब्दश्चोद्यवारकः ।
तात्पर्यकत्वं हेत्वर्थः तल्लिङ्गं प्रक्रमादिकम् ॥

ब्रह्म वेदान्तजप्रमागोचरः वेदान्ततात्पर्यविषयत्वात् । यो यद्वाक्यतात्पर्यविषयः स तत्प्रमेयः । यथा चोदनागम्यो धर्मः तात्पर्यं नाम अपूर्वफलवदर्थप्रमित्यनुकूलशक्तिरूपं शब्दगतं न विवक्षात्मकं वेदस्यापौरुषेयत्वात् । न च हेत्वसिद्धिः । उपक्रमादिषड्विधलिङ्गैस्तत्सिद्धेः । न च प्रमेयस्य कार्यत्वमेव तात्पर्यलिङ्गं नोपक्रमादिकमिति युक्तम् । अर्तिलयवाग्वा जुहुयादिति वाक्यस्यारण्यतिलयवागूहोमे तात्पर्यप्रसङ्गात् । न चैतदस्ति प्रकृताज्यक्षीरहोमविधिशेषार्थवादत्वात् । अत उपक्रमादिकमेव लिङ्गं तच्च वेदान्तानां ब्रह्मविषयकतात्पर्ये विद्यते । तथा हि सदेव सौम्येदमग्रआसीत् ऐतदात्म्यमिदं सर्वमित्यद्वितीये ब्रह्मण्युपक्रमोपसंहारयोरैकरूप्यं तत्सत्यं स आत्मेति नवकृत्वोऽभ्यासः तत्र मानान्तराप्राप्तत्वा(१)दपूर्वता । अथ संपत्स्ये इति फलं येनाश्रुतं

(१) मानान्तरावाप्तत्वादिति पाठान्तरम् ।

श्रुतं भवतीत्यर्थवादः वाचारम्भणं विकारो मृत्तिकेत्येव सत्यमिति कारणाद्वयत्वे युक्तिरिति षड्विधानि लिङ्गानि छान्दोग्ये दृश्यन्ते। अथ प्रारब्धक्षयानन्तरं विद्वान् ब्रह्म केवलं संपद्यते इति श्रुत्यर्थः। एवं प्रतिवेदान्तं लिङ्गानि द्रष्टव्यानीत्यर्थः। अधुना समन्वयादित्यत्र सोपसर्गार्थमाह। सम्पदेनेति—

सम्पदेन च तात्पर्यं वेदान्तानामखण्डगम्।
द्योतितं सर्वशब्दानां तत्रैवावसितिर्यतः॥

वेदानामन्वयस्य तात्पर्यस्य सम्यक्त्वमखण्डार्थगोचरत्वम् अखण्डार्थकत्वं नाम अपर्यायशब्दानां संसर्गागोचरप्रमाजनकत्वम् एकप्रातिपदिकार्थमात्रनिष्ठत्वं वा। उद्भिदा यजेतेत्यत्रोद्भिद्यागशब्दयोरेकार्थनिष्ठत्वे ऽपि विधिपदाकाङ्क्षया संसृष्टबोधकत्वान्नाखण्डार्थता सत्यादिपदानान्तु विध्याकाङ्क्षा नास्तीति वक्ष्यमाणत्वात् अखण्डार्थत्वमविकलम्। न चाखण्डार्थत्वे पर्यायतापत्तिः। वाच्यभेदात्। तथा हि आकृतिः शब्दार्थ इति मीमांसकाः। तथा च ज्ञानत्वानन्दत्ववाचिनौ ज्ञानानन्दशब्दौ वृत्त्युपहिते ब्रह्मणि मुख्यवृत्त्या वर्तेते ज्ञानसामग्रीजन्यवृत्तिव्यक्तिष्वनुगतं चैतन्यं ज्ञानत्वमुभे कर्मजन्यवृत्त्यनुगतमानन्दत्वमिति भेदः। तत्राकाशस्य श्रोत्रशब्दवाच्यत्वे सति कर्णशष्कुल्याः प्रयोगोपाधित्वमात्रं न वाच्यमिति यथा तद्वत् वृत्तीनामुपाधित्वमिति ज्ञानानन्दशब्दौ ब्रह्मणि मुख्यावित्युक्तम् निरुपाधिकन्तु न कश्चिदपि शब्दो मुख्यः यतो वाचो निवर्तन्ते इति श्रुतेः। एवमेकसत्यानन्त्यशब्दाः एकत्वादिवाचिनः एकत्वं भेदाभावः सत्यत्वं बाध्यत्वाभावः आनन्त्यं नाशाभावः अभावमात्रप्रतियोगित्वाभावो वा। अभाववाचिनः शब्दा ब्रह्मणि जहल्लक्षणया वर्तन्ते सर्वज्ञसर्वशक्त्यादिशब्दाः यौगिकाः सोपाधिकब्रह्मवाचिनः तत्त्वमस्यादिशब्दाः विशिष्टवाचिनः जहदजहल्लक्षणया ब्रह्मणि पर्यवस्यन्तीत्यपर्यायत्वम् अतो ऽखण्डवस्तुलक्षकत्वमविरुद्धमित्यर्थः। वेदान्तवाक्यं द्विविधम्। महावाक्यं पदार्थवाक्यञ्च तयोः क्रमेणाखण्डार्थत्वे उदाहरणमाह। तत्त्वमिति—

तत्त्वमस्यादिवाक्यञ्च सो ऽयमित्यादिवाक्यवत्।
सत्यज्ञानादिवाक्यन्तु चन्द्रलक्षणवाक्यवत्॥

तत्त्वमस्यादिवाक्यम् अखण्डार्थं अकार्यकारणद्रव्यसमानाधिकरणवाक्यत्वात्। सो ऽयं देवदत्त इति वाक्यवत्। तथा हि अस्य

वाक्यस्य मूलं प्रत्यभिज्ञा तस्या ऐक्यं प्रमेयं न च तत्तेदन्ताविशिष्टयो-रैक्यं सम्भवति । विशेषणविशिष्टयोरैक्यापातात् । न च तत्तोपलक्षि-तस्येन्दताविशिष्टेनैक्यं युक्तं विशिष्टस्य पूर्वमपि सत्त्वापातात् । तद-भिन्नदेवदत्तस्य पूर्वं सत्त्वात् अतस्तत्तेदन्तोपलक्षितपिण्डस्वरूपमैक्यं तस्याः प्रमेयमिति तन्मूलकवाक्यस्यापि तावन्मात्रं प्रमेयम् । यद्यपि तस्यां तत्तेदन्ते अपि भासेते तथापि तयोरभिज्ञाद्वयासिद्धत्वेनाज्ञातत्वा-भावान्न प्रत्यभिज्ञाप्रमेयता । ननु पिण्डस्वरूपमपि अभिज्ञासिद्धमिति चेत्सत्यम् । परन्तु ज्ञाते ऽपि तस्मिन् भेदभ्रमानुकूलमज्ञानमस्तीति तन्निराकृतिफलायाः प्रत्यभिज्ञायाः भवति तत्प्रमेयं स्वनिवर्त्याज्ञान-विषयस्यैव तत्प्रमेयत्वात् । एतेन भागत्यागलक्षणया पदेनैव वा-क्यार्थज्ञानाद्वाक्यं व्यर्थमिति निरस्तम् । पदेन ज्ञाते ऽपि सो ऽयमिति वाक्यं विना भेदभ्रमविरोधिज्ञानालाभात् । तस्मात्प्रत्यभिज्ञाप्रमे-यैक्यमात्रतात्पर्येण प्रयुक्तः सो ऽयमिति वाक्यवत् तत्त्वमसीति-वाक्यं विरुद्धांशत्यागेन लक्षणया पदेनावगतमेवाखण्डं वस्तु भे-दभ्रमनिरासार्थं बोधयतीति सिद्धम् । अत्र केचिदाहुः । इदं वाक्यं भेदाभेदपरम् । अत्यन्ताभेदे पदार्थवाक्यार्थयोर्भेदालाभादिति । तै-रिदं वक्तव्यं किं मुक्तौ भेदो नश्यति न वेति न चेत्संसारादवि-शेषः । आद्ये नाशकं न पश्यामः । वाक्यजन्यभेदाभेदज्ञानस्य स्व-विषयनाशकत्वायोगात् । अन्यथा भेदवदभेदस्यापि नाशप्रसङ्गात् न चाभेदमात्रज्ञानं नाशकम् । तस्य वाक्याजन्यत्वेनाप्रमाणत्वात् । तस्य नाशकत्वे तद्विषयाभेदमात्रस्यैव वाक्यार्थत्वापातात् । भे-दस्य सत्यत्वे ज्ञानान्निवृत्त्ययोगात् । कर्मणा भेदनाशाङ्गीकारे ब्रह्म वेद ब्रह्मैव भवतीति ज्ञाननाश्यत्वश्रुतिविरोधात् । किञ्च निरवयवे वस्तुन्य-वच्छेदकभेदस्याभावात् कथं विरुद्धौ भेदाभेदौ स्याताम् । किञ्च मुक्तौ परिशिष्यमाणब्रह्मण एवाधुना संसारो वाच्यः तद्भिन्नस्य संसारित्वे बन्धमुक्तिवैयधिकरण्यापत्तेः तथा च क्व भेदाभेदौ । एतेनातिरेको नाम कश्चिद्धर्मः स वाक्यार्थ इति निरस्तं तस्य भेदादन्यस्य दु-र्निरूपत्वात् भेदस्य निरस्तत्वात् । तस्मादत्यन्ताभेद एव वाक्यार्थः पदार्थवाक्यार्थयोरभेदे ऽपि भेदभ्रमनिरासेन वाक्यस्यार्थवत्त्वादित्यलं प्रपञ्चेन । तथा च तत्पदार्थलक्षकं सत्यादिवाक्यमखण्डार्थं लक्षण-वाक्यत्वात् । लक्ष्यमात्रप्रश्नोत्तरत्वाद्वा प्रकृष्टप्रकाशश्चन्द्र इति वा-क्यवत् न च दृष्टान्तासिद्धिः कश्चन्द्र इति प्रश्नस्य चन्द्रस्वरूपा-

ज्ञानमूलत्वे तदुत्तरवाक्ये तत्स्वरूपमात्रस्य लक्षणप्रतिपाद्यत्वात् तात्पर्यानुपपत्तेरेव लक्षणाबीजत्वात् । न चाप्रयोजकता । एकधैवानुद्रष्टव्यम् नेह नाना ऽस्तीत्यादिश्रुतिविरोधात् ब्रह्मभिन्नस्य सर्वस्य मिथ्यात्वेन श्रुतिजन्यतत्त्वज्ञानविषयत्वायोगात् । तस्माद्वेदान्तानामखण्डे तात्पर्यमित्यर्थः । यदुक्तं भूतवस्तुनो मानान्तरयोग्यत्वात् तत्परत्वे वेदान्तानां सापेक्षत्वं स्यादिति तत्राह रूपादीति—

रूपादिविरहाद्ब्रह्म न मानान्तरगोचरः ।
अतो भूतार्थको वेदो न सापेक्ष इतीरितम् ॥

अयमाशयः । किं ब्रह्मणो योग्यत्वे सति अनुपलब्ध्या बाधाद्वेदान्तानामप्रामाण्यम् उत मानान्तरं ज्ञातार्थकत्वात् । अथ वा मानान्तरयोग्यार्थकत्वात् । नाद्यः । रूपादिहीनस्य स्वतन्त्रस्य वस्तुनः प्रत्यक्षाद्ययोग्यत्वात् । अतो रूपे मानान्तरसंवादाभावे ऽपि चक्षुष इवानधिगतार्थबोधित्वाद्वेदान्तानां प्रामाण्यं युक्तम् । न द्वितीयः । हेत्वसिद्धेः । न च वेदान्ता मानान्तरज्ञातार्थकाः भूतार्थकवाक्यत्वात् नदीतीरादिवाक्यवदिति वाच्यम् । अप्रयोजकत्वान्मानान्तरस्यानुपलब्ध्या बाधाच्च । किञ्च विधिवाक्यं तथा कार्यार्थकत्वाद्गामानयेत्यादिवाक्यवदित्याभाससाम्याच्च । तस्मादपौरुषेयत्वाद्विधिवाक्यवद्वेदान्तानां न मानान्तरज्ञातार्थकता पौरुषेयत्वस्यैव वाक्ये ज्ञातार्थहेतुत्वात् । ब्रह्मस्वरूपज्ञानस्य तु प्रमेयत्वान्न मानान्तरत्वम् । न तृतीयः तथात्वे ऽपि त्वगिन्द्रिययोग्ये घटे चक्षुष इव प्रामाण्योपपत्तेः ब्रह्मणो मानान्तरयोग्यत्वासिद्धेश्च । भूतत्वेन घटवत् ब्रह्म योग्यमिति चेत् । कार्यत्वेनानयनवत् विध्यर्थो योग्यः किं न स्यादिति तुल्यम् । विधिवद्वेदान्तानामनपेक्षत्वमित्यर्थः । ननु लोके मानान्तरसिद्ध एव शब्दार्थो दृष्टः ब्रह्मणो मानान्तरासिद्धत्वे कथं शब्दार्थतेति चेत् किं सङ्गतिग्रहार्थं मानान्तरेण सिद्धिरपेक्ष्यते उत मानान्तरविशिष्टार्थे सङ्गतिरिति । आद्यस्त्विष्टः । सत्यज्ञानादिपदानामबाधितवादी लोकसिद्धे सङ्गतिग्रहात् । किञ्च पदार्थस्योपस्थितिमात्रं सङ्गतिग्रहोपयोगि न प्रमाणान्तरेण सिद्धिः यूपाहवनीयलिङ्गादिपदानां वेदे एव सङ्गतिग्रहात् । न द्वितीयः । गौरवादनुपस्थितत्वाच्च । तथा हि व्युत्पित्सुर्मध्यमनरस्य प्रवृत्तिलिङ्गेन स्वात्मदृष्टान्तेन प्रवृत्तिविषयार्थमात्रज्ञानमनुमिनोति न प्रमाणविशिष्टार्थज्ञानं दृष्टान्ताभावात् । न हि स्वस्य प्रवृत्तौ प्रमाणविशिष्टभोजनज्ञानं हेतुत्वेन दृष्टं भोजनमात्रज्ञाना-

त्त्वस्य प्रवृत्तेः अतो ऽनुमितार्थमात्रज्ञाने शब्दस्य सामर्थ्यावगमाद्-र्थमात्रं पदशक्यं न प्रमाणान्तरसंभिन्नो ऽर्थः शक्यः मध्यमनरेण ज्ञातार्थे वस्तुतो विद्यमानस्यापि वक्तृप्रमाणस्य प्रवृत्तिलिङ्गेनानुपस्थितत्वात् । अत्र कश्चिदाह । अर्थासंस्पर्शिनः सर्वे ऽपि शब्दा अङ्गुल्यग्रादिशब्दवदिति । स प्रष्टव्यः किं शक्यार्थाभावः साध्य उत पदार्थसंसर्गरूपवाक्यार्थाभाव इति । आद्ये दृष्टान्तासङ्गतिः । द्वितीयपक्षे प्राभाकराः समादधते । पुरुषवचसां न पदार्थसंसर्गः प्रमेयः किन्तु वक्तृज्ञानमेव प्रमेयं तत्र निर्विषयस्य ज्ञानस्य वाक्येन प्रमातुमशक्यत्वाद्वाक्यप्रमेयस्य वक्तृज्ञानस्य विषयतया पदार्थसंसर्गसिद्धिः । अङ्गुल्यग्रे करिणां शतमित्यादिवाक्यानामपि मूलं यत्किञ्चिज्ज्ञानं प्रमेयमस्तीति सार्थकाः सर्वे शब्दाः । तत्समाधानमयुक्तम् । पूर्वोक्तरीत्या वक्तृज्ञानस्य पदार्थत्वाभावेन वाक्यार्थत्वायोगात् । अपि च अनन्यलभ्यः शब्दार्थः वक्तृज्ञानं तु अनुमानलभ्यत्वान्न वाक्यप्रमेयम् । तथा हि अयमेतदर्थज्ञानवान् एतद्वाक्यस्य स्वातन्त्र्येण प्रयोक्तृत्वात् यो यद्वाक्यप्रयोक्ता स तदर्थज्ञानवान् यथाहमिति । किञ्च वैदिकवाक्यवत् लौकिकवाक्यस्य संसर्ग एव प्रमेयः उभयत्र संसर्गो ऽनुभवाविशेषात् । किञ्च संसर्गज्ञानं विना वाक्येन वक्ता संसर्गज्ञानवानिति प्रमातुमशक्यम् अतो लाघवादावश्यकत्वाच्च संसर्ग एव सखण्डवाक्यानां प्रमेयः न वक्तृसंसर्गज्ञानम् । यत्तु सर्ववाक्यानां अङ्गुल्यादिवाक्यवत् प्रमेयास्पर्शित्वमिति तन्न । शुक्तिरूप्यज्ञानवत् सर्वज्ञानानां भ्रान्तित्वापातात् । तस्मादसति बाधे वाक्यानां सप्रमेयतेत्यभिसन्धायाह । वक्तृमानमिति ।

वक्तृमानं न शब्दार्थो व्युत्पत्तावनुपस्थितः ।
अत एव न वाक्यार्थो ऽप्यन्यलभ्यत्वतो ऽपि च ॥

एवं वेदानामपौरुषेयतया मूलप्रमाणानपेक्षणात् मानान्तरायोग्यरूपादिहीनब्रह्मपरतया संवादानपेक्षणाल्लोके वक्तृज्ञानासम्भिन्ने सिद्धे वस्तुनि गृहीतसङ्गतिकानां सत्यादिपदानां विचारेण वाचकपदैर्वाच्यैकदेशत्वेनोपस्थितम् अखण्डवस्तु लक्षकत्वेन सङ्गतिग्रहाय लभ्योपस्थितये वा मानान्तरानपेक्षणात् । सिद्धवस्तुपरत्वे ऽप्यनपेक्षत्वमक्षतमित्युक्तम् । अत्र शङ्कते । अनपेक्षश्रुतिजन्यो ऽप्यद्वयबोधो द्वैतग्राहिप्रत्यक्षविसंवादादप्रमाणं समताग्राहि त्वगिन्द्रियविसंवादे चाक्षुषचित्रनिम्नोन्नतज्ञानवदिति तत्राह । करण इति ।

करणे विषये वा ऽपि दोषो नास्ति यतस्ततः ।
वेदान्तजो ब्रह्मबोधः प्रमाणं विधिबोधवत् ॥

प्रत्यक्षे क्व चिद् भ्रान्तिदर्शनेन दोषस्य सम्भावितत्वादिन्द्रो मायाभिः पुरुरूप ईयते इति द्वैतज्ञाने मायादोषजन्यत्वनिश्चयाच्च द्वैतावभासो विभ्रमः अद्वैतज्ञानं प्रमा अपौरुषेयानिर्दोषश्रुतिजन्यत्वात् । न च विषये चिरन्तत्ववत्सिद्धत्वमपि दोष इति वाच्यम् । लोके सिद्धवस्तुज्ञानानां सर्वेषां तव भ्रान्तित्वापत्तेः । शाब्दबोधे विषयस्याहेतुतया तन्निष्ठदोषस्याहेतुत्वात् । अतो बाधाभावात्तत्त्वावेदकश्रुतीनां व्यावहारिकमानानां भिन्नविषयत्वाच्च सिद्धे वेदान्तप्रामाण्यं रमणीयमित्यर्थः । यदुक्तमाम्नायस्य क्रियार्थत्वादिति सूत्रात्सिद्धेन वेदार्थतेति तत्राहाज्ञात इति—

अज्ञातः फलवानर्थो येन वाक्येन मीयते ।
तस्यैव तत्र मेयत्वात् कुतः कार्यैकमेयता ॥

वेदस्येति शेषः । आम्नायशब्दितविधिवाक्यस्य मानत्वं किं कार्यार्थकत्वेन उत फलवदज्ञातार्थकत्वेन आद्ये ऽपि कार्यार्थकत्वं किं कार्यबोधकत्वं कार्यपरत्वम् । उभयथापि तत्प्रामाण्यस्य व्याप्यं व्यापकं वा । नाद्यः पतनतात्पर्येणानाप्तोक्ते कूपे पतेदिति वाक्ये स्वार्थाप्रमाणे जर्तिलयवागूहोमवाक्ये च व्यभिचारात् । न द्वितीयः रूपादिप्रमाणं चक्षुरादौ व्यभिचारात् । शब्दप्रामाण्यं व्याप्यमिति चेन्न । पुत्रजन्मवाक्ये व्यभिचारात् । वेदप्रामाण्यं व्याप्यमिति चेन्न । तथा व्याप्तेरदृष्टेः । विधिवाक्ये व्याप्तिर्दृष्टेति चेन्न । सन्दिग्धत्वात् । विधिमानत्वं क्रियार्थत्वप्रयुक्तम् अज्ञातार्थप्रयुक्तत्वं वेत्यनिश्चयात् । अक्रियार्थानामप्रामाण्यात् क्रियार्थकत्वस्य प्रयोजकत्वनिश्चय इति चेन्न इतरेतराश्रयात् । क्रियार्थत्वस्य विधौ प्रामाण्यव्यापकत्वे निश्चिते तदभावादक्रियार्थानामप्रामाण्यनिश्चयः तन्निश्चये तन्निश्चय इति आम्नायपदस्य कृत्स्नवेदपरत्वे क्रियार्थत्वादिति हेत्वसिद्धिः । एतेन वेदार्थत्वव्यापककार्यमिति निरस्तम् । अनुकूलतर्काभावेन व्याप्त्यसिद्धेः । तस्मादध्ययनविध्युपात्तवेदराशेः फलवदज्ञातार्थत्वेन प्रामाण्यमर्थे ऽनुपलब्धे तत्प्रमाणमिति वदतो जैमिनेः संमतम् । अतदर्थत्वेनार्थवादानामप्रामाण्यमाशङ्क्य विध्येकवाक्यत्वोक्त्या स्वार्थे निष्फलानां फलवदज्ञातक्रियापरत्वेन प्रामाण्यं दर्शितमित्यनवद्यम् । यदुक्तं

सिद्धवस्तुज्ञानात्फलं .नास्ति तस्य कार्यबोधाधीनप्रयत्नसाध्यत्वा-
दिति तत्राह । ब्रह्मज्ञानादिति—

ब्रह्मज्ञानात्परानन्दः सर्वानर्थक्षतिस्ततः ।
अज्ञातं फलवद्ब्रह्म सिद्धं वेदान्तमानकम् ॥

सर्वो हि लोकः सुखं मे स्याद्दुःखं माभूदिति वाञ्छति । न तु फलस्य प्रयत्नायाससाध्यत्वं यद्यप्राप्तं स्वर्गादि प्रेप्सति परिहर्तव्यं वा रोगादिदुःखं परिजिहीर्षति तदा तत्साधनप्रयत्नायासमङ्गीकरोति । यदा तु प्राप्तमेव कण्ठगतमणिवदज्ञानात्प्रेप्सति । रज्जुसर्पवद्धतमेव जिहासति तदा तत्त्वज्ञानमेवान्यानपेक्षं साधनमिति तज्जनका वेदान्ताः कर्मवाक्येभ्य उत्कृष्टफलाः साधनायासफलानित्यत्वादिदोषाभावात्तस्मादज्ञातश्रेयःसाधनबोधिविधिवाक्यवद्ब्रह्मणि वेदान्ताः प्रमाणमिति सिद्धम् ॥

इत्यष्टमवर्णकं समाप्तम् ॥

---

एवं पदानां योग्येतरान्विते शक्तिमिच्छतां लौकिकवाक्यानां भूतार्थे मानत्वे ऽपि वेदान्तैर्ब्रह्मसिद्धिर्नास्तीति वदतां मतं निरस्तमिदानीं कार्यान्विते शक्तिवादिनां कार्यमेव लोके वेदे च वाक्य प्रमेयं तच्छेषत्वेन सिद्धार्थत्वादिति वदतां मतम् उत्थापयति—

अपरे प्रत्यवतिष्ठन्ते (१) वेदान्तैर्ब्रह्म सिध्यताम् ।
स्वप्राधान्यं विधेरेव तच्छेषे ब्रह्म गीयते ॥

वेदान्ताः कार्यशेषत्वेन ब्रह्म बोधयन्ति उतानन्यशेषत्वेनेति सन्देहे शेषत्वेनेति प्राप्तम् । तथा हि लोके व्युत्पित्सुर्मध्यमवृद्धस्य प्रवृत्तिलिङ्गेन तद्धेतुज्ञानमनुमायानुमितज्ञानस्य विषये प्रवर्तकज्ञानहेतूनां पदानां सामान्येन सामर्थ्यं गृह्णाति तत्र प्रवर्तकं कार्यमेव कार्यमिति ज्ञानात्स्वस्य स्नानपानादिप्रवृत्तिदर्शनात् । इष्टसाधनताज्ञानं न प्रवृत्तिहेतुः कार्यताज्ञानहेतुत्वेनान्यथासिद्धत्वात् । एवञ्च प्रवर्तकज्ञानविषयाः कार्यसंसृष्टा अर्थाः पदशक्या इति संमुग्धव्युत्पत्त्यनन्तरमावापोद्वापाभ्यां गोपदं कार्यान्वितगवि शक्तमिति विषयगतशक्तिग्रहो भवति शक्यतावच्छेदकन्तु सर्वपदानां कार्यान्वयाश्रयत्वं तच्च कार्ये ऽप्यस्तीति तदवच्छेदेनैवानयनलिङ्गादिकार्यवाचिपदानां सङ्गतिसिद्धिः एवं सङ्गतिग्रहानुसारात्कार्यान्वितार्था एव सर्वत्र वाक्य

(१) वेदान्तैर्ब्रह्म वाञ्छतामिति पाठान्तरम् ।

अन्यज्ञानविषयाः तत्र भूतं भव्यायेति न्यायात् कार्यस्य प्राधान्येन प्रमेयत्वम् अन्येषां तच्छेषत्वेनेति स्थितिर्न कार्यसंस्पर्शं विना क्वचिदपि शब्दार्थोऽस्ति केवलभूतार्थे सङ्गत्यग्रहादिति। अपि च वेदान्तानां सिद्धवस्तुबोधने फलाभावात्कार्यपरत्वं वाच्यम्। कार्यज्ञानाधीनप्रवृत्त्यादिसाध्यत्वात् फलस्य। यद्यपि लोके कण्ठगतविस्मृतमण्यादिज्ञानमात्राल्लभ्यते तथापि ब्रह्माहमिति ज्ञानेऽपि यथापूर्वं संसारोपलम्भात्कार्याधीनमेव निःश्रेयसमित्यवगम्यते। मननादिविधानाच्च। यदि महावाक्यजज्ञानादेव मुक्तिस्तदा मननादिविधिर्नस्यादस्ति च विधिस्ततो वाक्यजज्ञानानन्तरं कार्यमस्त्येव। अस्तु साक्षात्कारार्थमिति चेन्न। अतीन्द्रिये साक्षात्कारासम्भवाच्छब्दस्य परोक्षवृत्तित्वात्तस्मात्सोऽन्वेष्टव्य इत्यादिना मोक्षायात्मप्रतिपत्तिः कर्तव्येत्युक्ते कोऽसावात्मेत्याकाङ्क्षायां तच्छेषतया सत्यादिवाक्यैरात्मा ब्रह्मरूपः प्रतिपाद्यते इत्याह--

सिद्धे व्युत्पत्तिविरहात्तज्ज्ञानस्याफलत्वतः।
मननादिविधानाच्च वेदान्ताः कार्यतत्पराः॥ इति।

एवं ब्रह्मनियोगौ शेषशेषिभावेन वेदान्तप्रतिपाद्यौ इति प्राप्ते नियोगासिद्धिं तावदाह—

अत्रोच्यते नियोगस्य विषयः सप्रयोजनः।
न दृश्यतेऽतो वेदान्तैर्नियोगो नैव सिध्यति।

न तावच्छाब्दज्ञाने नियोगः। व्युत्पन्नस्य शब्दादेव तत्सिद्धेः। ननु शब्दात्परोक्षानुभवे जाते स्मृतिसन्तानो विधेय इति चेन्न। फलाभावात्। न तावद्दृष्टं फलं मुक्तेरदृष्टसाध्यत्वे स्वर्गवत्तारतम्यानित्यत्वादिप्रसङ्गात्। न चादृष्टान्मुक्तिहेतुः स्मृतब्रह्मसाक्षात्कार इति युक्तं प्रमाणफलस्य केवलादृष्टफलत्वायोगात्। न चादृष्टं साक्षात्कारहेतोः प्रमाणस्य सहकारीति वाच्यम्। अतीन्द्रिये ब्रह्मणि साक्षात्कारहेतोः प्रमाणस्याभावात् कार्यपराच्छब्दाद्ब्रह्मण्यपरोक्षज्ञानस्यासम्भवात्त्वयाऽनङ्गीकाराच्च। अङ्गीकारे शब्दादेव तत्सिद्धेरदृष्टवैयर्थ्यात्। अस्तु तर्हि स्मृतिसन्तानस्य साक्षात्कारो दृष्टं फलमिति चेन्नासम्भवात्। न हि परोक्षज्ञानावृत्तेरपरोक्षज्ञानं फलं सम्भवति। अनुमित्या वृत्त्याऽनुमेयापरोक्षादर्शनादावृत्तेरप्रमाणत्वाच्च। अत एव ध्याने नियोग इति निरस्तम्। उक्तरीत्या फलासम्भवात्। ननु स्मृतिसन्तानध्यानयोः को भेद

इति चेत् उच्यते। स्वार्थे प्रमाणजन्या वस्तुनिष्ठा स्मृतिर्ध्यानं तु मनोमात्रायत्तं वस्त्वनपेक्षम् इति भेदः। ननु ध्यानात् ध्येयस्य नष्टपुत्रादेः साक्षात्कारो दृष्ट इति चेन्न तद्वदेव ब्रह्मसाक्षात्कारस्य ध्यानजस्य भ्रान्तित्वापातात्। अप्रमाणजन्यत्वाच्च। न च ब्रह्मणि शब्दप्रमाणसम्भवात्तस्य प्रमात्वं श्रेयं स्वतस्त्वभङ्गापाताद्तः सफलस्य विषयस्याभावान्नास्ति वेदान्तैर्नियोगप्रमितिरित्यर्थः। किञ्च शब्दसंवादात्साक्षात्कारस्य प्रमात्वे तत्करणस्य ध्यानस्य प्रमाणान्तरत्वापत्तिः क्लृप्तप्रमाणानन्तर्भावात्। किञ्चात्र संवादोऽप्यसिद्धः शब्दस्य कार्यपरत्वादित्याह—

वाक्यस्य विधिनिष्ठत्वे ब्रह्माद्वैतं न सिध्यति।
विरोधेऽन्यपराद्वाक्यादन्यासिद्धेरसम्भवात्॥ इति।

ननु देवताविग्रहादिवत्सत्यादिवाक्यैरवान्तरतात्पर्येणाद्वैतं ब्रह्म सिध्यतीति चेन्न। द्वैतग्राहिप्रत्यक्षादिविरोधादसति हि विरोधे देवताविग्रहन्यायः। न चोपासनाविधेरुपास्यब्रह्मसत्त्वमन्तरेणानुपपत्तिः। योषाग्निदृष्टिवदुपपत्तेः। न च विधौ सावकाशैर्वेदान्तैः प्रत्यक्षादिबाधो युक्तः सिद्धान्ते तूपक्रमादिना ब्रह्माद्वैतमेव वेदान्तार्थ इत्यनवकाशत्वाद्वेदान्तानां प्रत्यक्षादिभ्यः प्राबल्यं ब्रह्मसाक्षात्कारप्रतिबन्धनिरासार्थमवान्तरतात्पर्येण श्रवणादिविधानं चेत्यनवद्यम्। यत्तु कैश्चिदुक्तम्। शमाद्यङ्गको ध्यानकरणकः साक्षात्कार एव मुक्तये विधेय इति तन्मन्दम्। ध्यानादसतोऽपि नष्टपुत्रवत्साक्षात्कारसम्भवेन ब्रह्मासिद्धिप्रसङ्गात्। न च वेदान्तानां ब्रह्मविशिष्टसाक्षात्कारविधौ तात्पर्याद्विशेषणत्वेन ब्रह्मसिद्धिरिति वाच्यम्। लाघवाद्ब्रह्मण्येव तात्पर्यापातात्। न च विधिस्पर्शं विना वाक्यस्य प्रामाण्यायोगाद्गौरवं न दोष इति वाच्यम्। अज्ञातज्ञापनेन लौकिकवाक्यादिवत्प्रामाण्यस्योक्तत्वाद्वक्ष्यमाणत्वाच्च। न च लौकिकप्रमाणानामज्ञातज्ञापनेन प्रामाण्यम् वेदस्य तु विधिपरत्वेनैवेति वैषम्यं युक्तम्। साम्यसंभवात्। तदुक्तम्। गुणाद्वाऽप्यभिधानं स्यात्सम्बन्धस्याशास्त्रहेतुत्वादिति। आदित्यो यूप इत्यादिशब्दानां लोके गृहीतसङ्गत्या बोधकत्वासंभवे सति वेदे किं पृथक् पुरुषैः संबन्धकल्पनाद्वरं लौकिकसंबन्धानुसरणमित्याह। गुणाद्वाऽपीति। पौरुषसम्बन्धस्य शास्त्रार्थनिर्णयाहेतुत्वात् लौकिकसम्बन्धानुसारेण गौण्यादिवृत्त्या बोधकत्वं स्यादित्यर्थः। तथा च लोकवेदयोः सम्बन्धात्प्रामाण्यस्याप्येकरूपत्वं युक्तम्। तस्माद्विधे-

याभावात् ब्रह्मासिद्धिप्रसङ्गाच्च न विधिपरा वेदान्ता इति स्थितम्। किञ्च कोऽसौ विधिशब्दितो लिङाद्यर्थो नियोगः। न तावद्वक्तुरभिप्रायः। अपौरुषेये वेदे तदसंभवात्। नापि कार्यं कृ[illegible] कार्यताज्ञानेऽप्यप्रवृत्तेः। न चालौकिकं कृतियोग्यं वस्तु नियोग इति वाच्यम्। लोके प्रवर्तकज्ञानविषयत्वेनावगतावलौकिकत्वायोगात्। अनवगतौ विध्यर्थत्वायोगात्। यज्ज्ञानाल्लोके प्रवृत्तिस्तस्यैव विध्यर्थत्वात्। ननु कर्तुमिच्छाविषयतायोग्यं कार्यमिति कूपपतनादौ नातिप्रसङ्ग इति चेत्सत्यं तथाऽपि क्रियातत्फलाभ्यां भिन्नं त्वदभिमतं कार्यं न सिध्यति तथाहि सुखदुःखाभावरूपात् फलाद्भिन्नस्येच्छायोग्यत्वं फलसाधनत्वमेव तथा च कर्तुमिच्छायोग्यताज्ञानात्प्रवृत्तिरिति वदता कृतिसाध्यत्वे सति श्रेयःसाधनताज्ञानं प्रवर्तकमित्युक्तं भवति। तथा चास्मदिष्टासिद्धिः। यत्तु श्रेयःसाधनत्वज्ञानं कार्यताज्ञानहेतुत्वेनान्यथासिद्धमिति तन्न सुधांशूदये व्यभिचारेण तस्य तद्धेतुत्वात्। एतेन कार्यत्वविशिष्टश्रेयःसाधनत्वज्ञानस्य प्रवर्तकत्वे विशिष्टस्य विध्यर्थत्वाद्गौरवमतो लाघवात्कार्यमेव विध्यर्थः। तज्ज्ञानस्य प्रवर्तकतावच्छेदकश्रेयःसाधनताज्ञानजन्यकार्यज्ञानत्वमिति नातिप्रसङ्ग इति निरस्तम्। अवच्छेदकगौरवाच्च। कार्याख्यपदार्थान्तरकल्पनागौरवादग्निहोत्रादिप्रवर्तके नियोगज्ञाने उक्तावच्छेदकालाभाच्च। नियोगाधीनो विनियोग इति हि कार्यवादिनां सिद्धान्तः। नियोगज्ञानात्तद्विषये धात्वर्थे श्रेयःसाधनत्वज्ञानं भवतीत्यर्थः। यत्तु बलवदनिष्टाननुबन्धित्वज्ञानाभावे कार्यज्ञानमेव प्रवर्तकमिति तन्न। प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते इति प्रसिद्धेः काकदन्तपरीक्षावदप्रसङ्गाच्च। तस्माद्बालानामशाब्दभोजनादिप्रवृत्तौ विशिष्टज्ञानमेव प्रवर्त्तकमिति विशिष्टे लिङः शक्तिः। यद्वा कृतिसम्बन्धस्य क्रियायामाख्यातलभ्यत्वाच्छ्रेयःसाधनत्वमात्रे शक्तिः। अस्तु तर्हि श्रेयःसाधनविधिपरा वेदान्ता इति चेन्न। ज्ञातस्य तत्त्वस्य तत्त्वज्ञानस्य वा तदज्ञाननिवृत्तिसाधनत्वस्य लोकसिद्धत्वादतो वेदान्तानां प्रमेयान्तराभावाद्ब्रह्मैव प्रमेयमित्याह।

धात्वर्थव्यतिरेकेण कार्यं नाम न दृश्यते।
श्रेयोहेतुर्लिङर्थोऽतो वेदान्ता ब्रह्मगोचराः॥

अत्राह भेदवादी। विधिपराद्वाक्यादद्वैतं न सिध्यतु भिन्नं ब्रह्म सिध्यत्येव। अथ यदतः परो दिवो ज्योतिर्दीप्यते इत्यादिश्रुत्या

जीवप्रपञ्चाभ्यां भिन्नस्य ब्रह्मणः श्रुतत्वात्तत्र द्वैतभानाविरोधात् । तद्ब्रह्माहमिति सम्पदुपासनया मोक्षः सेत्स्यति न च कृतकत्वेन मोक्षस्यानित्यत्वानुमानं युक्तं न स पुनरावर्तते इत्यादिश्रुतिबाधादिति । तत्राह—

मोक्षस्य कर्मसाध्यत्वे स्वर्गादिवदनित्यता ।
तारतम्यञ्च तस्मान्न ब्रह्मणः कार्यशेषता ॥

अयं भावः ब्रह्म वेद ब्रह्मैव भवति अथायमशरीरो ऽमृतः विमुक्तश्च विमुच्यते ब्रह्मैव सन्ब्रह्माप्येतीति श्रुतिरशरीरब्रह्मभावरूपो मोक्षो नित्यसिद्ध उच्यते स कथमुपासनाख्यकर्मसाध्यः स्यान्न हि सिद्धं कर्मणा कर्तुं शक्यं यदि कर्मफलं मोक्षः तर्हि स्वर्गादिवत्सादिः शरीरेन्द्रियादिमता भोग्यः सातिशयः क्षयिष्णुश्च स्यात् । ननु कर्मणां पशुपुत्रादिविचित्रफलकत्वं दृष्टमित्युपासनाया अशरीरब्रह्मभावो ध्रुवं फलं सम्भवतीति चेन्न । अशरीरं शरीरेष्वित्यादिश्रुतावशरीरत्वस्य स्वाभाविकत्वावगमात् युक्तेश्च । न तावत् शरीरेणात्मनः संयोगः निरवयवत्वादसङ्ग इति श्रुतेश्च । समवायो नास्ति न सम्भवति च नापि तादात्म्यं सत्यं युक्तम् । जडाजडयोस्तदयोगात् । तस्माद्भ्रान्तिसिद्धं तादात्म्यं सम्बन्ध इत्यशरीरत्वं स्वतःसिद्धं न कर्मायत्तं न चानादिसिद्धस्य नित्यस्यापि सांख्यानां सत्त्वादिगुणवत्परिणामिनित्यतया मुक्तिपरिणामवत्त्वेन कर्मसाध्यता स्यादिति वाच्यम् । परिणामिनो नित्यत्वायोगात् । ब्रह्मणः कूटस्थत्वश्रुतेश्च । तस्मादुपासनायाः सर्वेषु उपासकेषु जीवनाद्यनियमेनैकरूपत्वायोगात् । स्वभिन्ने ब्रह्मणि उपासनाजन्यसाक्षात्कारस्य भ्रान्तित्वेन मुक्त्यहेतुत्वात् । उपासनया क्लेशक्षये सत्येकाग्रे चेतसि उदिततत्त्वज्ञानमेवैकरूपं मूलाविद्यानिरासादुपचारेण ब्रह्मभावसाधनमित्यनन्यशेषब्रह्मपरा वेदान्ता इति । यत्तु श्रुतिबलात्कृतकस्यापि नित्यत्वमिति तन्न । यत्कृतकं तदनित्यमिति न्यायसहितया तद्यथेहेत्यादिश्रुत्या विरोधात् । ननु न स पुन रावर्तते इति श्रुतिर्मोक्षरूपकार्यस्य नित्यत्ववादिना विशेषविषयत्वाद्बलवतीति चेन्नेत्याह ।

वर्तमानापदेशत्वादिहेममिति चोक्तितः ।
अनावृत्तिश्रुतिः क्षीणा न कार्ये नित्यतां वदेत् ॥ इति ।

उपासकस्य मोक्षो ब्रह्मलोकप्राप्तौ उपास्यब्रह्मसारूप्यादिरूपस्तस्य नित्यत्वेनेयं श्रुतिर्मानं ब्रह्मलोकमभिसंपद्यते न स पुनरावर्तते

इति लोकप्राप्तिकाले पुनरावृत्तेरप्रसक्तत्वेन निषेधायोगात् ननु न स पुनरावर्तिष्यते इति कल्प्यते इति चेन्न । न्यायसहितोक्तश्रुतिविरोधकल्पना ह्यविरोधमपेक्षते अतो ऽर्थवादमात्रमेतत् । किञ्च ये उपासका ब्रह्मलोकं गतास्तेषामिह न पुनरावृत्तिः इमं मानवमावर्तं नावर्तन्ते इति श्रुताविहेममितिपदाभ्या यस्मिन्कल्पे ब्रह्मलोकगतिस्तत्कल्पवाचिभ्यामनावृत्तेर्विशेषितत्वादर्थादुत्तरकल्पे तेषामावृत्तिः प्रतीयते । आत्यन्तिकानावृत्तौ विशेषणवैयर्थ्यात् । तस्मादनावृत्तिश्रुतेर्दुर्बलत्वान्न्यायसहितश्रुतिविशेषणाभ्यामुपासनाफलस्य मोक्षस्यानित्यत्वं दुर्वारमित्यर्थः । अपि च ब्रह्म वेद ब्रह्मैव भवति तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे इत्याद्यनेकश्रुतिषु ब्रह्मविद्यासमकालं फलं श्रूयते तदस्मत्पक्षे युक्तं साक्षात्काराविद्यानिवृत्त्योर्मध्ये व्यवधानाभावात्त्वत्पक्षे तूपासनाफलयोर्मध्ये कार्यस्यापूर्वस्य कालान्तरभाविफलहेतोः सत्त्वात्पश्यन् प्रतिपेदे इति मध्ये कार्यनिषेधो न युक्तः । अपि च तरति शोकमात्मविदिति ब्रह्मात्मसाक्षात्कारस्याविद्यातमोनिवृत्तिः फलं श्रूयते तमसः पारं दर्शयतीत्युपसंहारात् । अविद्यायाः परं पारं तारयसीति श्रुत्यन्तराच्च । न चोपासनायाः अविद्यानिवर्तकत्वं युक्तं अप्रमाणत्वात्तस्माद्ब्रह्म वेदेत्यादिश्रुतीनां तमोनिवृत्तिरूपफलस्य च पर्यालोचनया तत्त्वज्ञानमेव मुक्तिहेतुरिति ब्रह्मात्मत्वपरा वेदान्ताः । किञ्च गौतमादिभिर्न्यायकुशलैस्तत्त्वज्ञानं मुक्तिहेतुरित्युक्तत्वान्नोपासना मुक्तिहेतुरित्याह—

तत्त्वज्ञानं मुक्तिहेतुर्मध्ये कार्यनिषेधतः ।
तमोनिवृत्तेर्युक्तित्वान्न्यायविद्भिश्च भाषणात् ॥ इति ।

नन्वैक्यज्ञानं न मुक्तिहेतुः इतरभिन्नजीवात्मज्ञानं मुक्तिहेतुरिति न्यायविद्भिरुक्तत्वात् तथा हि । षोडशपदार्थानां तत्त्वज्ञानान्निःश्रेयसप्राप्तिः कथमित्याकाङ्क्षायां दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावा(१) दपवर्ग इत्युक्तम् । अयमर्थः प्रमाणसंशयादिपदार्थविचारः आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गरूपद्वादशविधप्रमेयतत्त्वज्ञानार्थः । लक्षणप्रमाणाभ्यां प्रमेयतत्त्वज्ञाने सति तद्भिन्नत्वेन जीवात्मनो ध्यानपरिपाकात्साक्षात्कारे जाते गौरो ऽहमित्यादिमिथ्याज्ञानं निवर्तते ततो रागद्वेषमोहाः प्रवृत्तिहेतवो दोषा नोत्पद्यन्ते ततो धर्माधर्मरूपप्रवृत्त्य-

(१) तदनन्तरापायादपवर्ग इत्यपि पाठान्तरम् ।

भावात्पूर्वसंचितानां पापपुण्यकर्मणां श्रवणध्यानादिक्लेशानन्दभोगेन कायव्यूहेन वा विनाशाज्जन्माभावे सति एकविंशतिदुःखध्वंसो मोक्ष इति । तथा वैशेषिकैरपि साधर्म्यवैधर्म्याभ्यां षट्पदार्थतत्त्वज्ञानादीश्वरध्यानानुगृहीतात्तद्भिन्नजीवात्मज्ञाने जाते मिथ्याज्ञाननिवृत्त्या मुक्तिरित्युक्तम् । योगास्तु स्वर्गादौ प्रविष्टस्य मनुष्यजन्ममात्रहेतूनां कर्मणामवशेषे सति मानुषं जन्म भवतीति मनुष्याणां संचितकर्म नास्त्येव तत्र मुमुक्षोः काम्यनिषिद्धवर्जं नित्यनैमित्तिकानुष्ठायिनः एकभविकन्यायेन कर्माभावात्साङ्गयोगानुष्ठानेन क्षीणक्लेशस्यासंप्रज्ञातसमाधिजनितेन प्रधानविविक्तपुरुषमात्रविषयेणापरोक्षज्ञानेनानाद्यविवेकलक्षणाविद्यानिवृत्तौ दृष्टृदृश्ययोः स्वस्वामिभावसंयोगनाशादनागतदुःखाभावः पुरुषस्य कैवल्यमित्याहुः । सांख्यास्तु पञ्चविंशतितत्त्वानामभ्यासेनैव विवेकज्ञाने जाते पुरुषस्य स्वास्थ्यमित्याचक्षते । सौगतास्तु सर्वं क्षणिकं शुद्धं दुःखं शून्यमिति चतुर्विधभावनाभिः स्थायित्वकार्यत्वप्रवृत्तिविषयभ्रमेषु क्रमेण क्षीणेषु विशुद्धविज्ञानात्मकचरमक्षणेन सोपप्लवसन्तानोच्छेदो मुक्तिरिति संगिरन्ते । एवमन्ये ऽपि भिन्नात्मज्ञानान्मुक्तिरिति वदन्ति । भवानेवैको ब्रूते ब्रह्मास्मीति ज्ञानान्मुक्तिरिति तत्कथं श्रद्धेयमिति । उच्यते । बहुभिरप्यन्धैरुक्तं न श्रद्धेयं एकेनापि श्रुतिचक्षुषोक्तं श्रद्धेयमेव तथा चेन्द्रो मायाभिः पुरुरूप ईयते इत्यादिश्रुत्या भेदज्ञानस्य भ्रान्तित्वावगमात्तदा ऽऽत्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवदित्यभेदज्ञानस्य मुक्तिहेतुत्वश्रुतेस्तदेव मुक्तिहेतुरित्याह—

ब्रह्मात्मैकत्वविज्ञानं मिथ्याज्ञाननिवर्तकम् ॥ इति ।

नन्वभेदज्ञानमपि न प्रमा किन्तु विश्वेदेवा एव मन इतिवदारोप्यप्रधाना संपत् । यद्वा मनो ब्रह्मेतिवदालम्बनरूपप्रतीकप्रधानो ऽध्यासः वेदस्य कार्यनिष्ठत्वेन वस्तुनि तात्पर्याभावादित्यत आह ।

ऐक्यज्ञानं न सम्पत्स्यान्नाध्यासो वस्तुसत्त्वतः ॥ इति ।

तत्त्वम्पदलक्ष्ययोरैक्ये मानान्तरविरोधाभावात्सर्वेषु वेदान्तेषु ऐक्यम् तत्त्वमसीत्यादिनोपदिश्यानेन जीवेनात्मना ऽनुप्रविश्येत्यादिना प्रवेशार्थवादेन दृढीकृत्याथ ये ऽन्यथा ऽतो विदुरन्यराजानस्ते ऽक्षय्यलोका भवन्तीत्यादिना भेदस्य निन्दितत्वेन प्रक्रमादिना वस्तुनि तात्पर्यावगमादैक्यज्ञानं प्रमा । किञ्च यदि सम्पदादिरूपं स्यात्तर्हि ततो जीवस्य ब्रह्मभावो ऽविद्यानिवृत्तिर्वा न स्यादन्यस्यान्यात्मत्वायोगाद-

प्रमात्वाच्च। तस्मान्न सम्पदादिरूपं ब्रह्मास्मीति ज्ञानं किं त्वखण्डात्मप्रमेत्यर्थः। अत्र कश्चिदखण्डात्मप्रद्वेषी भिन्नाभिन्नो जीव इति जल्पति अत्यन्ताभेदे जीवेश्वरयोर्बद्धत्वानित्यमुक्तत्वव्यवस्था कथमिति मुह्यमानस्तन्मतं दर्शयति—

भिन्नाभिन्नो जीव इति विरुद्धं मानवर्जितम्।
जीवेश्वरव्यवस्थोक्ता मुख्या भेदाज्जलार्कवत्॥ इति।

जातिव्यक्तिगुणगुण्युपादानोपादेयविशिष्टस्वरूपांशांशिभावानां जीवब्रह्मणोरभावान्न भेदाभेदौ। ननु पादो ऽस्य विश्वाभूतानि ममैवांशो जीवलोके इति श्रुतिस्मृतिभ्यामंशांशिभावो ऽस्तीति चेन्न। निष्फलत्वश्रुत्या तस्य कल्पितत्वावगमात्। ब्रह्मणो वस्तुतः सांशत्वे जन्मनाशादिप्रसङ्गात्। घटादिना नभस इव बुद्ध्याद्युपाधिना ऽवच्छेदात् वस्तुतो निरंशस्य ब्रह्मणः सांशत्वं कल्पितमेवेति अंशे जीवे भेदः कल्पित एव न हि सत्यौ भेदाभेदौ एकत्र सम्भवतः विरोधान्मानाभावाच्च। नान्यो ऽतो ऽस्ति द्रष्टेत्यादिना भेदं निषिध्यैष आत्मान्तर्यामीत्यभेदोपदेशाच्च। किं चाङ्गदुःखेनाङ्गिनो देवदत्तस्येवांशिनो ब्रह्मणः सर्वजीवानामंशानां दुःखैर्दुःखित्वं दुर्वारमिति तत्प्राप्तिर्मुमुक्षोरनर्थ एव स्यात् अस्मन्मते तु जीवनानात्वे मुक्तजीवाज्जीवान्तरसंसारस्य कल्पितत्वेनाधिष्ठानब्रह्मासंस्पर्शाद्ब्रह्मभावः पुरुषार्थः जीवैक्ये तु तत्त्वज्ञानान्मूलाविद्यानिवृत्त्या सर्वद्वैतं स्वप्नवन्निवर्तते न च वामदेवादिमुक्त्या ऽधुना संसारोपलम्भो न स्यादिति वाच्यम्। अनन्तातीतकल्पेष्वनन्तजीवानां मुक्तत्वात्संसारोपलम्भस्तवाप्ययुक्तः अतो निरुपाधिकाद्वितीयचैतन्ये त्वयि ब्रह्मणि प्रत्यक्षे बन्धावभासे सोपाधिकचैतन्येषु मुक्तत्वावभासो विभ्रम एव ब्रह्मणो ऽन्यस्य मुक्तावसरेण बन्धायोगात्। न हि ब्रह्मद्वयमस्ति। येन त्वत्तो ऽन्यो बद्धो मुक्तो वा स्यात्। ब्रह्मैकमेव ह्यविद्यया संसरति विद्यया मुच्यते तथा च श्रुतिः ब्रह्म वा इद मग्र आसीत्तदा ऽऽत्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवदिति जीवानां बन्धमुक्तिव्यवस्थायामाग्रहिणस्त्वविद्यांशभेदेन समाधानमुक्तं तस्माज्जीवेश्वरयोः कल्पितभेदेन धर्मव्यवस्था जलस्थार्कयोरिवेत्यनवद्यम्। एवं सति वाक्यादखण्डात्मज्ञानमात्रादेव मुक्तिलाभान्न विधेरवकाशः। ननु ब्रह्मणो ज्ञानक्रियाकर्मत्ववद्ध्येयोपास्तिक्रियाकर्मत्वमपि शङ्कास्पदमिति चेन्न। अन्यदेव तद्विदितादित्यादिश्रुत्या कर्मत्वमात्रनिषेधादित्याह—

न कर्मकारकं ब्रह्म किन्तु शास्त्रात्प्रगीयते ।
चैतन्याविषयो ब्रह्म वृत्तेस्तु विषयो भवेत् ॥ इति ।

अविषये ब्रह्मणि शास्त्रस्य प्रामाण्यं कथमिति शङ्कते । किन्त्विति । तत्त्वमसीति शास्त्रादहं ब्रह्मास्मीत्यखण्डब्रह्माकारं ज्ञानं जायते तेन निवृत्तावरणं ब्रह्मचैतन्यं स्वाध्यस्तामविद्यां निवर्तयति तत आविद्यकं प्रमात्रादिद्वैतं निवर्तते इति निवर्तकत्वेन शास्त्रस्य प्रामाण्यं यद्यपि वाक्योत्थवृत्तिस्थप्रतिबिम्बाकारनिरूपकस्य ब्रह्मणो वृत्तिजन्यावरणादिनिवृत्तिफलशालित्वाद्वृत्तिविषयता ऽस्ति तथापि नोपास्तिविषयता नेदं यदिदमुपासते इति ब्रह्मण उपास्यत्वनिषेधात्अप्यन्यदेवेत्याद्यप्रमेयत्वश्रुतिविरोधः स्वयंप्रकाशे ब्रह्मणि प्रमाणेन स्फुरणं न क्रियते इति चैतन्याविषयत्वपरत्वादित्यभिप्रेत्याह । शास्त्रादिति । असकृदुक्तमपि जीवस्वरूपं वादिविवादाद्दुर्ग्रहं भवतीति मत्वा पुनर्बोधयति—

ब्रह्मैवाविद्यया जीवस्तत्त्वमस्यादिवाक्यतः ।
लक्ष्यैक्यं बोध्यते तस्माद्भेदाभेदो ऽप्रमाणकः ॥ इति ।

ब्रह्मैवाविद्याप्रतिबिम्बितं जीवः तस्य ब्रह्मणैक्यं विरुद्धांशत्यागेन लक्षणया वाक्येन बोध्यते । ननु भिन्नाभिन्नता वाक्यार्थः किं न स्यादिति चेन्न । देहादिविशिष्टः संसार्यहं ब्रह्मणा भिन्नाभिन्न इति ज्ञाने बन्धानिवृत्तेः । न हि भेदांशस्य शास्त्रार्थस्य ध्यानादिना निवृत्तिः कल्पयितुं शक्यते । शास्त्रविरोधात् । ननु ब्रह्म वेद ब्रह्मैव भवतीति फलवाक्यान्मुक्तावत्यन्ताभेद इति चेत् तर्हि अभेदज्ञानादेव भेदनिवृत्तिरिति अभेद एव वाक्यार्थः स्यात् । किञ्च किं भेदाभेदांशद्वयवान् जीवः उत अंशद्वयं आहोस्विद्भेदांश एव जीवः । नाद्यः । अभेदांशस्य ब्रह्मत्वे जीवस्यांशो ब्रह्म स्यादब्रह्मत्वे जीवब्रह्मणोरत्यन्तभेदः स्यात् । द्वितीये किमंशद्वयं भिन्नं उताभिन्नम् अथ भिन्नाभिन्नम् । आद्ये जीवद्वयप्रसङ्गः द्वितीये ब्रह्मैव जीवः स्यात् तृतीये ऽनवस्थानात् । नापि भेदाभेदांशो जीवः अत्यन्तभेदापातात् । अतो भेदाभेदौ दुर्निरूपौ विरुद्धौ धर्म्यादिसापेक्षौ तत्तद्व्यक्तित्वादिना लोकसिद्धौ निष्फलौ मुक्तावनवस्थितौ न शास्त्रार्थः । यत्तु भेदेन कर्माविद्यादिदोषव्यवहारः अभेदेनाहं ब्रह्मास्मीति ज्ञानमोक्षव्यवहार इति तत्प्रलापमात्रम् । दोषवन्तं भेदांशं जीवं प्रति त्वं ब्रह्मेति उपदेशायोगात् । अभेदांशं ब्रह्म प्रति उपदेशवैयर्थ्यात् । सर्वं वस्तु भेदाभेदाभ्यां साङ्कर्यवादिनस्तव न का

चिद्यवस्था अज्ञादावपि विषाभेदेन प्रवृत्त्ययोगादित्यादिदोषभूयिष्ठो ऽयं पक्ष इत्युपेक्षणीयः तस्मान्मायया स्वप्नवत्सर्वव्यवस्था यथादर्शनमुपपद्यते इति अद्वैतवस्तु शास्त्रार्थ इति शोभनम्। एवमहं ब्रह्मास्मीति ज्ञानं न सम्पदादिरूपं नापि भेदाभेदगोचरं किन्त्वखण्डात्मप्रमारूपं तस्य फलं नित्यसिद्धब्रह्मानन्दाभिव्यक्तिरविद्यावरणनिवृत्तिर्मुक्तिशब्दिता तस्या आत्ममात्रत्वादनात्मत्वे ऽपि ध्वंसत्वान्नानित्यतादोषः। यस्य तु विधेयक्रियाफलं मोक्षस्तेनेदं वक्तव्यं मोक्षः स्वर्गवत्कर्तृसमवेतापूर्वफलं वा कर्मकारके ब्रह्मणि विधेयज्ञानक्रियाजन्यउत्पत्त्याद्यतिशयो वेति। आद्ये तारतम्यनित्यत्वादिदोष उक्तः। न द्वितीय इत्याह—

नोत्पाद्यो न विकार्यः स्यान्मोक्षो नित्यत्वदोषतः।
न चाप्यो नापि संस्कार्य आत्मशुद्धागुणत्वतः॥

पिष्टं संयौतीत्युत्पाद्यपिण्डवत्तण्डुलान्पिनष्टीति विकार्यतण्डुलवच्च ज्ञानेन ब्रह्मण उत्पत्तौ विकारे चानित्यत्वं स्यात्। अत्र केचिदाहुः। जीवब्रह्मणोर्भेदसहिताभेदस्तादात्म्यमतिरेकाख्यं स्वाभाविकम् अत्यन्ताभेदस्तु तद्भावो जीवस्य ज्ञानजन्यो मोक्षः स च जन्यत्वे ऽपि क्रियाजन्यत्वाभावान्नित्यः लोके क्रियाजन्यस्यैवानित्यत्वदर्शनादित्याहुः। अत्रोच्यते। किं तद्भावज्ञानात्तद्भावो जन्यते तादात्म्यज्ञानाद्वा आद्येपि ज्ञानं परोक्षमपरोक्षं वा। नाद्यः परोक्षज्ञानात्सर्वेषां तद्भावादर्शनात्। न द्वितीयः ज्ञानजन्यस्य ब्रह्मत्वस्य ज्ञानात्प्रागसत्त्वेन प्रत्यक्षत्वायोगात्। नापि तादात्म्यज्ञानात्तद्भावजन्म तादात्म्यनाशं विना तद्भावायोगात्। न हि भेदे सत्यत्यन्ताभेदो भवति। न च तस्य नाशकमस्ति तादात्म्यज्ञानं च साधकम् न नाशकम् तस्माल्लोके ज्ञानजन्यसंस्कारवन्मोक्षस्यानित्यत्वं दुर्वारमिति संक्षेपः। ननु गन्तुर्ग्रामप्राप्तिवज्जीवस्य ब्रह्मप्राप्तिर्ज्ञानफलमिति चेन्न ब्रह्मण आत्मत्वेन नित्यप्राप्तत्वादनात्मत्वेपि विभुत्वेन नभोवत्प्राप्तत्वात्। ननु सर्वलोकोपरितनं विकारास्पृष्टं ब्रह्म प्राप्यमिति चेन्न। तस्यात्रासत्त्वे मध्यमपरिमाणत्वेनानित्यत्वापातात्। ननु सर्वगतमपि ब्रह्म विकारास्पृष्टत्वेन प्राप्यमिति चेत्। केयं प्राप्तिर्न तावज्जीवस्य भिन्नस्य ब्रह्मत्वोत्पत्तिः। भिन्नयोरैक्यायोगान्नापि संयोगः अनित्यदोषात्। तस्मान्न प्रदेशान्तरवर्तिब्रह्मप्राप्तिर्मुक्तिरिति। यत्तु तयोर्ध्वमायन्नमृतत्वमेति स एनान् ब्रह्म गमयतीति मूर्द्धन्यनाड्यार्चिरादिमार्गेण गन्तॄणां प्रदेशान्तरे निर्गुणप्राप्तिर्मुक्तिः श्रूयते नपुं-

सकब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वादिति । तन्न यः सर्वज्ञः सर्वविस्त-स्मादेतद्ब्रह्म जायते इत्यादिश्रुतौ कार्यब्रह्मण्यपि प्रयोगमुख्यत्वात्तस्य शब्दस्य । किञ्चामानवः पुरुष एतानुपासकान्ब्रह्मलोकान् गमयतीति बहुवचनान्तलोकशब्दाल्लोकेषु ते वसन्तीत्याधारत्वलिङ्गात् । ऐरंमदी-यं सरः इरा ऽन्नरसस्तत्कृतमैरं मदकरं सर इति सरोलिङ्गात्तु अश्वत्थः सोमसवनः सुधावर्षी अपराजिता पूस्तत्र हिरण्मयं वेश्मास्ति प्रजा-पतेः सभेत्यादिबहुलिङ्गेभ्यः कार्यलिङ्ग[1] प्राप्तिरेवोपासकानामिति नि-श्चीयते । किञ्च यद्यर्चिरादिमार्गेण गन्तॄणां निर्गुणप्राप्तिस्तदा पञ्चा-ग्निगायत्रीशाण्डिल्यषोडशकलोपकोसलवैश्वानरभूमदहरपर्यङ्कादिवि-द्यानां गुणतारतम्यादुपचयापचयौ व्यर्थौ स्यातां कार्यब्रह्मप्राप्तौ तु फलस्य तारतम्यसम्भवात् सफलौ स्याताम् । किं च निर्गुणब्रह्मरू-पस्य मुक्तस्य संकल्पादेव पित्रादयः समुत्तिष्ठन्तीति विरुद्धम् । किं च य उपरि गत्वा ब्रह्म भवति स जीवो ऽणुर्विभुर्मध्यमपरिमाणो वा आद्ये कथमणोर्ब्रह्मत्वं द्वितीये गत्ययोगः तृतीयेपि नाशिता । ननु ब्रह्मै-वोपाधिपरिच्छिन्नं जीव इत्युपाधिगत्या गतिरिति चेन्न । उपाधिना ऽन-वच्छिन्नस्य निरवयवस्योद्धृत्य नयनायोगादुद्धरणे चायं देशो ब्रह्मशू-न्यः स्यात् उपाधेरपि उपादानस्य ब्रह्मणो निश्चलत्वेन गमनायोगा-त् न हि निश्चलायां मृदि घटस्य गमनं दृष्टं तस्मात्स्वप्नवद्गमनागमना-दिसंसारो विभ्रम इत्यज्ञानध्वंसे सत्यत्रैव मुक्तो ब्रह्मात्मना ऽवतिष्ठते न तस्य प्राणा उत्क्रामन्ति अत्र ब्रह्म समश्नुते इति श्रुतेर्न देशान्तर-ब्रह्मप्राप्तिर्मुक्तिरिति । अस्तु तर्हि ज्ञानेन संस्कार्यं ब्रह्मेति चेन्न । स्वतः-शुद्धे ब्रह्मणि दोषाभावेन तन्निवृत्तिरूपसंस्कारायोगान्निर्गुणत्वे गुणा-धानायोगाच्च । शुद्धत्वे निर्गुणत्वे च शुद्धमपापविद्धं केवलो निर्गु-ण इति श्रुतिर्मानम् । ननु तार्क्ष्यध्यानाद्विषनिवृत्तिवद्ब्रह्मध्यानाज्जीव-गतानाद्यविद्यामलनिवृत्तिः किं न स्यादिति चेन्न । लोके ज्ञानैकनिर-स्यत्वादविद्यायाः । ननु शास्त्रीयैः कर्मभिरात्मनो गुणरूपः संस्कारः श्रूयते इति चेन्न । साभासबुद्धिरूपाहङ्कारस्यैव कर्मकर्तृत्वेन संस्का-रफलभाक्त्वात्तस्मान्न ब्रह्मसंस्कारो मोक्ष इति । एवं मोक्षस्य क्रिया-फलत्वायोगाज्ज्ञानैकसाध्यत्वमिति सिद्धम् । ननु क्रियाज्ञानयोः को भेदः ज्ञानस्यापि मानसत्वेन ध्यानादिवत्क्रियात्वादित्यत आह—

क्रियाविलक्षणं ज्ञानं संयोगादिविलक्षणा ।

(१) कार्यब्रह्मप्राप्तिरित्यपि पाठान्तरम् ।

क्रिया प्रत्यक्षतो ज्ञेया नानुमेयेति साधितम् ॥

ज्ञानस्य फलं स्फुरणं नित्यं कर्मफलं जडमनित्यमिति फलतो वैलक्षण्यं विध्यधीनपुरुषेच्छाजन्यप्रयत्नसाध्या क्रिया विषयानपेक्षा च यथा योषाग्निध्यानम् । ज्ञानं तु न पुरुषकृतिजन्यं किन्तु प्रमाणवस्तुपरतन्त्रम् । यथा ऽग्नावग्निज्ञानमिति महान्भेदस्तयोरित्यर्थः । अत्र कश्चिदाह । संयोगविभागाभ्यामन्या क्रियैव नास्तीति । न चैवं श्येनसंयोगविभागवति स्थाणौ चलतीति बुद्धिः स्यादिति वाच्यम् । तयोराधेये द्रव्ये चलनबुद्धिविषयत्वात् । स्थाणोः श्येनं प्रत्याधारत्वात् । श्येनस्तु आधेयत्वाच्चलतीति बुद्धिविषयः पक्षिणामप्याकाशाधारनिरूपितौ संयोगविभागौ चलनबुद्धिविषय इति तन्न आकाशस्याचाक्षुषत्वेन तन्निरूपितयोस्तयोश्चलति पक्षीति चाक्षुषबुद्धिविषयत्वायोगात् । न गाढान्धकारे नभोज्ञानाभावेन खद्योतश्चलतीति बुद्ध्ययोगात् । गङ्गाप्रवाहादौ सुस्थिरे मकरे जलसंयोगादिमत्याधेये चलतीति बुद्धिप्रसङ्गाच्च । तस्मात्संयोगादिविभागाभ्यामन्या क्रिया ऽस्तीत्याह । संयोगादीति । प्राभाकरास्तु ताभ्यामनुमेया क्रिया न प्रत्यक्षेत्याहुः । तथा हि संयोगाजन्यः संयोगः स्वाश्रयगतकादाचित्कातिशयजन्यः स्वसमकालमनुत्पन्नद्रव्यनिष्ठत्वे सति कादाचित्कत्वात् पाकजरूपादिवदिति संयोगेनार्थान्तरतानिरासार्थं संयोगाजन्य इति पक्षविशेषणम् । क्षणनिरासार्थं स्वाश्रयगतेति सत्तादिनिरासार्थं कादाचित्केति । वेदान्तिमते द्रव्यसहोत्पन्नगुणेषु व्यभिचारनिरासार्थं सत्यन्तम् । नभोगतपरिमाणादिनिरासार्थं कादाचित्कत्वादिति । तदयुक्तं किं यावदाश्रयगतातिशयः साध्य उताश्रयगतः नाद्यः अन्यतरकर्मजसंयोगे व्यभिचारात् । न द्वितीयः कर्मासमवायिकारणादेव संयोगजन्मसंभवेनाप्रयोजकत्वाद्यथाप्रयत्नवदात्मसंयोगात्पादसमवेताद्भूपादसंयोगः किं बहूक्त्या । कर्मणो यत्कार्यं तत्कर्मकरणादेव सुसम्पादमिति नानुमानात्कर्मसिद्धिः । किन्तु प्रत्यक्षादित्याह । प्रत्यक्षत इति । शब्दविद्युदादिवदाशुतरविनाशित्वे ऽपि क्रियायाः प्रत्यक्षत्वसम्भव इति भावः । एवञ्च वेदान्तविज्ञानसुनिश्चितार्था इति सम्यग्ज्ञानस्य मुक्तिहेतुत्वावगमात्क्रियाविलक्षणमेव ज्ञानं मोचकमिति न तत्र विधेरवकाशः । नन्वात्मन्येवात्मानं पश्येदात्मा द्रष्टव्य इति ज्ञाने विधयः श्रूयन्ते इति चेत्सत्यम् अशक्ये ज्ञाने नियोगासम्भवात्फलरूप आत्मा तैः स्तूयते बहिर्मुखबु-

लेभौ बहुपुण्यपुञ्जलभ्यो ज्ञानलभ्यो ऽयमात्मेति एवं स्तुतौ तदर्थी विषयविमुखः सन् श्रवणादौ प्रवर्तते यद्वा द्रष्टव्य इत्यर्हार्थे कृत्यप्रत्ययः पश्येदिति वाक्यं शान्त्यादिविधिपरम् आत्मानमेव लोकमुपासीतेति वाक्यं तूपासीतेतिपदेनाहमहमित्यात्मज्ञानधारानुवादेनैवकारेणानात्मांशं निषिद्ध्य केवलात्मविषयपरं भवति तस्माद्वेदान्तेषु विधेयक्रियातत्फलयोरभावान्न विधिशेषतया ब्रह्मप्रमितिः किन्तु स्वप्राधान्येनेत्युपसंहरति—

ज्ञाने श्रुतो लिङादिः स्यात्स्तावको ऽर्हार्थ एव वा ।
एवं ब्रह्मणि मानत्वं वेदान्तानां प्रसाधितम् ॥ इति ।

एवं तावत्समन्वयसूत्रस्य प्रथमवर्णके वेदान्तानां मानान्तरानपेक्षत्वं द्वितीयवर्णके विध्यनपेक्षत्वं सफलत्वं चोक्तम् अधुना वर्णकद्वयार्थं आक्षिप्य समाधत्ते—

ये तु सिद्धार्थको वेदो नास्तीत्युच्चैर्वदन्ति ते ।
तन्त्वौपनिषदंश्रुत्या बाध्याः स्मृत्या च संविदा ॥ इति ।

किमहं कर्ता वेदान्तैः प्रतिपाद्यः किं वा तदन्यः आद्ये तस्य कर्मकर्तृत्वाद्विधिशेषता न द्वितीयस्तदन्यस्यानात्मत्वादात्मत्वे कर्मशेषतायाः दुरपन्हवत्वात्तथापस्तम्बो ऽपि वेदानां कार्यार्थतां दर्शयति त्रैविद्यवृद्धानां वेदाः प्रमाणमिति निष्ठा तत्र यानि श्रूयन्ते व्रीहियवादीनि तैरुच्चैर्नीचैःफलाय कर्म कार्यमिति शङ्कार्थः । त्रैविद्यं वेदाः । सिद्धान्तस्तु अहङ्कारादन्यस्तत्साक्षी ब्रह्मत्वेन प्रतिपाद्यते । न च तस्याङ्गत्वं भवति नाप्यङ्गत्वे मानमस्ति वेदान्तवाक्यस्यापूर्वब्रह्मात्मपरत्वात् । तेनैवात्मनः कर्माङ्गत्वबोधने वाक्यभेदापत्तेः आपस्तम्बवाक्यं तु कर्मकाण्डपरं तन्त्वौपनिषदं पुरुषं पृच्छामि सर्वे वेदा यत्पदमामनन्तीति श्रुत्या वेदैश्च सर्वैरहमेव वेद्य इत्यादिस्मृत्या च सिद्धस्य ब्रह्मण एव सर्ववेदार्थत्वावगमात्कर्मकाण्डस्यापि शुद्धिद्वारा ब्रह्मप्रतीतेश्च । न च सा भ्रान्तिर्बाधाभावात् न ह्यात्मनो ऽत्यन्ताभावः प्रमातुं शक्यते प्रमातुरभावात् अतः सर्वसाक्ष्यबाधितो वेदान्तार्थ इत्यर्थः । यत्तु प्रवृत्तिलिङ्गानुमितज्ञानविषये कार्यार्थे सङ्गतिग्रहादाम्नायस्य क्रियार्थत्वादिति सूत्राच्च वेदान्ताः कार्यपराः सिद्धार्थे शक्त्यभावादिति तन्न सूत्रहृदयज्ञैर्भट्टपादैरभिहितान्वयस्य दर्शितत्वात् । तथा हि गामानयेति वाक्यप्रयोगसमनन्तरभाविमध्यमनरप्रवृत्तिलिङ्गानुमितप्रवर्त्तकज्ञानविषयतया ज्ञातं ऽपि कार्यसंसृष्टार्थे पदानां शक्तिः गां बधा-

नेति प्रयोगे आनयनकार्यास्पृष्टपिण्डमात्रान्वयादतो गोपदस्याव्यभिचाराद्गोमात्रं शक्यम् एवं सर्वपदानां सिद्धे कार्ये वा शुद्धार्थे शक्तिः पदैरभिहितैः शुद्धार्थैः संसर्गो बोध्यते इत्यभिहितान्वयवादः। पदानां पदार्थस्मृत्यन्यथासिद्धत्वादर्थानां करणत्वमित्यभिमानः। अस्मिन् मते त्वक्रियार्थानां शब्दानामानर्थक्यं नाम फलाभाव एव। न त्वर्थाभावः शुद्धार्थस्य सत्त्वात्। तथा च यस्मिन्वाक्ये स्वार्थफलाभावस्तस्याप्रामाण्यपरिहाराय सफलविधिशेषत्वं वाच्यमिति जैमिनेर्हृदयम्। एवञ्च सो ऽरोदीदित्यादिवाक्यानां विधिशेषत्वं न्याय्यं न वेदान्तानां स्वार्थे ब्रह्मणि मुक्तिफलसत्त्वादिति मत्वा ब्रूते—

भट्टपादा जगुः स्पष्टं शुद्धार्थे पदसङ्गतिम्।
अर्थैः संसर्गधीरेषा ऽभिहिता ऽन्वयवादिता॥ इति॥

प्राभाकरास्तु व्युत्पित्सुना प्रवृत्तिलिङ्गानुमिते कार्यसंसृष्टार्थज्ञाने ऽन्वयव्यतिरेकाभ्यां वाक्यस्य सामर्थ्यावगमात्कार्यसंसृष्टार्थे पदानां संमुग्धशक्तिरवगता पश्चादावापोद्धाराभ्यां कार्यान्वितगवि गोपदशक्तिरवगम्यते न शुद्धार्थे कार्यविशेषस्य व्यभिचारे ऽपि कार्यमात्रस्याव्यभिचारादन्यथा पश्चाच्छुद्धार्थे शक्तिग्रहे संमुग्धव्युत्पत्तिबाधात्पदार्थानां संसर्गधीकरणत्वकल्पनागौरवाच्च तत्कार्यान्विते शक्तिरित्याहुः। अत्रोच्यते क्रियातिरिक्तं कार्यं तच्च लोके वक्तुरिच्छारूपं वेदे त्वपूर्वमिति तव मतम्। तत्र यदि कार्यान्विते सर्वेषां पदानां शक्तिस्तदा शुक्लां गामानयेत्युक्ते गवि गुणकर्मकारकक्रियाभिः संसर्गाः क्रमेण शब्दैर्न प्रतीयेरन् शब्दानां तत्राशक्तत्वात्। अतस्तत्प्रतीतिनिर्वाहार्थमितरान्विते ऽर्थे शक्तिरिति युक्तम्। न चैवं सति संसर्गभेदाद्वाक्यभेदः स्यादिति वाच्यम्। अवान्तरसंसर्गनानात्वे ऽपि प्रधानसंसर्गस्यैकत्वात् न चाव्यभिचारात्कार्यान्विते शक्तिरिति वाच्यम्। वक्तृज्ञानस्यापि अव्यभिचारात्। न च वक्तृज्ञानस्य प्रयोगे हेतुत्वेनैवान्वयो ऽन्यथासिद्ध इति न शक्यत्वमिति वाच्यम्। कार्यान्वयस्यापि प्रवृत्तावन्यथासिद्धत्वेन शक्यत्वात् राजपुत्रः पीतवासाः सुरूपः स्नात्वा भुक्त्वा क्रीडतीत्यादिभूतार्थवाक्येषु कार्यस्य व्यभिचाराच्च। न च कार्यं विना राजपुत्रादेर्भूतार्थस्य द्रव्यगुणादिभिः संसर्गो न भातीति युक्तमनुभवविरोधाद्वक्तृश्रोत्रोरनपेक्षितस्य कार्यस्याध्याहारे कल्पनागौरवादतः कार्यं विना भूतसंसर्गानुभवाल्लाघवाच्च योग्येतरान्वितत्वं शक्यतावच्छेदकम्। न च ततो ऽपि लाघवाच्छुद्धार्थे शक्ति-

रिति वाच्यम् । पदात्सामान्यान्वयप्रतीतावन्वयप्रतियोगिविशेषाकाङ्क्षानुपपत्तेः । न च पदार्थत्वेनान्वयानुमानादाकाङ्क्षेति वाच्यम् । झटित्याकाङ्क्षानुभवविरोधात् । शब्दश्रवणानन्तरं नियमेनानुमानकल्पनायां शब्दाप्रामाण्यापाताच्च । वृत्तिं विना शब्दानामबोधकत्वात्संसर्गबोधस्य शाब्दत्वप्रसङ्गाच्चेत्यलम् । किञ्च कार्ये कार्यान्वयाभावादितरान्वितत्वं शक्यतावच्छेदकम् । न च तत्रापि धात्वर्थयागादिरूपकार्यान्वयोऽस्तीति वाच्यम् । यजेतेति लिङा नियोगाख्यकार्यबोधक्षणे यागे कार्यत्वाप्रतीतेः । धात्वर्थमात्रान्वितकार्यप्रतीत्युत्तरकालत्वाद्धात्वर्थे कार्यताप्रत्ययस्य । तथा चान्योन्याश्रयः । लिङर्थज्ञाने सति धात्वर्थे कार्यताज्ञानमस्मिन्सति लिङर्थज्ञानमिति । न च कार्यान्वयाश्रयत्वं कार्येऽप्यस्तीति तदेवावच्छेदकमिति वाच्यम् । पदात्तत्प्रकारकबोधादर्शनात्पदजन्यज्ञानाविषयस्यानवच्छेदकत्वात्तस्येतरान्वयापेक्षया गुरुत्वाच्च । किञ्च लोके निघण्ट्वादिना सिद्धेऽर्थे संगतिग्रहान्न कार्ये सर्वशब्दार्थः । तस्मादितरान्वितः शब्दार्थ इति सिद्धम् । एतेन गामानयेत्यत्र गोपदस्येतरान्वितशक्तावनेकेतरसंसर्गाणां पदार्थत्वादयं संसर्गो वाक्यार्थ इति नियमो न स्यात् । न चानयनान्वित एव गोपदार्थ इति वाच्यम् । आनयेतिपदवैयर्थ्यापत्तेः । विशेषाणामानन्त्येन तदन्वितार्थे शक्तेर्दुर्ग्रहत्वात्सर्वपदानां पर्यायतापत्तेश्च । न चाभिहितेतरान्विता गौः पदार्थस्ततश्चेतराभिधानार्थमानयपदमर्थवदिति वाच्यम् । आनयपदस्याप्यभिहितेतराभिधायित्वेनान्योन्याश्रयात् । गोत्वेऽभिहिते तत्संसृष्टानयनाभिधानम् आनयनेऽभिहिते तत्संसृष्टं गोत्वाभिधानमिति । तस्मान्नेतरान्विते शक्तिर्नापि विशेषान्विते नाप्यभिहितान्वितेऽतः परिशेषात्कार्यान्विते शक्तिरिति निरस्तम् । गोपदादितरान्वितगोरभिधाने सतीतरविशेषाकाङ्क्षायामानयनपदेनानयनमितरान्वितमभिधीयते । तयोरभिहितयोर्विशेषयोरितरेतरसंसर्गो वाक्यार्थ इति सिद्धम् । तस्य निर्दोषत्वात् । यत्तु पदातिरिक्तवाक्याभावात्पदानां क्षणिकत्वात् न संसर्गबोधे करणत्वं किन्तु स्थायित्वात्पदार्थानां करणत्वमिति तदतिमन्दम् । अनभिहितार्थानां करणत्वे सदा बोधप्रसङ्गात् । न चाभिहितानां करणत्वम् । अन्त्यपदार्थाभिधानक्षणे पूर्वाभिधानां स्मृतिरूपाणां नष्टत्वात् नचान्त्ये समूहालम्बनस्मृत्युपारूढा अर्थाः करणमिति वाच्यम् । पदानामपि तथा करणत्वोपपत्तेः पदार्थस्मृतेर्व्यापारत्वेनाव्यवधायकत्वादन्यथा वाक्यार्थस्याशाब्दत्वापत्तेरित्यलं विस्तरेण । एतत्सर्व-

मभिप्रेत्याह—

प्राभाकरास्तु कार्येण संसृष्टे शक्तिवादिनः ।
अस्माकमन्विते शक्तिर्लाघवाद्युपपत्तिभिः ॥ इति ।

यत्तु तद्भूतानां क्रियार्थेन समाम्नाय इति सूत्रात्कार्ये सर्वशब्दार्थ इति तन्न । तद्भाष्यकारेण शुक्लः पटः खण्डो गौरित्येवं सिद्धार्थे वर्तमानानां पदानां समाम्नायः सामानाधिकरण्याद्यर्थत्वेनोच्चारणमिति दर्शितत्वात् । क्रियार्थेनेत्युक्तिस्तु धर्मविचारस्य प्रस्तुतत्वादुपपद्यते । कर्मकाण्डे निष्फलस्य भूतसर्गस्य क्रियार्थत्वाद्यदि पुनर्जैमिनेः कार्यमेव वेदार्थ इति मतं स्यात्तदार्थे ऽनुपलब्धे तत्प्रमाणमित्युक्तिर्न स्यात् तद्गुरुणा भगवता व्यासेन वेदान्तानामखण्डार्थे तत्तु समन्वयादित्यादिना तात्पर्यं निरूपयितुं पृथक् शास्त्रं नारभ्येतेत्याह—

व्यासेन पृथगारम्भात्सिद्धार्थे वेद इष्यताम् ।
व्यासोक्तार्थे जैमिनेस्तु विमतिर्न कदा चन ॥ इति ।

इतरान्वितशब्दार्थ इत्युभयोः संमतं तन्त्रभेदस्तु सिद्धसाध्यरूपप्रतिपाद्यभेदादिति भावः । ननु सामान्यान्वयः पदार्थो विशेषान्वयो वाक्यार्थ इति स्थिते कथमखण्डार्थत्वमिति चेदुच्यते । सैन्धवघन एवेत्येकरसत्वावधारणादतो ऽन्यदार्तमित्यन्यस्य नाशित्वेन कल्पितस्य तत्त्वावेदकवाक्योत्थज्ञानाविषयत्वानुपपत्तेर्लक्षणया ऽखण्डार्थत्वम् । न च प्रथमाविभक्त्यर्थसंसर्गः तस्याः पाणिन्याचार्येण प्रातिपदिकार्थमात्रे स्मरणात् । यत्तु क्रियान्तराभावे ऽपि अस्त्यर्थेन क्रियासंसर्गः सर्वत्रास्ति अस्तिभवतिपरः प्रयोक्तव्यः इति कात्यायनस्मरणात् । भवतिपरः लडन्त इत्यर्थः इति तन्न । वने सिंह इत्यादौ प्रथमायोगे यत्र क्रियाकाङ्क्षा तत्रास्तिः प्रयोक्तव्यः यत्र तु अमी द्रुमाः फलिता इति विशेषणे तात्पर्यं तत्र नैवास्तिक्रियासम्बन्धः निराकाङ्क्षत्वात् । एवं सत्यादिवाक्यैरखण्डार्थबोधे निराकाङ्क्षितत्वान्न क्रियासम्बन्ध इति सिद्धान्तः । एवं तावदितरान्वितशक्तिकथनेन वेदान्तानां सिद्धार्थे प्रामाण्यमुक्तमिदानीं ब्राह्मणो न हन्तव्य इत्यादिनिषेधवाक्यवद्वेदान्तानां सिद्धार्थनिष्ठत्वमित्याह—

कार्यं निषेधशास्त्रे स्यादुर्लभं कूर्मदुग्धवत् ।
तद्वद्वेदान्तशास्त्रस्य सिद्धार्थे मानता स्थिता ॥ इति ।

नञस्तावदभावो मुख्योर्थः । नेक्षेतोद्यन्तमादित्यमित्यत्र तु तस्य ब्रह्मचारिणो व्रतमित्यनुष्ठेयवाचिव्रतशब्दादीक्षणविरोधिनी नेक्षे ऽह-

मिति सङ्कल्पक्रिया नञा लभ्यते। ननु "नामधात्वर्थयोगी तु नैव नञ् प्रतिषेधकः । वदत्यब्राह्मणाधर्मावन्यमात्रविरोधिना"विति वार्तिके तदन्यतद्विरुद्धयोरपि नञर्थत्वमुक्तमिति चेत्सत्यम् । नञर्थाभावसम्बन्धादन्यविरुद्धौ लक्ष्यावित्येतत्परत्वात् । लक्षणया तल्लाभे शक्यत्वकल्पना ऽयोगात् । निषेधवाक्ये तु लक्षणायां कारणाभावादभाव एवार्थ इति न सर्ववाक्यानां कार्यपरत्वम् । अत्राह प्राभाकरः । न ब्राह्मणस्याभावो नञर्थः प्रत्यक्षविरोधान्नापि हन्त्यर्थस्याभावः हननस्य प्राप्तत्वात् । नापि तव्यप्रत्ययस्याभावोऽर्थः । हनने कार्यत्वस्येष्टसाधनत्वस्य वा सत्त्वात् । तस्मादभावरूपार्थासम्भवाद्धननविरोधिसङ्कल्पो नञर्थो विधेयो ऽहननं कुर्यादिति । तस्मात्कार्यनिष्ठमिदं वाक्यमिति । उच्यते । हननप्रागभावो नञर्थः । न हन्तव्यम् हननाभाव इष्टसाधनमित्यर्थः । इष्टश्चागामिदुःखाभावस्तस्य प्रयोजको हननाभावः। कारणाभावस्य कार्याभावपरिपालकत्वात्। न च हननाभावे नियोगः प्रत्ययार्थ इति वाच्यम् । अभावस्यानादित्वेनाननुष्ठेयत्वात् । अथ वा प्रत्ययार्थस्येष्टसाधनत्वस्याभावो नञर्थः । ननु हननादिष्टं दृश्यते इति चेत्सत्यं न तदिष्टं बलवदनिष्टानुविद्धत्वात् । बलवदनिष्टाननुविद्धमिष्टमित्याचक्षते वृद्धास्तथा च हन्तव्यो न हननं बलवदनिष्टाननुबन्धीष्टसाधनं नेति प्रत्ययानुदितस्य विशिष्टस्य निबन्धे सति अर्थाद्बलवदनिष्टानुबन्धि हननमिति बुद्धिर्भवति । तया हनने विशिष्टेष्टसाधनत्वभ्रमो निवर्तते ।ततस्तद्भ्रममूलयो रागप्रयत्नयोरात्यन्तिकनिवृत्तिरूपमौदासीन्यं भवतीति निषेधवाक्यम् नञर्थे ऽभावे सिद्धरूपे पर्यवसितं तद्वेदान्तानां सिद्धार्थनिष्ठत्वमित्यर्थः । किञ्च विधिवाक्ये ऽपि नापूर्वनियोगाख्यं कार्यं प्रत्ययार्थः । येन तत्र वेदस्य तात्पर्यं स्यात् कुत इति चेदप्रसिद्धत्वेन लोके तत्र लिङादेः सङ्गत्यग्रहात् । ननु लोके धात्वर्थकार्यतायां सङ्गतिग्रहात्स्वर्गकामिकृतिसाध्यता यागादौ लिङा प्रतिपन्ना सती तत्रेष्टा स्वर्गसाधनत्वं कल्पयति ततः क्षणप्रध्वंसिनः स्वर्गसाधनत्वानुपपत्त्या कल्पिते नियोगे सङ्गतिग्रह इति चेन्न । बकबन्धप्रयासान्नियोगः स्वविषये यागे कार्यता बुद्धिहेतुरिति ते मतम् आदावेव चेल्लिङा सा लब्धा किं कल्पितनियोगेन सङ्गतिप्रयासेन। न हि बके लब्धे तच्छिरसि नवनीतप्रक्षेपायासः फलवान् ।'अथ यागादौ प्रतिपन्नकार्यतानिर्वाहार्थमेवापूर्वं कल्प्यतामिति चेत्कामं कल्प्यतामन्यलभ्यत्वान्न तस्य शब्दार्थत्व-

मिति वदामः। इष्टासाधनता विध्यर्थ इत्युक्तम् न विस्मर्तव्यमिति सङ्क्षेपः। यत्तु श्रुतब्रह्मणो ऽपि यथापूर्वं संसारदर्शनान्न ज्ञानमात्रान्मुक्तिरिति तत्राह—

ब्रह्मात्मावगतौ सत्यां संसारः पूर्ववन्न हि।
अज्ञानमूलः संसारो ज्ञाने सति कथं भवेत्॥ इति।

अवगतिः साक्षात्कारः। ननु कर्मनिमित्तः शरीरबन्धः आत्मनः कर्मणैव निवर्तनीयो न ज्ञानेनेत्यत आह। अज्ञानेति। असङ्गकूटस्थात्मनि कर्मासम्भवादनाद्यनिर्वचनीयाज्ञानमूलैः कामकर्मभिः संसारो वाच्यः। अतो ज्ञानेन मूलध्वंसान्न ज्ञानिनः संसारः तत्र को मोहः कः शोक एकत्वमनुपश्यत इत्याद्याः श्रुतयो ऽपि ज्ञानमात्रान्मुक्तिं दर्शयन्तीति भावः। ननु तर्हि ज्ञानिनो द्वैतदर्शनं कथमित्यत आह—

ज्ञानात्सर्वस्य नाशे ऽपि प्रारब्धं न निवर्तते।
देहे सत्यपरोक्षा धीर्व्यासादीनां यथा तथा॥ इति।

करतलीकृतब्रह्मतत्त्वस्यापि प्रारब्धकर्मास्ति तस्य तावदेव चिरमिति श्रुत्यैतत्सङ्घातध्वंसरूपे विदेहकैवल्ये विलम्बश्रवणादेतच्छ्रुतिबलात्क्षीयन्ते चास्य कर्माणीति सामान्यश्रुतिः प्रारब्धकर्मातिरिक्तकर्मविषया। न चाज्ञाननाशे तदुपादानकं प्रारब्धं कथं तिष्ठेदिति वाच्यम्। अंशभेदादज्ञानस्य ह्यावावरणविक्षेपावंशौ तत्रावरणाज्ञानांश एव ज्ञानात्सद्यो निवर्तते ज्ञानेन समानं विषयतया विरोधाद्विक्षेपकाज्ञानांशस्तु यावत्प्रारब्धमवतिष्ठते छिन्नमूलवृक्ष इव यावत्त्वक्सारम्। ज्ञानाभिव्यक्तचैतन्यात्मके निवर्तके सत्यपि प्रारब्धप्रतिबन्धाद्वा तन्निर्वाहकाज्ञानांशानिवृत्तिः अतः प्रारब्धदोषबलाद् व्युत्थानदशायां द्वैतदर्शनमिति भावः। अत्राह जीवन्मुक्तिद्वेषी नास्त्येव सशरीरस्यापरोक्षात्मज्ञानमिति तत्राह। देहे सतीति। अस्तीति शेषः। न ह्यन्धेनेव चक्षुष्मता रूपदर्शनं नास्तीति वक्तुं शक्यमप्रतिबद्धसामग्रीसत्त्वादतो निबिडपापमण्डलीजडीकृतस्वान्तस्य ध्वान्तध्वंसिज्ञानभानुजनुरभावे ऽपि बहुजन्मनिचयसञ्चितभगवदपचितिवञ्चितपञ्चक्लेशमलमानसानां महानुभावलब्धमहावाक्यानां सत्येव शरीरे ज्ञानमुत्पद्यते। उपपद्यते चोक्तयुक्त्या जीवन्मुक्तिशास्त्रं तद्यथा ऽहिनिर्ल्वयनी अभयं वै जनकप्राप्तो ऽसि क्षीयन्ते चास्य कर्माणीत्यादि स्मर्यते च व्यासवसिष्ठादयो जीवन्मुक्ता इति। ननु ज्ञानिनो देहदर्शनसत्त्वे कर्माधिकारः स्यादित्यत आह—

ज्ञानिनो न नियोगः स्या [1]न्न स्वेष्टाचरणं तथा ।
मननादिनियोगस्य ज्ञानात्पूर्वं गतत्वतः ॥ इति ।

अविद्यावद्विषयं शास्त्रमित्युक्तम् । ज्ञानिनः कर्मकरणाध्यासाभावात्तत्फलानपेक्षत्वाच्चेति । न च विधिनिषेधातीतत्वे यथेष्टचेष्टाप्रसङ्गस्तत्रापि रागस्य हेतुत्वात् न हि निरस्तसमस्तानर्थानन्दाब्धिमग्नचित्तस्यान्यत्र रागः सम्भवति । ननु ज्ञानिनः कर्म नास्तीति कथं श्रवणानन्तरं मननादिविधिरिति चेत्किं तावता न हि श्रवणमात्रादपरोक्षज्ञानमस्ति अतस्तदर्थमेव मननादिविधानम् । अतो वाक्यार्थानुभवे सति न किञ्चित्कार्यमस्ति येन विधिपरा वेदान्ताः स्युः । सर्वज्ञबादरायणेन पृथक् शास्त्रं नारभ्येत । यदि बाह्यान्तरसाधनविधिभेदाच्छास्त्रभेदस्तर्हि अथातः परिशिष्टमानसधर्मजिज्ञासेत्यारभ्येत अतो ब्रह्मजिज्ञासेत्यारब्धत्वाद्ब्रह्मपरा वेदान्ता इति सिद्धम् । अत्राह सर्वसंकरवादी सत्यो भेदो नाभेदज्ञाननिवर्त्यो ऽविरोधात्किन्त्वभेदाध्यासरूपात्कर्मणो भेदनाश इति तन्न । मानाभावात् । ब्रह्म वेद ब्रह्मैव भवतीति ज्ञानैकनिवर्त्यत्वावगमादविरोधे तदभ्यासादपि निवृत्त्ययोगात् । विरोधे तु नोभयोः सत्यत्वं खण्डो गौरित्यादिप्रत्ययानां कल्पितभेदविषयत्वात् बहुधा निरस्तो ऽयं भेदाभेदवाद इत्युपेक्ष्यते । तार्किकाभिमतात्यन्तभेदवादस्तु मानयुक्तिहीनः । तथा हि सर्वदेहेष्वहमित्येकाकारप्रत्यय आत्मैक्ये प्रमाणम् । विवादग्रस्ता देहास्त्वद्भोक्तृकाः जीवदेहत्वात्त्वद्देहवत् इत्याद्यनुमानमेको देवः एक एव हि भूतात्मा भूते भूते व्यवस्थित इत्यादिरागमः सुखदुःखादिवैचित्र्यं त्वन्तःकरणभेदादुपपद्यते द्वा सुपर्णेत्यादिश्रुतिस्तु कल्पितभेदमनूद्यानश्नन्न्य इति वाक्यशेषेणासंसारित्वं बोधयति । नान्यो ऽतो ऽस्ति द्रष्टेत्यादिना भेदस्य निषेधाच्च कल्पितत्वं धर्मिप्रतियोगिसापेक्षत्वाच्च । तथा हि प्रतियोग्यवृत्तित्वेनानुयोगिवृत्तेर्धर्मस्य ज्ञानं भेदज्ञाने कारणं घटत्वं पटे नास्तीति जानत एव घटः पटो न भवतीति प्रतीतेरजानतो ऽप्रतीतेरनुयोगितावच्छेदकस्य धर्मस्य प्रतियोग्यवृत्तित्वज्ञानं तु भेदज्ञानाधीनमिति अन्योन्याश्रयात् । प्रातिभासिक एव भेदो ऽभेदस्तु न भेदाभावः किन्तु ँ द्भ्रमहेत्वज्ञानाधिष्ठानवस्तुस्वरूपः । तस्मादद्वैतवस्तुसाक्षात्कारमात्रात्सर्ववस्तुद्वैतनिवृत्तिर्युज्यते इत्याह—

---

(१) स्याद्यथेष्टाचरणं तथेति पाठान्तरम् ।

भेदाभेदौ न सत्यौ स्तो ऽभेदः सत्यो मृषा भिदा ।
अभेदाज्ञानजं सर्वं तज्ज्ञानाद्धिनिवर्तते ॥

अनाद्यविद्याविलसितान्तःकरणाद्युपाधिनिबन्धनः प्रमातृत्वाभिमान आत्मनो यावन्न निवर्तते तावदेव शास्त्रीयो लौकिकश्च सर्वो व्यवहारः अद्वितीयनिरतिशयानन्दचैतन्यैकताननिरवयवस्वच्छासङ्गप्रत्यग्भूतब्रह्मसाक्षात्कारात्तन्निवृत्तौ सर्वो व्यवहारो निवर्त्तते इति वेदान्तजन्यज्ञानात्कृतकृत्यतामाह—

प्राप्तव्यमखिलं प्राप्तं हातव्यमखिलं हृतम् ।
कृत्यं ज्ञेयं समाप्तं च ब्रह्मास्मीत्यवबोधने ॥ इति ।

अश्वमेधादिभिरप्यात्मानन्दस्यैव लेशाः प्राप्तव्या एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीत्यादिश्रुतेरत आत्मज्ञानिना ते लब्धा भवन्ति यदाहापस्तम्बः। आत्मलाभान्न परं विद्यते इति निर्गलितसकलशोकस्यात्मनो ये शोका भ्रान्तिमूला हातव्या आसंस्ते सर्वे ऽपि हृता भवन्त्यतः कामयितव्यान्तराभावात्कामानुपपत्तेः कृतकृत्यता भवति । इत्थं निरतिशयफलावसानाद्वेदान्तानां ब्रह्मात्मनि तात्पर्यमिति सिद्धम् ॥

गोविन्दानन्दभगवत्पूज्यपादपदौकसा ।
रामानन्दसरस्वत्या रचितो ऽनुक्रमो मुदे ॥
बोधगन्धा विवरणवाक्पुष्पा नवरूपिणी ।
उपन्यासाभिधा माला प्राप्ता श्रीरामपादुकाम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविन्दानन्दभगवत्पूज्यपादशिष्यरामानन्दसरस्वतीकृतौ विवरणोपन्यासे नवमं वर्णकं समाप्तम् ॥ समाप्तो ऽयं विवरणोपन्यासः ॥



श्रीगणेशाय नमः ।

सच्चिदानन्दजगद्गुरवे नमो नमः ।

# श्रीमच्छङ्कराचार्यप्रणीता वाक्यसुधा

## श्रीमद्ब्रह्मानन्दभारतीप्रकृतया टीकया सहिता ।

यस्मात्सर्वं समुत्पन्नं चराचरमिदं जगत् ।
इदं नमो नटेशाय तस्मै कारुण्यरूपिणे ॥ १ ॥

कारणं खादिजगतां तारणार्थमनागसाम् ।
वारणाननमात्मानमद्वयं समुपास्महे ॥ २ ॥

परापश्यन्त्यादिदेहां प्रणताभीष्टदायिनीम् ।
सत्यज्ञानानन्दरूपां ध्याये ह्याद्यां सरस्वतीम् ॥ ३ ॥

नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ।
मया वाक्यसुधाटीका यथामति विरच्यते ॥ ४ ॥

न ख्यातिर्लाभपूजे च टीकाकरणकारणम् ।
न विद्वत्ताबलं वा ऽत्र मुक्तिरेवात्र कारणम् ॥ ५ ॥

प्रारीप्सितस्य ग्रन्थस्याविघ्नेन परिसमाप्तिप्रचयगमनाय शिष्टाचारपरिपालनाय च केवलकूटस्थप्रत्यग्बोधरूपपरमात्मस्वरूपानुस्मरणलक्षणं मङ्गलमाचरन् सच्चिदानन्दाखण्डैकरसस्वरूपावस्थानलक्षणस्य मोक्षस्य तत्त्वमस्यादिमहावाक्यार्थापरोक्षज्ञानफलत्वाद्वाक्यार्थज्ञानस्य चान्वयव्यतिरेकाभ्यां पदार्थपरिशोधनपूर्वकत्वात्पदार्थपरिशोधनस्य प्रसिद्धानुवादेनाप्रसिद्धं निरूपणीयमिति न्यायेन प्रतिशरीरमहमहमिति प्रसिद्धजीववाचकत्वंपदार्थपरिशोधनपूर्वकत्वात् श्रीमच्छारीरकमहाशास्त्रे श्रीमद्भाष्यकारैः प्रतिपादितमर्थं हृदि निधाय प्राण्यनुजिघृक्षया दृग्दृश्यविवेकद्वारा प्राधान्येन त्वंपदार्थपरिशोधनपरमिदं प्रकरणमारभमाणः परमकृपानिधिः श्रीभारतीतीर्थगुरुः प्रकरणप्रतिपाद्यमानमर्थं संक्षिप्य प्रथमश्लोकेन तावद्दर्शयति ।

## श्रीरामचन्द्राय नमः ।

रूपं दृश्यं लोचनं दृक् तद्दृश्यं दृक्तु मानसम् ।
दृश्या धीवृत्तयः साक्षी दृगेव न तु दृश्यते ॥ १ ॥

रूपमिति ॥ लोके चक्षुरिन्द्रियग्राह्यं यद्रूपमस्ति तत्सर्वं दृश्यं भवति तद्ग्राहकं चक्षुरिन्द्रियं स्वग्राह्यापेक्षया दृग्भवति तथा तत्पुनश्चक्षुरिन्द्रियं स्वस्मादप्यान्तरस्य मनसो दृश्यं भवति स्वभास्यचक्षुरिन्द्रियापेक्षया मानसमपि दृग्भवति द्रष्टृ भवति मनसः सर्वेन्द्रियावभासकत्वसामर्थ्यं द्योतयति । तुशब्दः धीवृत्तयः अन्तःकरणस्य वर्त्तमाणवृत्तयस्तदविद्याकार्यत्वेन जडरूपत्वात् दृश्या भवन्ति साक्षी शरीरत्रयविलक्षणः प्रत्यगात्मा दृगेव भवति द्रष्टैव भवति एवकारेणार्थाद्दृश्यत्वे निषिद्धे ऽपि कण्ठतो ऽपि दृश्यत्वं निषेधयन्प्रत्यगात्मनो द्रष्टृत्वमेव द्रढयति न तु दृश्यते इति । साक्षिणि वर्तमानस्य दृक्त्वस्य सर्वान्तरत्वे सापेक्षितत्वाभावात्ततस्तस्य लोचनमानसयोर्वर्त्तमानदृक्त्ववैलक्षण्यं द्योतयति द्वितीयस्तुशब्दः साक्षिणः दृश्यत्वमप्रमाणिकमिति यस्मात्तस्मात्कालत्रये ऽपि दृक्त्वमेवास्य स्वरूपमिति भावः ॥ १ ॥

एवं प्रकरणे प्रतिपाद्यमानमर्थं संक्षिप्य प्रथमश्लोकेन दर्शयित्वा इदानीं प्रथमश्लोकस्य प्रथमपादेन दर्शितमर्थं द्वितीयश्लोकेन स्पष्टयति ।

नीलपीतस्थूलसूक्ष्मह्रस्वदीर्घादिभेदतः ।
नानाविधानि रूपाणि पश्येल्लोचनमेकधा ॥ २ ॥

नीलेति ॥ दृश्यत्वदृक्त्वयोर्नानात्वैकत्वहेतुकत्वान्नीलपीताद्यनेकभेदभिन्नत्वेन दृश्यत्वं प्राप्तानि रूपाणि चक्षुरिन्द्रियं स्वयं स्वग्राह्यरूपभेदानुकूलस्वरूपभेदमगृहीत्वैव एकरूपेणैव पश्येत् गृह्णीयात् अत एवास्य दृक्त्वं स्यादिति भावः ॥ २ ॥

एवं प्रथमश्लोकस्य द्वितीयपादोक्तमर्थं स्पष्टीकुर्वन् चक्षुरिन्द्रिये प्रदर्शितन्यायं श्रोत्रादीन्द्रियेष्वप्यतिदिशति ।

आन्ध्यमान्द्यपटुत्वेषु नेत्रधर्मेषु चैकधा ।
सङ्कल्पयेन्मनः श्रोत्रत्वगादौ योज्यतामिदम् ॥ ३ ॥

आन्ध्यमिति ॥ आन्ध्यं नाम सामान्याकारेणापि स्वविषयग्रहणासामर्थ्यं विषयसामान्याकारग्राहकत्वं मान्द्यं स्वविषयसूक्ष्मविशे-

थाकारग्रहणसामर्थ्यं पटुत्वम् । एवमत्र नेत्रधर्मेषु आन्ध्यमान्द्यादिभेदभिन्नेष्वपि नानात्वेनैव हेतुना भास्य*मानान् तान्नेत्रधर्मान् भास्यभेदानुरूपस्वरूपभेदमगृहीत्वैकरूपेणैव मनः सङ्कलपयेत् मम चक्षुरन्धं मम चक्षुर्मन्दं मम चक्षुः पट्विति अत एवास्य मनसो दृक्त्वं भवतीत्यर्थः । श्रोत्रत्वगादीत्यत्र चशब्दः सम्बध्यते श्रोत्रत्वग्जिह्वाघ्राणेष्वपीदं स्वविषयापेक्षया दृक्त्वं स्वभासकमानसापेक्षया दृश्यत्वं यथोचितं बाधिर्यादिकञ्च योज्यतामुह्यतामित्यर्थः । एकस्मिन्निन्द्रिये दृग्दृश्यविवेकं दर्शयित्वा श्रोत्रादीन्द्रियान्तरेष्वप्येवं योज्यतामित्यतिदिशति । आचार्यस्य स्वशिष्यैः स्वबुद्ध्या क्रियमाणो दृग्दृश्यविवेक एव पुरुषार्थोपायो भवतीत्यभिप्रायः ॥ ३ ॥

प्रथमश्लोकस्योत्तरार्द्धे साक्षी दृगेवेत्यन्तेन ग्रन्थेन प्रदर्शितमर्थं विशदयति ।

कामः सङ्कल्पसन्देहौ श्रद्धाश्रद्धे धृतीतरे ।
ह्रीर्धीर्भीरित्येवमादीन्भासयत्येकधा चितिः ॥ ४ ॥

काम इति ॥ रज्ज्वज्ञानाद्रज्ज्वारोपितान् सर्पादीन रज्जुरिव स्वाज्ञानात्स्वस्मिन्नारोपितान् कामः सङ्कल्पो विचिकित्सा श्रद्धा ऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवेति बृहदारण्यकश्रुत्युक्तानादिशब्देन संगृहीतानैतरेयोपनिषद्युक्तान्संज्ञादींश्च स्वरूपज्ञानापनोद्यानेतान् सर्वानप्यन्तःकरणवृत्तिविशेषान्स्वगतादिभेदरहितसच्चिदानन्दलक्षणब्रह्माभिन्नकूटस्थप्रत्यग्रूपा सर्वसाक्षिणी चितिरेकधा भासयति विकारकारणाभावात्स्वभास्याऽवस्तुभूतविकारानुरूपं स्वगतविकारमन्तरेणाप्येकरूपेणैव प्रकाशयतीति यावत् ॥ ४ ॥

इन्द्रियमनसोरुक्तन्यायेन उक्तलक्षणायाश्चितेरपि दृश्यत्वं स्यादित्याशङ्कायां दृश्यत्वस्य द्रष्टृपूर्वकत्वाच्चितेर्द्रष्टृत्वेन चित्यन्तराङ्गीकारेणानवस्थाख्यो दोषः स्यात् चितेश्चितिरेव द्रष्ट्रीत्यस्मिन् पक्षे ऽपि कर्मकर्तृविरोधः स्यात्तस्मात्प्रकाशान्तरनिरपेक्षतया स्वयंप्रकाशमानायाश्चितेर्दृश्यत्वं न स्यादित्यर्थतो दर्शयन्मुखतः स्वव्यतिरिक्तान्तःकरणादियुष्मदर्थेभ्यश्चितेर्वैलक्षण्यं न तु दृश्यते इत्यंशविवरणेनानेन श्लोकेन दर्शयति ।

* भासमानानिति वा पाठः ।

नोदेति नास्तमेत्येषा न वृद्धिं याति न क्षयम् ।
स्वयं विभात्यथान्यानि भासयेत्साधनं विना ॥ ५ ॥

नोदेतीति ॥ यत्साक्षादपरोक्षाद्ब्रह्मेति श्रुत्युक्तप्रकारेण विद्वदपरोक्षतां चितेरर्थात्सूचयन् उक्तलक्षणां चितिं परामृश्यत्येषेति । सर्वसाक्षिण्येषा चितिरहमादियुष्मदर्थवत्प्रागभावाभावान्नोदेति नोत्पद्यते प्रध्वंसाभावाभावान्नास्तमेत्यन्तं विनाशं न प्राप्नोति वृद्धिक्षयौ ताभ्याम् उपलक्षितौ अस्तित्वपरिणामौ च न प्राप्नोति सर्वथाऽप्येकरूपत्वादुत्पत्त्यनन्तरं भाविव्यावहारिकास्तित्वमेव विकारान्तःपातित्वेन निषिध्यते न तु स्वरूपास्तित्वं तस्याविकारत्वेन निषेद्धुमशक्यत्वाच्चितेः षड्भावविकाररहितत्वे हेतुं दर्शयति स्वयं विभातीति । एषा चितिः स्वस्य प्रकाशान्तरनिरपेक्षतया स्वयंप्रकाशमाना सती सच्चिदानन्दात्मकस्वरूपप्रकाशानन्तरमेव स्वव्यतिरिक्तान्यखिलान्यारोपितवस्तूनि भासयेत् प्रकाशयेत् तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीति श्रुतेः सविकल्पस्य ज्ञानस्य निर्विकल्पकज्ञानपूर्वकत्वाच्चात्रानुमानद्वयं सूचितम् अस्मत्प्रत्ययविषया एषा चितिः षड्भावविकाररहिता प्रकाशान्तरनैरपेक्ष्येण स्वयंप्रकाशमानत्वाद्यत्षड्भावविकाररहितं न भवति तत्प्रकाशान्तरनैरपेक्ष्येण स्वयंप्रकाशमानमपि न भवति यथा युष्मत्प्रत्ययविषयोऽहमादिः उक्तलक्षणा एषा चितिः षड्भावविकाररहिता प्रकाशान्तरनैरपेक्ष्येण स्वव्यतिरिक्तवस्त्ववभासकत्वाद्यन्नैवं तन्नैवं यथाऽहमादिरित्येवमुक्तप्रकारेण स्वयंप्रकाशमानत्वात्षड्भावविकाररहितत्वाच्च युष्मदर्थवैलक्षण्ये समर्थिते सति चितेः कालत्रयेऽपि दृक्त्वमेव स्वरूपं न तु दृश्यत्वमित्यर्थात्समर्थितं भवति अदृष्टं द्रष्टृ श्रुतं श्रोत्रमतं मतमविज्ञातं विज्ञातृ न दृष्टेर्द्रष्टारं पश्येन्न श्रुतेः श्रोतारं शृणुयान्न मतेर्मन्तारं मन्वीथाः न विज्ञातेर्विज्ञातारं विजानीया इत्यादिश्रुतिसहस्रेणाप्ययमेवार्थस्तात्पर्येण प्रतिपाद्यते इति अतो युष्मत्प्रत्ययविषयान्तःकरणादिरूपं दृश्यमेवास्मत्प्रत्ययावलम्बनभूतायाः प्रत्यक्चितेः स्वरूपं दृक्त्वमेवातः प्रत्यक्चितिरेव परं ब्रह्मेत्ययमेवाभिप्रेतार्थः ॥ ५ ॥

ननु युष्मदर्थावभासकत्वं प्रथमश्लोके साक्षिण इत्युक्तम् । अत्र तु चितेरित्युक्तम् अतः पूर्वापरविरोध इति चेन्नैष दोषः प्रथम-

श्लोकोक्तसाक्षिण एवात्र चितिशब्देन परामृष्टत्वात्तस्यैव पुनः प्रथमश्लोकार्थविवरणेन प्रकरणपरिसमाप्तिपर्यन्तेनोत्तरग्रन्थसन्दर्भेणापि तत्र तत्र साक्षिशब्देन परामृष्ट*त्वात्साक्षी चितिश्चैतन्यं ज्ञानं बोधः प्रत्यगात्मा कूटस्थ इत्यादिशब्दानामेकार्थपर्यवसायित्वाच्च । ननु तर्हि युष्मदर्थस्यान्तःकरणस्य सापेक्षकं दृक्त्वमपि न सम्भवति भौतिकत्वेन जडात्मकत्वाद्घटादिवत् द्रष्टरि नास्ति दृश्यत्वं दृश्यस्य द्रष्टृता न हि दृश्यरूपस्य कुड्यादेर्द्रष्टृता न हि दृश्यते इति पुराणवचनाच्च तथा सति तस्य संसारो नोपपद्यते । अथ वा पूर्वोक्तप्रकारेणाहमादिविलक्षणस्य कूटस्थस्य स्वयंप्रकाशप्रत्यग्बोधरूपस्य साक्षिणश्च जाग्रदादिविमोक्षान्तः संसारो नोपपद्यते तस्यासङ्गोदासीनत्वात् यो ऽसंसारी न भवति सो ऽसङ्ग उदासीनो ऽपि न भवति यथाहमादिः असङ्गो ह्ययं पुरुष इत्यादिश्रुतिसद्भावाद्धेतुरसिद्धो न भवत्येवमुक्तप्रकारेणान्तःकरणतत्साक्षिणोरुभयोरप्यसंसारित्वे समर्थिते सति निवर्त्यसंसाराभावात्तन्निवर्तकज्ञानस्यापि नैरर्थक्यं स्यात्ततस्तज्ज्ञानप्रतिपादकवेदान्तवाक्यानामप्यप्रामाणिकत्वप्रसङ्गः स्यात् पुनरुक्तलक्षणस्याशेषविशेषशून्यस्य साक्षिणः शब्दप्रवृत्तिनिमित्तषष्ठ्यादिरहितत्वेन वेदान्तवाक्यैर्विधिमुखेन प्रतिपाद्यमानत्वासम्भवादतस्तन्निरसनमात्रेण तद्रूपाप्रसिद्धेश्च शास्त्रस्याप्रामाण्यं प्रसज्येत एवं परम्परया ऽनेकदोषसम्भवात्साक्षिणः कूटस्थत्वस्वयंप्रकाशमानत्वादिकमप्यप्रामाणिकं स्यादित्यनेकदोषमाशङ्क्यान्तःकरणप्रतिफलितानिर्वचनीयचिच्छायाङ्गीकारे सति सर्वो ऽपि दोषः परिहृतः स्यादित्यभिप्रेत्य चिच्छायां तावदङ्गीकरोति ।

चिच्छायावेशतो बुद्धौ भानं धीस्तु द्विधा स्थिता ।
एकाहङ्कृतिरन्या स्यादन्तःकरणरूपिणी ॥ ६ ॥

चिच्छायेति ॥ चिच्छायावेशतो बुद्धौ भानं रजतसुवर्णादिवद्बहुविधपरिणामार्हमन्तःकरणाख्यं द्रव्यमत्र बुद्धिशब्देन धीशब्देन चोच्यते तस्यान्तःकरणस्य कर्तृस्वरूपवृत्तिमदंशो ऽहंकृतिशब्देनोच्यते करणस्वरूपमनःशब्दवाच्याहमिदमात्मिकवृत्त्यंशो ऽन्तःकरणशब्देनोच्यते तत्र श्रोत्रादिकरणापेक्षया अन्तःकरणत्वादन्तःकरणं बुध्यते अनया चिच्छायावेशतः । चिच्छाया चित्प्रतिबिम्बं तस्या आवेशो ऽनुप्रवेश-

* परामृश्यत्वादिति वा पाठः ।

स्ततो स्वरूपमिति बुद्धिस्तस्यां भानं स्यात्स्वभावतो जडरूपा ऽप्यनुप्रविष्टचैतन्यबलाद्बुद्धिः स्वयंप्रकाशमानेव भवतीति यावत् । धीस्तु द्विधा। तुशब्दो ऽवधारणे । भ्रामकसन्निधौ लोहवत्साक्षिसन्निधौ बहुविधचेष्टां स्थिता कुर्वती सा धीर्द्विधैव स्थिता तयोर्मध्यं एका धीरहङ्कृतिशब्दवाच्यकर्तृरूपा स्यादन्या धीर्मनःशब्दवाच्याऽन्तःकरणरूपिणी स्यात् कामादीनां संज्ञादीनां च सर्वेषामप्यन्तःकरणपरिणामविशेषाणां मनोबुद्ध्यहङ्कारचित्ताख्येष्वन्तःकरणचतुष्टयेष्वन्तर्भूतत्वात् बुद्धिचित्तयोरपि यथाक्रममहङ्कारमनसोरेवान्तर्भूतत्वाद्वृत्तिमद्वृत्तिलक्षणाकारद्वयव्यतिरिक्तान्तःकरणाकारान्तरस्य निरूपयितुमशक्यत्वात् चित्कर्मभूता बुद्धिः स्वविकारानुकारिणा ऽनुप्रविष्टचैतन्येन सहिता ऽहङ्कारमनःशब्दवाच्यकर्तृकरणात्मकवृत्तिमद्वृत्तिलक्षणाकारद्वयेनैकावस्थितेति भावः ॥ ६ ॥

उक्तलक्षणयोरहङ्कारमनसोर्मध्ये ऽहङ्कारस्य चिच्छायया सह तप्तायःपिण्डवत्तादात्म्यात्तेन सच्चिदाभासाहङ्कारेण तादात्म्याज्जडरूपो ऽपि देहश्चेतनत्वं प्राप्नुयादित्याह ।

छायाहङ्कारयोरैक्यं तप्तायःपिण्डवन्मतम् ।
तदहङ्कारतादात्म्याद्देहश्चेतनतामगात् ॥ ७ ॥

छायेति ॥ छायाहङ्कारयोश्चिदाभासकर्त्रोरैक्यं तप्तायःपिण्डवद्वन्हिसम्बन्धेन तद्रूपं तप्तायःपिण्डवन्मतमभिप्रेतं तथा दृष्टान्ते अयमग्निरिदमय इति पृथक्करणमशक्यं तथा दार्ष्टान्तिके ऽप्ययमहङ्कार इयं चिच्छायेत्यहङ्कारस्वरूपस्य तत्रानुप्रविष्टचिच्छायास्वरूपस्य च पृथक्करणमशक्यमिति भावः। तदहङ्कारतादात्म्यात्तेन चिच्छायासहितेनाहङ्कारेण तादात्म्यात् सो ऽहङ्कार आत्मा नाम स्वरूपं यस्य देहस्य स तदात्मा तस्य भावस्तादात्म्यं सम्बन्ध इत्यर्थः। तस्माद्देहः स्थूलशरीरं स्वयं जडरूपमपि चेतनतां चेतनं ज्ञानं तस्य भावश्चेतनता तां ज्ञानस्वरूपतामगात्प्राप्नुयादित्यर्थः। यथा पयसि परीक्षणार्थं प्रक्षिप्तो मरकतमणिः पयोशेषमात्मच्छायं कुर्यात्तथा स्वभावत एव सर्वान्तरः कूटस्थो ऽसङ्गबोधरूपः साक्ष्यप्यहङ्कारादिस्थूलदेहपर्यन्तमशेषं युष्मदर्थमात्मच्छायं कुरुते इति भावः ॥ ७ ॥

नन्वेवमहङ्कारस्य चिच्छायादेहाभ्यां तादात्म्ये सत्यहं पश्याम्यहं

श्रृणोमीत्यादेरनुभवसिद्धत्वादिन्द्रियैरपि तादात्म्यमस्तीत्याशङ्क्य इन्द्रियाणां स्वस्वगोलकस्थानमन्तरेण स्वस्वविषयग्रहणसामर्थ्याभावाद्गोलकानां च स्थूलशरीरावयवत्वादवयवावयविनोर्भेदाभावान्मनुष्यो ऽहं ब्राह्मणो ऽहं गृहस्थो ऽहं कृष्णकेशो ऽहमित्यादिवदहं चक्षुरहं श्रोत्रमित्याद्यनुभवाभावात्कस्त्वमिति पृष्टे अहमिति वदतो देहस्यैव स्पृश्यमानत्वाच्चेन्द्रियतादात्म्यस्यापि देहतादात्म्ये ऽन्तर्भूतत्वात्पृथक् न निरूपणीयमित्यहङ्कारस्य सम्बन्ध्युद्देशद्वारेण तादात्म्यस्येयत्तां दर्शयति ।

अहङ्कारस्य तादात्म्यं चिच्छायादेहसाक्षिभिः ।
सहजं कर्मजं भ्रान्तिजन्यश्च त्रिविधं क्रमात् ॥ ८ ॥

अहङ्कारस्येति ॥ अहङ्कारस्येत्युक्तलक्षणस्य कर्तुश्चिच्छायादेहसाक्षिभिः चिच्छायया देहेन साक्षिणा च सह क्रमात्सम्बन्ध्युद्देशक्रमेण त्रिविधं त्रिप्रकारं तादात्म्यं सम्बन्धस्तेषां तादात्म्यानां सद*र्थानि नामानि कल्पयति सहजं चिच्छायाहङ्कारयोर्यत्तादात्म्यं तत्सम्बन्धिनोरुभयोरप्युत्पत्तिकाले सहैव जायते इति सहजमित्युच्यते कर्मजम् उक्तलक्षणाहङ्कारस्य देहस्य च यत्तादात्म्यं तदन्वयव्यतिरेकाभ्यां जाग्रद्भोगप्रदकर्मणैव जायते इति कर्मजमित्युच्यते भ्रान्तिजन्यमधिष्ठानयाथात्म्याज्ञानं भ्रान्तिशब्देनोच्यते अहङ्कारसाक्षिणोर्यत्तादात्म्यं तदनाद्यनिर्वचनीयभ्रान्त्यैव जायते इति भ्रान्तिजन्यमित्युच्यते । तादात्म्यत्रयसमुच्चयार्थश्चशब्दः । अत्रायं प्रयोगः । अहङ्कारसाक्षिणोस्तादात्म्यमधिष्ठानयाथात्म्याज्ञानजन्यमधिष्ठानयाथात्म्यज्ञानापनोद्यत्वात् यद्यदधिष्ठानयाथात्म्यज्ञानापनोद्यन्तत्तदधिष्ठानयाथात्म्याज्ञानजन्यं यथा रज्जुसर्पादीनां तादात्म्यं तथा चेदमधिष्ठानयाथात्म्यज्ञानापनोद्यं तस्मादधिष्ठानयाथात्म्याज्ञानजन्यमेवेति । एवमहङ्कारस्य चिच्छायादेहसाक्षिभिः सम्बन्ध्युद्देशक्रमेणैवोक्तलक्षणं त्रिविधं तादात्म्यमस्तीति शेषः ॥ ८ ॥

ननु तर्हि "ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्" एवमनादिरनन्तो नैसर्गिको ऽयमिति च श्रीभगवद्भाष्यकाराभ्यामुक्तत्वादहङ्कारसाक्षिणोस्तादात्म्यस्य निवृत्तिर्नास्त्यत एव निःशेषदुःखोच्छित्तिनिरतिशयानन्दावाप्तिलक्षणमोक्षो ऽप्याशामात्रमित्याशङ्क्य ब्रह्मात्मज्ञान-

* समर्थानीति वा पाठः ।

पर्यन्तमेव भ्रान्तिजन्यतादात्म्यस्याऽविनाशित्वेन ताभ्यां विवक्षितत्वादन्यथा स्ववाक्याविरोधात्सर्वेषामपि मोक्षशास्त्राणामप्रामाण्यप्रसङ्गाच्च मुमुक्षूणामपि सर्वेषां मोक्षविषयश्रवणादिप्रवृत्त्यभावाच्च कर्मजन्यतादात्म्यनिवृत्तेश्च प्रतिदिनं सुषुप्तावनुभूतत्वाच्च सहजतादात्म्यातिरिक्तयोरपि तादात्म्ययोः स्वस्वकारणनाशद्वारा निवृत्तिरस्त्येव सहजतादात्म्यस्य तु सहजत्वादेव निवृत्तिर्नास्तीत्याह ।

सम्बन्धिनोस्सतोर्नास्ति निवृत्तिः सहजस्य तु ।

कर्मक्षयात्प्रबोधाच्च निवर्तेते क्रमादुभे ॥ ९ ॥

सम्बन्धीति ॥ सम्बन्धिनोः सतोः परस्परसम्बन्धित्वेनैवोत्पद्यमानयोरुत्पत्तिकाले एव सम्बन्धिनोरित्यर्थः । तुशब्दो ऽवधारणे । सहजतादात्म्यस्येतरतादात्म्यवैलक्षण्यद्योतनार्थो वा । उक्तलक्षणयोश्चिच्छायाहङ्कारयोः सहजाख्यस्य तादात्म्यस्य निवृत्तिर्नास्त्येव परस्परं पृथग्भावो न सम्भवत्येव सुषुप्तिर्मूर्छा मरणादौ जाग्रद्भोगप्रदकर्मक्षयात् जाग्रत्काले श्रुत्याचार्यानुग्रहबलेनाहं ब्रह्मास्मीति ब्रह्मात्मैक्यसाक्षात्काराच्च कर्मजन्यभ्रान्तिजन्याख्ये उभे अपि तादात्म्ये निमित्ताभावान्नैमित्तिकस्याप्यभाव इति न्यायेन क्रमान्निवर्तेते कर्मक्षयात् कर्मजं तादात्म्यं निवर्तते अहङ्कारदेहाख्यावुभावपि सम्बन्धिनौ परस्परसम्बन्धं त्यजत इत्यर्थः । प्रबोधात्प्रबोधक्षये सति भ्रान्तिजन्यमपि तादात्म्यं निवर्तते बोधानन्तरं साक्षिसम्बन्धराहित्येनाप्यहङ्कारप्रतीतिरन्यदृष्ट्यैव स्वदृष्ट्या निवर्तते यथा शुक्तिकाज्ञानात्तत्स्वरूपाज्ञाने नष्टे सति तत्रैव रजतं लीयते तथा स्वरूपपरिज्ञानात्स्वरूपाऽपरिज्ञाने नष्टे सति स्वस्मिन्नेवाहङ्कारो लीयत एव ॥ ९ ॥

संक्षेपेणावस्थात्रयस्वरूपमन्वयव्यतिरेकाभ्यां देहस्याचेतनत्वञ्च दर्शयति ।

अहङ्कारलये सुप्तौ भवेद्देहो ऽप्यचेतनः ।

अहङ्कारविकासार्द्धः स्वप्नः सर्वस्तु जागरः ॥ १० ॥

अहङ्कारेति ॥ स्थूलसूक्ष्मभोगद्वयप्रदकर्मक्षयात्स्वकारणा*ज्ञाने अहङ्कारे लीने सति तदहङ्कारलयावस्था सुषुप्तिरित्युच्यते तस्यामवस्थायां पूर्वमहङ्कारसम्बन्धाच्चेतनत्वेन भातो देहो ऽप्यचेतनो भवेत्

* क्षयात्स्वकारणाज्ञाने इति वा पाठः ।

"अन्धः सन्ननन्धो भवति विद्धः सन्नविद्धो भवति उपतापी सन्ननुपतापी भवती"त्यादिश्रुतेः, अहङ्कृतिविकासार्धः स्वप्नः सूक्ष्मभोगकर्मण्युद्बुद्धे सति तद्वशात्स्वकारणा*ज्ञानादुत्पन्नस्याहङ्कारस्य स्वव्यतिरिक्तवस्त्वन्तराभावे ऽपि जाग्रज्जनितसंस्कारमात्ररूपभोगार्थं स्थूलशरीराभिमानमन्तरेणापि शरीरस्यान्तःसूक्ष्मनाडीप्रचारो यः स एव तस्याहङ्कारस्यार्धविकासः स एव स्वप्न इत्युच्यते तत्राहङ्कारव्यतिरिक्तवस्त्वन्तराभावे श्रुतिः "न तत्र रथा न रथयोगा न पन्थानो भवन्ती"त्यादिः सर्वस्तु जागरः स्थूलभोगप्रदकर्मण्युद्बुद्धे सति तद्वशादापादमस्तकं स्थूलदेहे ऽभिव्याप्तस्याहङ्कारस्य सर्वेन्द्रियैः सर्वविषयज्ञानं यत्स एव तस्याहङ्कारस्य पूर्णविकासस्तदेव जागरणमित्युच्यते अस्यामवस्थायां पुनरहङ्कारसम्बन्धाद्देहः पूर्ववच्चेतनत्वेन भासते उभयत्राहङ्कारे समाने स्वप्नाज्जागरितस्येन्द्रियविषयसद्भावात्मकवैलक्षण्यद्योतनार्थस्तुशब्दः अत्र दर्शिते ऽवस्थात्रयलक्षणे माण्डूक्यतापिनीयाद्युपनिषदः प्रमाणानि "दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः आकाशे च हृदि प्राज्ञस्त्रिधा देहे प्रतिष्ठितः" इन्द्रियैरर्थोपलब्धिर्जागरितं करणेषूपसंहृतेषु जागरितसंस्कारप्रत्ययस्तविषयः स्वप्नः सर्वप्रकारकज्ञानोपसंहारो बुद्धेः कारणात्मना ऽवस्थानं सुषुप्तिरित्यादीनि श्रीमद्गौडपादाचार्यभगवत्पादाचार्यादिपूर्वाचार्यवचनानि च ॥१०॥

एवं कर्तृव्यापारं निरूप्य करणस्यापि क्रियाव्याप्यत्वं तत्क्रियां दर्शयति ॥

अन्तःकरणवृत्तिश्च चितिच्छायैक्यमागता ।
वासनाः कल्पयेत् स्वप्ने बोधेऽक्षैर्विषयान्बहिः ॥ ११ ॥

अन्तःकरणेति ॥ अन्तःकरणं चासौ वृत्तिश्चेत्यन्तःकरणवृत्तिः सच्चिदाभासकर्तृरूपवृत्तिमदपेक्षया करणभूतं मनःशब्दवाच्याहमिदमात्मिका वृत्तिरिति यावत् वृत्तिश्चेति चकारेण छायाहङ्कारैक्यविषये प्रदर्शितो दृष्टान्तादिरवस्थात्रये ऽप्यहङ्कारवत्सङ्कोचविकासादिश्चात्रापि समान इति द्योत्यते उक्तलक्षणा सा वृत्तिश्च सुषुप्तौ लीयते सा पुनः सूक्ष्मभोगप्रदकर्मवशादुत्पत्तिसमये चिच्छायया तप्तायःपिण्डवदैक्यं प्राप्ता सती स्वप्नावस्थायां नाडीमध्ये कर्तृकरणकर्मक्रि-

*तद्वशात्स्वकारणाज्ज्ञानादिति वा पाठः ।

यात्मकव्यवहारवासनाः कल्पयेत्सैव पुनः स्थूलभोगप्रदकर्मवशात्स्थूलशरीरेणैक्यं प्राप्ता सती जाग्रदवस्थायां श्रोत्रादीन्द्रियैः शब्दादिविषयान्बहिः कल्पयेत् । ननु बाह्यविषयाणामीश्वरस्रष्टृत्वेनान्तःकरणकल्पितत्वमयुक्तमिति चेन्नैष दोषः स्वरूपमात्रस्येश्वरस्रष्टृत्वे ऽपि भोग्यत्वाकारस्यान्तःकरणकल्पितत्वात् "करणं कर्म कर्त्ता च क्रिया स्वप्ने फलं च धीः जाग्रत्येवं यतो दृष्ट"त्याचार्यवचनाच्च ॥ ११ ॥

एकमेवान्तःकरणं व्यवहारसौकर्यार्थमहङ्कारमनोभेदेनावयवशो विभज्य प्रदर्शयित्वा इदानीमहङ्कारस्यापि मनोपेक्षया कर्तृरूपत्वे ऽपि चिच्छायावेशतो बुद्धौ भानमित्यत्र बुद्धिशब्देन निर्दिष्टान्तःकरणाख्यद्रव्यापेक्षया करणत्वात्तस्यैव सर्वसंसारनिर्वर्तकत्वेन मुख्यकर्तृत्वान्मुख्याहङ्कारत्वाच्चाहङ्कारमनोविभागपूर्वावस्थालक्षणस्य तस्यान्तःकरणाख्यद्रव्यस्य स्वरूपं दर्शयति ॥

मनोहङ्कृत्युपादानं लिङ्गमेकं जडात्मकम् ।
अवस्थात्रयमन्वेति जायते म्रियते तथा ॥ १२ ॥

मन इति ॥ मनोहङ्कृत्योरुपादानं कारणं यत्तन्मनोहङ्कृत्युपादानं किं तल्लिङ्गं लिङ्ग्यते गम्यते ऽनेनेति लिङ्गमन्तःकरणाख्यं द्रव्यमित्यर्थः तस्यैवाहं ब्रह्मास्मीत्यखण्डाकारवृत्तिद्वारेण सच्चिदानन्दाद्वितीयब्रह्मात्मगमकत्वात् । ननु तत्त्वविवेकाख्ये ग्रन्थे " बुद्धिकर्मेन्द्रियप्राणपञ्चकैर्मनसा धिया शरीरं सप्तदशभिः सूक्ष्मं तल्लिङ्गमुच्यते" इति सप्तदशावयवात्मकस्य सूक्ष्मशरीरस्यैव लिङ्गत्वमुक्तं नान्तःकरणस्य लिङ्गत्वमुपपद्यते इत्याशङ्क्य बुद्धिकर्मेन्द्रियप्राणपञ्चकानां वेदान्तेषु भौतिकत्वेन श्रुतत्वे ऽपि "अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौष"मित्यादिश्रुतिष्वन्तःकरणाधीनत्वश्रवणादत एवाहङ्कारमनःसहितानां तेषां ज्ञानक्रियाशक्तिद्वयात्मकान्तःकरणवृत्तित्वाद्वृत्तिवृत्तिमतोर्व्यावहारिकभेदविवक्षया तत्रोक्तत्वात्तयोः पारमार्थिकभेदविवक्षयैवात्रोक्तत्वात्तद्विवक्षाभेदेन पक्षद्वयस्याप्युपपन्नत्वादुक्तलक्षणस्यान्तःकरणस्य सूक्ष्मशरीरत्वं लिङ्गत्वं चोपपद्यते एवेत्यभिप्रायेणाह एकमिति। एवमुक्तलक्षणमन्तःकरणं स्वभावतो जडमप्यनुप्रविष्टचिच्छायाबलेनैव स्थूलशरीरमप्यात्मत्वेनैव गृहीत्वा पूर्वोक्तसङ्कोचविकासप्रकारेणानुदिनमवस्थात्रयं प्राप्नोति

यथा कर्मवशादवस्थात्रयं प्राप्नोति तथा जननमरणादिकञ्च कर्मवशात्प्राप्नोतीत्यर्थः । जायते म्रियते इत्युक्त्वा ऽनन्तरं तथाशब्दप्रयोक्तुर्धर्माधर्मवशाद् घटीयन्त्रवत्पौनःपुन्येन जन्ममरणं प्राप्नोतीत्यभिप्रायः "शोकहर्षभयक्रोधलोभमोहस्पृहादयः अहङ्कारस्य दृश्यन्ते जन्ममृत्युश्च नात्मनः एवं दुःखाद्यनुभवन्संसारे ऽस्मिन्पुनान् मुने घटीयन्त्रवदुद्विग्नो जायते म्रियते च सः" इत्यादिपुराणवचनात् ॥ १२ ॥

एवं निखिलसंसारनिर्वाहकलिङ्गशरीरस्वरूपं निरूप्येदानीमस्य लिङ्गस्य विराडन्तसमस्तप्रपञ्चस्य मूलकारणभूतायाः सच्चिदानन्दब्रह्माश्रयाया अविद्याऽज्ञानतमोमोहादिशब्दवाच्यायाः सर्वानर्थबीजभूतायाः अनिर्वचनीयायाः मायायाः स्वरूपं तच्छक्तिद्वारेण विभज्य दर्शयितुं तच्छक्तेरियत्तां तावद्दर्शयति ॥

शक्तिद्वयं हि मायाया विक्षेपावृत्तिरूपकम् ।
विक्षेपशक्तिर्लिङ्गादिब्रह्माण्डान्तं जगत्सृजेत् ॥ १३ ॥

शक्तिद्वयमिति ॥ उक्तलक्षणमायाया आवरणशक्तिर्विक्षेपशक्तिरिति द्वयमस्तीति शेषः । "जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवती"त्यादिवेदान्तवाक्येषु मायायाः शक्तिद्वयात्मकं प्रसिद्धमिति शास्त्रप्रसिद्धिं द्योतयति हिशब्दः । अधिष्ठानमनाच्छाद्य विक्षेपयितुमशक्यत्वेन विक्षेपशक्तेः आवरणशक्तिपूर्वकत्वादत एवावरणशक्तेरग्र्यत्वे ऽपि छन्दोभङ्गभयाद्विक्षेपशब्दपूर्वनिपातः कृतः । एवं शक्तेरियत्तामुक्त्वा इदानीं सच्चिदानन्दलक्षणब्रह्मात्मस्वरूपमावाच्छादिकायाः विक्षेपशक्त्यभिव्यक्तेः पूर्वावस्थालक्षणायाः आवरणशक्तेः सर्वानर्थबीजत्वेनाग्र्यत्वे ऽपि विक्षेपशक्तेर्नैरपेक्ष्येण ब्रह्मानन्दानुभवं तिरस्कृत्य सांसारिकसुखदुःखादिभोगप्रदत्वसामर्थ्याभावात्प्रतिदिनं सुषुप्तावनुभूतत्वेनास्मिन्नर्थे कस्यापि विप्रतिपत्त्यसम्भवात् विक्षेपशक्त्यभिव्यक्त्यनन्तरं तया सृष्टस्याहङ्कारादिदेहान्तस्य युष्मदर्थस्य शरीरत्रयविलक्षणस्य कूटस्थासङ्गबोधरूपस्य साक्षिणश्च स्वभावसिद्धं भेदं सैवावरणशक्तिर्येनांशेनावृणोति तस्यैवांशस्य सुखित्वदुःखित्वाद्यनेकविधसंसारकारणत्वात्तादृशावरणशक्त्यंशस्योक्तरीत्या विक्षेपशक्त्यनन्तरभावित्वात्तदपेक्षया विक्षेपशक्तेरग्र्यत्वादनेनैवाभिप्रायेणावरणशक्तिस्वरूपं पश्चाद्वि-

रूपयिष्यन्विक्षेपशक्तिस्वरूपं तावन्निरूपयति विविधं करणं विक्षेपः विविधं भानं भवनं वा सा चासौ शक्तिश्चेति विक्षेपशक्तिः अध्यात्मं विश्वतैजसप्राज्ञादिभेदेनाधिदैवतं विराट् हिरण्यगर्भान्तर्याम्यादिभेदेन च स्वगतादिभेदरहितं चिन्मात्रं विक्षेपयतीति विक्षेपशक्तिः उक्तलक्षणं चिन्मात्रमनया विक्षिप्यते इति वा गिरिनदिसमुद्राद्यनेकनामरूपाकारेण स्वयमेव विक्षिपति नामरूपाद्याकारेण 'परिणमते विवर्तते इत्यर्थः। एवमिति विक्षेपशक्तिर्जायते पुनर्लयं गच्छतीति जगदुक्तलक्षणा सा शक्तिरुक्तलक्षणं समष्टिव्यष्ट्यात्मकं लिङ्गशरीरादिब्रह्माण्डान्तं जगत्सृजेदुत्पादयेदित्यर्थः ॥ १३ ॥

एवं विक्षेपशक्तिस्वरूपं निरूप्य तद्विक्रियात्मकसृष्टिस्वरूपनिरूपणद्वारेणापि तदेव विशदयति ॥

सृष्टिर्नाम ब्रह्मरूपे सच्चिदानन्दवस्तुनि ।
अब्धौ फेनादिवत्सर्वनामरूपप्रसारणा ॥ १४ ॥

सृष्टिरिति ॥ ब्रह्मस्वरूपे सच्चिदानन्दवस्तुन्यारोपितनामरूपयोरवस्तुत्वादधिष्ठानस्य तद्वैलक्षण्यं द्योतयति वस्तुशब्दः। सच्चिदानन्दश्च तद्वस्तु चेति सच्चिदानन्दवस्तु तस्मिन्परमार्थसच्चिदानन्दलक्षणे ब्रह्मणीत्यर्थः। नाम च रूपञ्च नामरूपे सर्वे च ते नामरूपे च तयोः प्रसारणा विस्तारः वितातिः सृष्टिरित्युच्यते। एतदुक्तं भवति। ब्रह्मण्यवस्थिताया विक्षेपात्मिकायाः मायायास्तस्मिन्नेव ब्रह्मणि समस्तनामरूपाकारेण विवर्तनं यत्सैव सृष्टिरित्युच्यते इत्यत्र दृष्टान्तमाह अब्धौ फेनादिवदब्धाववस्थितायाः विक्षेपात्मिकायाः मायायास्तत्रैव फेनतरङ्गबुद्बुदाद्याकारेण विवर्तनं यथा सृष्टिशब्देनोच्यते तथाऽत्रापीति भावः ॥ १४ ॥

एवं विक्षेपशक्तिद्वारा मायास्वरूपं दर्शयित्वा आवरणशक्तिद्वारेणापि तदेव दर्शयति ॥

अन्तर्दृग्दृश्ययोर्भेदं बहिश्च ब्रह्मसर्गयोः ।
आवृणोत्यपरा शक्तिः सा संसारस्य कारणम् ॥ १५ ॥

अन्तरिति ॥ अन्तः स्थूलशरीरस्यान्तर्देशे दृग्दृश्ययोर्भेदम् "अहमन्नादोऽहमन्नाद" इत्यादिश्रुत्यनुसारेण शरीरत्रयतादात्म्यवशाद्भोक्तृत्वमापन्न-

स्य परमार्थतस्तद्रहितस्य केवलज्ञानस्वरूपस्यास्मदर्थस्य साक्षिणः अविद्याकार्यत्वेन जडरूपस्याहङ्कारादिदेहान्तस्य युष्मदर्थस्य च भेदमन्योन्यवैलक्षण्यमन्योन्यपृथग्भावं बहिः शरीरस्य बाह्यदेशे ब्रह्मसर्गयोर्भेदं "सच्चासच्चाभवत् अहमन्नमहमन्न"मित्यादिश्रुत्यनुसारेण नामरूपतादात्म्यवशाद्भोग्यत्वमापन्नस्य परमार्थतस्तद्रहितस्य परब्रह्मणस्तस्मिन् शुक्तिकायां रजतवदध्यस्तनामरूपात्मकस्य सर्गस्य च भेदम् एवमन्तरुक्तलक्षणयोर्हग्दृश्ययोर्भेदं बहिर्ब्रह्मसर्गयोर्भेदं चापरा शक्तिः पूर्वोक्तरीत्या विक्षेपशक्त्यनन्तरभावित्वे ऽपि स्वरूपतो विक्षेपशक्तिप्रवर्तकत्वेन तत्कारणभूता आवरणाख्या मायाशक्तिरावृणोत्याच्छादयति सा संसारस्य कारणं अतर्दृक्स्वरूपस्य साक्षिणः कर्तृत्वभोक्तृत्वादिलक्षणस्य संसारस्य सैव कारणं तस्या एवान्योन्याध्यासहेतुत्वेन सर्वानर्थकारित्वादिति भावः। बहिः सच्चिदानन्दलक्षणस्य ब्रह्मणः भोग्यत्वादिविकारस्यापि सैव कारणमित्यर्थाल्लभ्यते भोक्तृत्वस्य भोग्यापेक्षत्वात् ॥ १५ ॥

एवं शक्तिद्वयात्मकं मायास्वरूपं प्रदर्श्येदानीं प्रकृतानुसारेण मनोहंकृत्युपादानमित्यस्मिन्श्लोके सामान्यतो दर्शितं लिङ्गस्वरूपं विशेषतः प्रदर्शयति ॥

साक्षिणः पुरतो भातं लिङ्गं देहेन संयुतम् ।
चितिच्छायासमावेशाज्जीवः स्याद्व्यावहारिकः ॥ १६ ॥

साक्षिण इति ॥ चितिच्छायासमावेशादनुप्रविष्टचैतन्यस्य बलात्साक्षिणः प्रत्यगात्मनः पुरतो ऽग्रतः कर्मत्वेनेति यावत् भातं भासमानं देहेन संयुतं स्थूलशरीरेणैक्यं प्राप्तं लिङ्गं पूर्वोक्तलक्षणं लिङ्गशरीरं जीवः स्यात् व्यावहारिकः लोकद्वये ऽपि प्रमात्रादिसमस्तव्यवहारनिर्वाहकत्वाद्व्यावहारिकाख्यो जीवः स्यादस्यानिर्वचनीयमायाकार्यत्वेन प्रकृतिलक्षणविकारित्वात्सकलसंसारनिर्वाहकत्वात्सच्चिदानन्दब्रह्मात्मैक्यस्वरूपावस्थानलक्षणमोक्षदशायामभावाच्च व्यावहारिकजीव इत्युक्तम् ॥ १६ ॥

ननु व्यावहारिकजीवस्य सकलसंसारनिर्वाहकत्वे ऽपि मिथ्याभूतत्वान्नित्यमुक्तस्य साक्षिणः संसाराभावाच्चोभयोरपि मोक्षानधिकारादन्यस्य कस्य चिदधिकारिणो ऽभावाच्च मोक्षशास्त्रवैयर्थ्यं स्यादित्यत आह ॥

अस्य जीवत्वमारोपात्साक्षिण्यप्यवभासते ।
आवृत्तौ तु विनष्टायां भेदे भाते ऽपयाति तत् ॥ १७ ॥

अस्येति ॥ अस्य व्यावहारिकजीवस्य जीवत्वं जीवभावः आरोपादावरणशक्तिकृतादन्योन्याध्यासात्साक्षिण्यपि दृग्रूपे प्रत्यगात्मन्यपि जीवत्वं साक्षिणि प्रत्यगात्मनि परमार्थतो जीवत्वासम्भवं द्योतयत्यपिशब्दः अवभासते प्रकाशते स्वरूपचैतन्यावगतित्वेन भासते इति भावः। तुशब्दो ऽवधारणे। आवृत्तावसत्त्वावृत्तिरूपेणाभानावृत्तिरूपेण च द्विप्रकारमायावरणशक्तौ अहं ब्रह्मास्मीत्यखण्डैकरसब्रह्मात्मसाक्षात्कारेण विनष्टायां विशेषेण नष्टायां सत्यां पुनर्भ्रान्त्यनुदयो नाशस्य विशेषः आत्यन्तिकनाशं प्राप्तायामित्यर्थः। भेदे भाते व्यावहारिकजीवस्वरूपस्य लिङ्गशरीरस्य घटादिवत् दृश्यत्वं प्रत्यग्बोधस्वरूपस्य साक्ष्याख्यस्य स्वस्य द्रष्टत्वञ्च भेदस्तस्मिन् सम्यक् प्रकाशिते सति साक्षिण्यारोपितं तज्जीवत्वमपयात्यपगच्छत्येवेत्यत्र तुशब्दः सम्बध्यते यस्मादेवं तस्माच्छास्त्रवैयर्थ्यं न स्यादित्यभिप्रायः ॥ १७ ॥

यथा व्यावहारिकजीवगतं जीवत्वमारोपात्साक्षिण्यप्यवभासते तथा नामरूपात्मकः सर्गगतो विकारः आरोपाद्ब्रह्मण्यप्यवभासते इत्याह ॥

तथा सर्गब्रह्मणोश्च भेदमावृत्य तिष्ठति ।
या शक्तिस्तद्वशाद्ब्रह्म विकृतत्वेन भासते ॥ १८ ॥

तथेति ॥ यथा अन्तः दृग्दृश्ययोर्भेदमाच्छादयति तथा सर्गब्रह्मणोर्भेदं चावृत्य या आवरणशक्तिस्तिष्ठति तद्वशात्तदावरणशक्तिकृतादन्योन्याध्यासवशाद्ब्रह्म सच्चिदानन्दलक्षणः परमात्मा विकृतत्वेन भासते स्वयं कूटस्थमपि षड्भावविकारशून्यमपि तद्वत्त्वेन भासते इत्यर्थः ॥ १८ ॥

बाह्ये ऽप्यावृत्तिनाशेन सर्गब्रह्मभेदस्फुरणात् ब्रह्मण्यारोपितो विकारो निवर्तते इत्याह ॥

अत्राप्यावृत्तिनाशेन विभाति ब्रह्मसर्गयोः ।
भेदस्तयोर्विकारं स्यात्सर्गे न ब्रह्मणि क्वचित् ॥ १९ ॥

अत्रेति ॥ अत्रापि यथान्तस्तथा बाह्ये ऽप्यावृत्तिनाशे नान्वयव्यतिरे-

काभ्यामन्तर्बहिश्च पदार्थद्वयपरिशोधनपूर्वकेणाहं ब्रह्मास्मीत्यभिव्यक्तेन सच्चिदानन्दलक्षणब्रह्मात्मबोधेन उक्तलक्षणायामावरणशक्तौ वासनया सह विनष्टायां सत्यां तेनावृत्तिनाशेन ब्रह्मसर्गयोर्भेदो विभाति घटपटयोरिव भेदः सम्यक् प्रकाशते एवं भेदे भाते सति तयोर्ब्रह्मसर्गयोर्मध्ये नामरूपात्मके सर्ग एव जन्मादिविकारः स्यान्न ब्रह्मणि क्व चिदानन्दलक्षणे ब्रह्मण्यैकदेशेऽपि विकारो न स्यादित्यर्थः ॥ १९ ॥

एवमन्तर्बहिश्चावृत्तिकार्यतादात्म्यवशात्साक्षिब्रह्मणो भोक्तृत्वभोग्यत्वादिरूपविकारं तदावृत्तिनाशेन तत्कृतविकारनिवृत्तिश्च दर्शयित्वा इदानीं ब्रह्मणः सर्वात्मकत्वप्रदर्शनद्वारेण त्वंपदार्थमप्यर्थाद्विवेचयन्मुखतस्तत्पदार्थं विविनक्ति ॥

अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यत्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥ २० ॥

अस्तीति ॥ अस्ति विद्यते भाति प्रकाशते प्रियं प्रेमास्पदं रूपं जगद्रूपं पृथुबुध्नोदरोतप्रोतादिकं नाम घटः पट इत्यादिकमेतत्सर्वं मिलित्वांशपञ्चकमिदमेकं वस्तु अस्तीदं भातीदं प्रियमिदमस्य स्वरूपमिदमस्य नामेत्येतदंशपञ्चकव्यतिरेकेण व्यवहारासम्भवाल्लोकव्यवहारगोचरभूतं भौतिकात्मकं समस्तं वस्त्वपि सच्चिदान्दरूपं नाम लक्षणांशपञ्चात्मकमेव भवतीति यावदंशपञ्चकसमुच्चयार्थश्चशब्दः। एतेष्वंशेषु मध्ये आद्यत्रयं सच्चिदानन्दात्मकमंशत्रयं ब्रह्मरूपं ब्रह्मस्वरूपं ततो द्वयं तस्मात्सच्चिदानन्दात्मकांशत्रयादुपरितनं नाम रूपात्मकमंशद्वयं जगद्रूपमित्यर्थः ॥ २० ॥

उक्तमेवार्थमन्वयव्यतिरेकाभ्यां स्पष्टयति ॥

खवाय्वग्निजलोर्वीषु देवतिर्यङ्नरादिषु ।
अभिन्नाः सच्चिदानन्दा भिद्येते रूपनामनी ॥ २१ ॥

खमिति ॥ आकाशवायुतेजोम्ब्वन्नाख्येषु पञ्चभूतेषु देवतिर्यङ्नरादिभेदभिन्नेषु शरीरलक्षणेषु भौतिकेषु वर्तमानाः सच्चिदानन्दास्त्रयोऽप्यंशा अभिन्ना निर्विशेषाः स्युः घटोऽस्ति पटोऽस्ति घटो भाति पटो भाति घटः प्रियः पटः प्रिय इति सर्वत्रानुवृत्तस्वभावत्वाद्रूपनामनी भूतेषु भौतिकेषु च वर्तमानौ रूपनामात्मकौ उभावप्यंशौ भिद्येते ईदृग्रूपस्तादृग्रूपो घटः पट इत्यादिभेदभिन्नत्वेन वर्तेते अनिर्वचनीयमायाकार्यत्वेन व्यावृत्तस्वभावत्वात् ॥ २१ ॥

एवं प्राक्तनग्रन्थसन्दर्भेणान्वयव्यतिरेकाभ्यां पदार्थद्वयं परिशोध्येदानीं नामरूपोपेक्षापुरःसरं सच्चिदानन्दतत्परो भूत्वा वाक्यश्रवणाङ्गत्वेन वाक्यार्थज्ञानसाधनभूतं वक्ष्यमाणभेदभिन्नं समाधिं हृदये वा बाह्ये वा निरन्तरं कुर्यादित्याह ॥

उपेक्ष्य नामरूपे द्वे सच्चिदानन्दतत्परः ।
समाधिं सर्वदा कुर्याद्धृदये वा ऽथ वा बहिः ॥ २२ ॥

उपेक्ष्येति ॥ जगद्रूपे नामरूपे द्वे उपेक्ष्यावज्ञाय उदासीनीकृत्य सच्चिदानन्दतत्परः सच्चिदानन्दरूपब्रह्मात्मन्येव तात्पर्यवान् तदेकचित्त इत्यर्थः तादृशो भूत्वा समाधिं वक्ष्यमाणं चित्तसमाधानं सर्वेन्द्रियाण्यपि हृदयकमले निरुध्य तत्रतत्र वागादीन्द्रियाणां स्वस्वगोलकावस्थाने ऽपि तेषां वृत्तिमात्रं निरुध्य शरीरादन्तर्बाह्यदेशे वा वक्ष्यमाणप्रकारेण निरन्तरं कुर्यादित्यर्थः विधिमुखतः समाधिं विधायानेन श्लोकेन प्रतिपादितं पदं प्रति परमहंसस्यैव ब्रह्मज्ञानाधिकारो नान्यस्येत्यर्थादुच्यते एतत्श्लोकार्थानुष्ठानस्यान्यस्मिन्नसम्भवात्परमहंसस्यैव सम्भवाच्च ॥ २२ ॥

एवं ब्रह्मजिज्ञासुं मुमुक्षुं प्रति निदिध्यासितव्य इत्येतद्वाक्यानुसारेणावश्यकर्तव्यत्वेन समाधिं विधायेदानीं तस्य समाधेरवान्तरभेदं दर्शयन्नेतान्समाधीन् हृदयं कुर्यादित्याह ॥

सविकल्पो निर्विकल्पः समाधिर्द्विविधो हृदि ।
दृश्यशब्दानु*विद्धेन सविकल्पः पुनर्द्विधा ॥२३॥

सविकल्प इति ॥ सविकल्पसमाधिर्निर्विकल्पसमाधिरिति समाधिर्द्विविधो द्विप्रकारो भवेत् दृश्यानुविद्धः सविकल्पकः शब्दानुविद्धः सविकल्पक इति सविकल्पसमाधिरपि द्विप्रकारो भवेत् एवमुक्तप्रकारेण दृश्यानुविद्धः सविकल्पकसमाधिः शब्दानुविद्धः सविकल्पकसमाधिर्निर्विकल्पकश्चेति त्रिप्रकारं समाधिं क्रमेण हृदये कुर्यादिति शेषः । दृश्यमिश्रो दृश्यानुविद्धः शब्दमिश्रः शब्दानुविद्धः ॥ २३ ॥

सविकल्पो निर्विकल्पश्चेति सविकल्पस्य प्रथमोद्दिष्टत्वात्तत्रापि दृश्यशब्दानुविद्धेनेति दृश्यानुविद्धस्यैव प्रथमोद्दिष्टत्वादन्तर्दृग्दृश्यविवेकं दृगेकनिष्ठं दृश्यानुविद्धं सविकल्पसमाधिं तावद्दर्शयति ॥

* दृश्यशब्दानुवेधेनेति वा पाठः ।

कामाद्याश्चित्तगा दृश्यास्तत्साक्षित्वेन चेतनम् ।
ध्यायेद् दृश्यानुविद्धोऽयं समाधिः सविकल्पकः ॥२४॥

कामाद्या इति ॥ कामाद्याः कामसङ्कल्पादयः पूर्वोक्ताश्चित्तगाः अन्तःकरणवृत्तित्वेनान्तःकरणनिष्ठाः दृश्याः कर्मभूताः युष्मत्प्रत्ययविषयाः भवन्तीति शेषः तत्साक्षित्वेन तेषां कामादिचित्तगतदृश्यानां प्रकाशकत्वेन चेतनमात्मानं प्रत्यक्चैतन्यं ध्यायेत् । एतदुक्तं भवति । तेषां कामादीनां मध्ये एकमेकं प्रतियोगिनं कृत्वा अस्य कामस्य यत्साक्षिभूतं चैतन्यं तदेव मम यथार्थं स्वरूपमित्येवं निरन्तरं प्रत्यग्रूपं चिन्मात्रं भावयेदिति । एवमुक्तप्रकारेण चिन्मात्रे भाविते सत्ययं दृश्यानुविद्धः सविकल्पकसमाधिरित्युच्यते इति शेषः "नर्ते स्याद्विक्रियां दुःखी साक्षिता का विकारिणः धीविक्रियासहस्राणां साक्ष्यतोऽहमविक्रिय" इति नैष्कर्म्यसिद्धिकारैरुक्तत्वात् ॥ २४ ॥

एवं दृश्यप्रतियोगिकं सविकल्पकसमाधिं दर्शयित्वा इदानीं क्रमप्राप्तं कामाद्यशेषदृश्यविलापकं साक्षिनिष्ठं शब्दानुविद्धसविकल्पकसमाधिं दर्शयति ॥

असङ्गः सच्चिदानन्दः स्वप्रभो द्वैतवर्जितः ।
अस्मीतिशब्दविद्धोऽयं समाधिः सविकल्पकः ॥२५

असङ्ग इति ॥ असङ्गः सङ्गरहितः "असङ्गो ह्ययं पुरुष"
सच्चिदानन्दः सत्यज्ञानानन्दस्वरूपः "सत्यं ज्ञानमनन्तं
मानन्दं ब्रह्म"त्यादिश्रुतेः स्वप्रभः स्वयंप्रकाशः अदृष्टं द्रष्टृश्रुतं
दृष्टेर्द्रष्टारं पश्ये"दित्यादिश्रुतेः द्वैतवर्जितः प्रकाश्यस्य प्रकाश
त्वेन कामाद्यशेषरहितः स्वगतादिभेदरहित इत्यर्थः "एकमेव
य"मिति श्रुतेः एवमुक्तलक्षणः प्रत्यग्रूपो यः साक्षी अयमह
निरन्तरं भावयेत् एवमुक्तप्रकारेण कामाद्यशेषवृत्तिविलापः
दिशब्दमात्रामिश्रितो विजातीयप्रत्ययशून्यसजातीयप्रत्यय
णः प्रत्यक्चिन्मात्रविषयकश्चिदाभासनिष्ठो योऽनुभ
विद्धः सविकल्पकसमाधिरित्युच्यते इति शेषः "निर्
ऽस्मि स्वस्थोऽस्म्यस्मि च निस्पृहः शान्तोऽहम
याहमलं स्थित" इति वसिष्ठवचनात् ॥ २५ ॥

एवं द्विप्रकारं सविकल्पकसमाधिं दर्शयित्वा इदानीं कामादि-दृश्यानामसङ्गादिशब्दानां विलापकं निवातस्थितदीपवच्चित्तनैश्चल्यात्मकं निर्विकल्पसमाधिं दर्शयति ॥

स्वानुभूतिरसावेशाद् दृश्यशब्दानुपेक्षितुः ।
निर्विकल्पः समाधिः स्यान्निवातस्थितदीपवत् ॥२६॥

स्वानुभूतिरिति ॥ अनुभूतिर्ज्ञानं प्रत्यक्चैतन्यं "या ऽनुभूतिरजाऽमेया त्वनन्तानन्दविग्रहा महदादिजगन्मायाचित्रभित्तिं नमामि ता"-मिति इष्टसिद्धिकारैरुक्तत्वात् रस आनन्दस्वरूपः परमात्मा "रसो वै सः रसं ह्येवायं लब्ध्वा ऽऽनन्दी भवती"ति श्रुतेः प्रत्यगात्मापि रसाभिन्नत्वेन परमप्रेमास्पदत्वाद्रसस्वरूपभूता अनुभूतिः स्वानुभूतिरेव रसस्तस्यावेशः स्वानुभूतिरसावेशः पूर्वोक्तसमाधिद्वयाभ्यासपाटवादन्तःकरणे स्वरूपभूतज्ञानानन्दाविर्भावः स्वानुभूतिरसावेश इत्युच्यते यद्वा आवेशो ऽभिनिवेशः मग्नत्वं स्वानुभूतिरसावेशः यद्वा आसमन्तात्प्रवेशः आवेशः स्वरूपज्ञानानन्दपूर्णत्वं यद्वा देवताद्यावेशवत् स्वानुभूतिरसस्यावेशस्तस्मात्स्वानुभूति-[illegible]शात् स्वानुभूतिरसास्वादादिति पाठे चिदानन्दस्वरूपो ऽहमिति [illegible]भूतिरसस्यात्मत्वेन स्वीकरणं स्वानुभूतिरसास्वादस्तस्मात् [illegible]दानुपेक्षितुः पूर्वोक्तान्कामादिदृश्यानसङ्गादिशब्दांश्चोपेक्षितु-[illegible]रुभयत्र तात्पर्यराहित्येन तूष्णीं स्थितस्य देवताद्यावि-[illegible]तिरसाख्यमहाग्रहग्रस्तत्वेन स्वातन्त्र्याभावात्परतन्त्रत-[illegible]स्येति तात्पर्यार्थः निर्विकल्पकसमाधिः स्यात् "प्रशान्तवृत्तिकं [illegible]रमानन्ददीपकम् असंप्रज्ञातनामायं समाधिर्योगिनां प्रिय" इति [illegible]णो निर्विकल्पकसमाधिरुक्तलक्षणस्याधिकारिणः स्वयमेव [illegible]यविक्षेपकषायादिप्रतिबन्धाभावादसंप्रज्ञाताख्यो निर्विकल्प-[illegible]ः स्वयमेव भवतीत्यर्थः । तस्मिन्समाधौ चित्तनैश्चल्ये दृष्टान्त-[illegible]स्थितदीपवदिति । निवातस्थले स्थापितो दीपो यथा [illegible] तथा समग्राभचित्तमपि निश्चलं भवतीत्यर्थः । "ततपरं [illegible]रण्यं तीव्रसंवेगानामासन्नः समाधिलाभः व्युत्था-[illegible]रभिभवप्रादुर्भावौ निरोधलक्षणचित्तान्वयो निरो-[illegible]तञ्जलिना सूत्रितत्वात् "यथा दीपो निवातस्थो

नेङ्गते सोपमा स्मृता योगिनो यतचित्तस्य युञ्जतो योगमात्मन" इत्यादिभगवद्वचनात् "अन्तःशून्यो बहिः शून्यः शून्यकुम्भ इवाम्बरे अन्तः पूर्णो बहिः पूर्णः पूर्णकुम्भ इवार्णवे मा भव ग्राह्यभावात्मा ग्राहकात्मा च मा भव भावनामखिलां त्यक्त्वा यदिष्टं तन्मयो भव द्रष्टृदर्शनदृश्यानि त्यक्त्वा वासनया सह दर्शनप्रथमाभ्यासमात्मानं केवलं भज प्रशान्तसर्वसंकल्पा या शिलावदवस्थितिः जाग्रन्निद्राविनिर्मुक्ता सा स्वरूपस्थितिः परे"ति वसिष्ठवचनाच्च । अस्य समाधेर्वाक्यश्रवणाङ्गत्वं च तत्त्वविवेकाख्ये ग्रन्थे श्रीमद्विद्यारण्यगुरुभिर्निरूपितं "अमुना वासनाजाले निःशेषं प्रविलापिते समूलोन्मूलिते पुण्यपापाख्ये कर्मसञ्चये वाक्यमप्रतिबद्धं सत्प्राक्परोक्षावभासिते करामलकवद्बोधमपरोक्षं प्रसूयते" इति ॥ २६ ॥

एवं हृदयसम्बन्धित्वेन दर्शितं त्रिप्रकारमिमं समाधिं बाह्यसम्बन्धित्वेनापि दिदर्शयिषुर्बहिर्ब्रह्मसर्गविवेकं सच्चिदानन्दलक्षणब्रह्मनिष्ठं दृश्यानुविद्धसमाधिं तावद्दर्शयति ॥

हृदीव बाह्यदेशेऽपि यस्मिन् कस्मिंश्च वस्तुनि ।
समाधिराद्यः सन्मात्रान्नामरूपपृथक्कृतिः ॥ २७ ॥

हृदीति ॥ यथा हृदये साक्षिणः सकाशात्कामादीनां पृथ[illegible] माद्यः समाधिः । एतदुक्तं भवति यथा हृदि कामादीनां मध्ये [illegible] प्रतियोगिनं कृत्वा स्वात्मनः सकाशात् नामरूपयोः पृथ[illegible] साक्षिभूतं यच्चैतन्यं तदेवाहमस्मि अस्य संकल्पस्य [illegible] यच्चैतन्यं तदेवाहमस्मीत्यनुचिन्तनं दृश्यानुविद्धसमाधिरि[illegible] तथा बाह्ये ऽपि स्वाभीष्टमेकं वस्त्ववलम्ब्यांशपञ्चके तस्मिन्[illegible] वर्तमानात्सच्चिदानन्दलक्षणब्रह्मणः सकाशान्नामरूपे पृथक्कृत्य[illegible] पृथक्कृतयोर्नामरूपयोरधिष्ठानभूतं सच्चिदानन्दलक्षणं यद्ब्र[illegible] तत्पदलक्ष्यं ब्रह्मेत्यनुचिन्तनं दृश्यानुविद्धसमाधिरित्युच्यते [illegible] स्थितेयं विश्वश्रीः प्रतिभामात्ररूपिणी रज्ज्वां भुज[illegible] ऽहमात्मा सदोदित" इत्यादिवसिष्ठवचनाच्च ॥ २७

एवं दृश्यानुविद्धसमाधिं निरूप्येदानीं समा[illegible] स्तद्दृश्यप्रपञ्चविलापकं शब्दानुविद्धसमाधिं नि[illegible]

अखण्डैकरसं वस्तु सच्चिदानन्दलक्षणम् ।
इत्यविच्छिन्नचिन्तेयं समाधिर्मध्यमो भवेत् ॥ २८ ॥

अखण्डैकरसमिति ॥ अखण्डं देशकालाद्यपरिच्छिन्नं स्वगतादिभेदरहितमिति यावत् "एकमेवाद्वितीयमि"ति श्रुतेः "न व्यापित्वाद्देशतो ऽन्तो नित्यत्वान्नापि कालतः न वस्तुतो ऽपि सार्वात्म्यादानन्त्यं ब्रह्मणि त्रिधे"त्येतत्तैरेव पञ्चकोशविवेकाख्ये ग्रन्थे उपपत्तिभिरखण्डत्वस्य समर्थितत्वाच्च । एकरसं कालत्रये ऽप्येकरूपं कूटस्थमित्यर्थः "अव्यक्तो ऽयमचिन्त्यो ऽयमविकार्यो ऽयमुच्यते" इति भगवद्वचनात् अखण्डञ्च तदेकरसं चेत्यखण्डैकरसं सच्चिदानन्दलक्षणं स्पष्टो ऽर्थः एवमुक्तलक्षणं यद्वस्तु तदेव ब्रह्मेत्यविच्छिन्नचिन्ता विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहरूपा या चिन्तेयं मध्यमः समाधिर्भवेत् शब्दानुविद्धसविकल्पकसमाधिर्भवेदित्यर्थः "एवं ब्रह्म चिदाकाशं सर्वात्मकमखण्डितम् नीरन्ध्रभूरिवाशेषमिति भावय राघव नाहं न चान्यद्वा ऽस्तीति ब्रह्मैवास्मि निरन्तरम् आनन्दपूर्णः सर्वत्राप्यनुद्वेगादुपास्यभू"मिति वसिष्ठवचनात् ॥ २८ ॥

एवं ब्रह्मविषयं द्विप्रकारं सविकल्पकसमाधिं निरूप्येदानीं पूर्वोक्तदृश्यशब्दविलापकानिर्विकल्पसमाधिप्रदर्शनपूर्वकमुक्तलक्षणैरेभिः समाधिभिर्निरन्तरं कालं नयेदित्याह ॥

[illegible]धीभावो रसास्वादात्तृतीयः पूर्ववन्मतः ।
समाधिभिः षड्भिर्नयेत्कालं निरन्तरम् ॥ २९ ॥

[illegible]धीभाव इति ॥ रसशब्दो व्याख्यातः आन्तरस्य त्रिप्रकारस्य विषयभूतस्य साक्षिणः साक्षित्वसिद्ध्यर्थं ब्रह्माभिन्नत्वं बलाद[illegible]यमन्यथा समाध्यवलम्बाभावाद्बाह्यस्य त्रिप्रकारस्य समाधे[illegible]तस्य ब्रह्मणो ऽपि सर्वात्मकत्वसिद्ध्यर्थमात्माभिन्नत्वं बलादङ्गी[illegible] ब्रह्मणः सर्वात्मकत्वे सिद्धे सति स्वस्यापि रसरूपे ऽस्मिन्परे [illegible]नित्वेन स्वस्यापि रसरूपस्वीकारो रसास्वाद इत्युच्यते [illegible]दपूर्वोक्तान्तरनिर्विकल्पकसमाधिवदत्रापि द्विप्रका[illegible]ध्यभ्यासपाटवेन भूमानन्दास्वादाद्यष्टिसमष्ट्या[illegible]ञ्चमखण्डैकरसादिशब्दजातं चोपेक्ष्यास्वादितभू[illegible]स्थितस्य चित्तस्य निवातस्थले स्थापितदीपस्ये-

व यः स्तब्धीभावो निश्चलत्वं स एव तृतीयो मतो निर्विकल्पकसमाधि-रित्यभिप्रेतो विद्वद्भिरिति शेषः।निर्विकल्पकसमाधेरान्तरबाह्यमात्रवि-शिष्टविशेषभावात्पूर्वोक्तवचनान्येवात्रापि प्रमाणान्येवमुक्तलक्षणैरेतैः षड्भिः समाधिभिरेव मुमुक्षुर्निरन्तरं कालं नयेत्कालमित्यनेन समाधी-नां दीर्घकालकर्तव्यत्वं द्योत्यते तत्रापि नैरन्तर्येण कर्तव्यत्वं निरन्तर-शब्देनोच्यते कालनिरन्तरशब्दौ सत्कारस्याप्युपलक्षकौ "दीर्घकाल-नैरन्तर्यसत्कारसेवितो दृढभूमि"रिति पतञ्जलिना सूत्रितत्वात् ॥२९॥

एवमन्तर्बहिश्च मिलित्वा षड्विधान्समाधीन् दीर्घकालनैरन्तर्य-सत्कारपूर्वकं मुमुक्षोरवश्यकर्तव्यत्वेन विधाय इदानीं पूर्वोक्तप्रकारे-णान्वयव्यतिरेकाभ्यामन्तर्बहिश्च पदार्थद्वयपरिशोधनेन देहाभिमाने गलिते परमात्मनि च विज्ञाते सत्युक्तलक्षणाः षड्विधाः समाधयश्च अन्तर्बहिर्वा यत्र यत्र मनो गच्छति तत्र तत्र स्वयमेव प्रवर्तन्ते इत्याह ॥

देहाभिमाने गलिते विज्ञाते परमात्मनि ।
यत्र यत्र मनो याति तत्र तत्र समाधयः ॥ ३० ॥

देहाभिमानेति ॥ रूपं दृश्यमित्यारभ्यास्य जीवत्वमारोपादि-न्तेन श्लोकपर्यन्तेन ग्रन्थेन प्रदर्शितन्यायमनुसृत्य सम्यक् कृ- न्तर्दृग्दृश्यविवेकेनास्मदर्थे साक्ष्यात्मत्वाभिमानादहङ्कारादिदेहा- युष्मदर्थेष्वहं कर्ता ऽहं मनुष्य इत्याद्यात्मत्वाभिमाने गलिते [illegible] लीभूते "अस्ति भाति प्रियं रूपं नाम च" इत्यत्र दर्शितप्रकार- कृतेन बहिर्ब्रह्मसर्गविवेकेन नामरूपात्मकं समस्तमिदं [illegible] तदधिष्ठानभूतं सच्चिदानन्दलक्षणं ब्रह्मैव सत्यमिति एवं प- च विज्ञाते सत्येवमुक्तप्रकारेण गलितदेहाभिमानस्य विज्ञातप- त्मतत्त्वस्य मुमुक्षोरन्तर्बहिर्वा यत्र यत्र मनो गच्छति तत्र तत्रोक्त- षडपि समाधयः स्वयमेव भवन्तीति शेषः । तीव्रवैराग्यबल- हंसाश्रमस्वीकारपूर्वकं ब्रह्मसाक्षात्कारपर्यन्तं सद्गुरुसन्नि- च्छारीरकशास्त्रमवलम्ब्य निरन्तरं पौनःपुन्येन क्रियमाणे दार्थविवेकेन गलितदेहाभिमानस्य विज्ञातपरमात्मत- रुक्तलक्षणाः षड्विधाः समाधयः स्वयमेवानायासेन प्र- तात्पर्यार्थः । "आवृत्तिरसकृदुपदेशा"दिति वैया- "अहं ब्रह्मेति वाक्यार्थबोधो यावद् दृढीभवेत् ।

श्यसंन्न्छ्रवणादिक मित्याचार्यैरुक्तत्वात् ॥ ३० ॥

वैराग्यसंन्यासादिश्रवणसाधनं दीर्घकालनैरन्तर्यसत्कारसहकृत-श्रवणादिज्ञानसाधने च प्रयासं दृष्ट्वा ब्रह्मात्मैक्यलक्षणस्य ज्ञान-फलस्याग्निहोत्रकार्यवत्सद्यः प्राप्त्यभावं च स्वबुद्ध्या कल्पयित्वा साधनानुष्ठानादुपरतं शिष्यं प्रति फलप्रदर्शनद्वारेण साधनानुष्ठाने तं प्रवर्तयितुं तस्य विश्वासार्थं परावरदर्शनफलप्रदर्शिनीं श्रुतिमेव पठति ॥

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ ३१ ॥

भिद्यत इति ॥ देहाद्बहिः सकलनामरूपात्मकेषु वस्तुषु सर्पा-धाररज्जुरिव व्याप्तः सच्चिदानन्दलक्षणो यः परमात्मा स एव परशब्देनोच्यते अन्तरहमादिदृश्यविलक्षणो ऽस्मत्प्रत्ययालम्बनभूतः प्रत्यक्चिन्मात्ररूपः साक्ष्याख्यो यो जीवात्मा स एवावरशब्देनो-भूयते परश्चासावपरश्चेति परावरः प्रत्यगभिन्नः परमात्मा तस्मिन्प-...पं परस्यैव स्वयंप्रकाशत्वेनावाङ्मनसगोचरत्वमुच्यते तच्छब्देनावा-...सगोचरे ब्रह्मात्मनीत्यर्थः। यद्वा परावरविभागाधिष्ठानभूतं शुद्ध-...न्नं तच्छब्देनोच्यते तस्मिन्पक्षे पररूपेण वा ऽवररूपेण वा ऽव-...परमार्थतः परावरविभागरहिते स्वगतादिभेदरहिते कूटस्थे ...े इत्यर्थः । तस्मिन्परावरे तस्मिन्निति पक्षद्वये ऽप्येक एव ...। परावरस्यैव शुद्धचैतन्यत्वाच्छुद्धचैतन्यस्यैवावाङ्मनस-...ोचरत्वाच्च। तस्मादुक्तलक्षणे तस्मिन्परावरे दृष्टे सति "त्वं वा अह-...भगवो देवते अहं वा त्वमसी"ति "तुभ्यं मह्यमनन्ताय मह्यं तुभ्यं ...न्ने नमो देवाधिदेवाय पराय परमात्मने" इत्यादिश्रुतिस्मृत्य-...गाहं ब्रह्मास्मि ब्रह्मैवाहमस्मीति व्यतिहारेणाखण्डैकरसत्वेन ...लकवत्साक्षात् कृते सति अस्यैव साक्षात्कृतवतो ऽधि-...दयग्रन्थिर्भिद्यते हृदित्यहङ्कारः अयमित्यपरोक्षरूपः साक्षी ...येन तयोरुभयोरपि स्वरूपं मिलित्वा हृदयग्रन्थिरि-...स्य कर्तृत्वं चित्यध्यस्य तथा चितः स्फूर्तिं चाहङ्कृतौ ...तयोर्ध्रुव"मिति वचनात् हृदयशब्दवाच्यं तादात्म्य-...न। यद्वा हृदित्यहङ्कारः अयमिति साक्षी तयोरुभा-

द्वात्म्यं हृदयग्रन्थिरुच्यते एवमुक्तलक्षण आवृत्तिरूपमायाकार्यो ऽयं हृदयग्रन्थिर्भिद्यते मुच्यते चशब्देदृशब्दौ सर्वत्रानुवर्तेते एवं हृदयग्रन्थौ भिन्ने सत्यस्य सर्वसंशयाश्छिद्यन्ते च परमार्थतो ममैव ब्रह्म त्वमस्ति वा न वा ब्रह्मत्वे ऽपि तादृग्रूपत्वं मम साक्षात्कृतं वा न वा साक्षात्कृते ऽपीतः परं ममापि कर्तव्यमस्ति वा न वा कर्तव्याभावे ऽपीदानीं मम जीवन्मुक्तत्वमस्ति वा न वा जीवन्मुक्तत्वे ऽपि वर्तमानदेहपातानन्तरभाविनी विदेहमुक्तिर्भविष्यति वा न वा विदेहमुक्तिप्राप्तावपि कालान्तरे पुनर्जन्म भविष्यति वा न वेत्यादिसंशयाश्छिद्यन्ते च संशयरूपाः पाशाश्च परावरदर्शनशस्त्रेण खण्ड्यन्त इत्यर्थः। एवं सर्वसंशयेषु भिन्नेषु सत्सु अस्य कर्माणि च क्षीयन्त परावरदर्शनस्य देहारम्भनिरोधकत्वे ऽपि वर्तमानदेहारम्भसमये तस्याविद्यमानत्वेन तन्निरोधकत्वासम्भवात् "तस्य तावदेव चिरं यावन्न विमोक्ष्ये" "भूयश्चान्ते विश्वमायानिवृत्ति"रित्यादिश्रुतेश्च प्रारब्धकर्मणां भोगादेव क्षयादागामिकर्मणां च परावरसाक्षात्कारसमये अविद्यमानत्वात्पश्चात् सर्वेषामपि तेषामसंश्लेषाच्च जन्मकोटिसहस्रोपादानभूतानि सञ्चितान्यनारब्धशब्दवाच्यानि पुण्यापुण्यमिश्ररूपाणि कर्माण्येवात्र कर्मशब्देन विवक्ष्यन्ते तानि सर्वाणि च क्षीयन्ते परावरदर्शनाग्निदग्धानि भवन्तीत्यर्थः। अन्यद्दृष्टिमाश्रित्यैव कर्मशब्दो व्याख्यातः "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत" इत्यादिश्रुतिसहस्रेष्व[illegible] शरीरत्वश्रवणादशरीरस्य परावरदर्शनानन्तरमप्यागामिक[illegible] असम्भवात्प्रारब्धकर्मणा फलभोगो ऽप्यस्याशरीरस्याभिम[illegible] दारब्धानारब्धरूपाणि सर्वकर्माणि क्षीयन्त इति स्वदृष्ट[illegible] ऽयमर्थः भिद्यत इत्यादिवर्तमानप्रयोगेण ज्ञानसमकालमुक्त[illegible] त्यत अत्र प्रमाणं "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे ऽहं म[illegible] सूर्यश्चेति ब्रह्मविद्ब्रह्मैव भवति ब्रह्मविदाप्नोति परं तरति शोक[illegible] वित् अभयं वै जनक प्राप्तो ऽसि एतावदरे खल्वमृतत्वमि[illegible] विदित्वा ऽतिमृत्युमेति तमेवं विद्वानमृत इह भवति यत्र[illegible] श्यति यत्र नान्यच्छृणोति यत्र त्वस्य सर्वमात्मैवाभूदि[illegible] "तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन्देहम् ज्ञा[illegible] कैवल्यं याति हतशोकः" इति शिववचनम् "दर्शनात्[illegible] केवलरूपतः यस्तिष्ठति स तु ब्रह्म ब्रह्म न ब्रह्मवित्[illegible]

वचनम् "यस्मिन्काले स्वमात्मानं योगी जानाति केवलम् तस्मात्कालात्समारभ्य जीवन्मुक्तो भवेत्सदेति" पुराणवचनम् ॥ ३१ ॥

एवमवरशब्दवाच्यस्य जीवस्य ब्रह्मत्वे दर्शिते सति रूपं दृश्यमित्यारभ्याऽस्य जीवत्वमारोपादित्येतच्छ्लोकपर्यन्तेन ग्रन्थेन दर्शितमर्थं विस्मृत्यास्य साक्षिणः ब्रह्मत्वमेव स्वरूपं चेत्तर्हि जीवत्वं नोपपद्यते जीवत्वमेव स्वरूपं चेत्तदा ब्रह्मत्वं नैवोपपद्यते उभयथापि शास्त्रनैरर्थक्यं स्यादित्याशङ्कमानं शिष्यं प्रति अस्य साक्षिण एव उपाधिवशाज्जीवत्वं स्वभावतो ब्रह्मत्वं चोपपद्यते तस्माच्छास्त्रनैरर्थक्यमपि न स्यादिति प्रकरणपरिसमाप्तिपर्यन्तेन ग्रन्थसन्दर्भेण कृपया पुनर्विविच्य प्रदर्शयिष्यन्नवरशब्दवाच्यजीवस्यावान्तरभेदं तावत् दर्शयति ॥

अवच्छिन्नश्चिदाभासस्तृतीयः स्वप्नकल्पितः ।
विज्ञेयस्त्रिविधो जीवस्तत्राद्यः पारमार्थिकः ॥ ३२ ॥

भा॰ अवच्छिन्न इति ॥ अवच्छिन्नः परिच्छिन्नः परिपूर्णे परब्रह्मण्यवि-
[...]ं दहङ्काराभ्यामवच्छेद्यं यत्साक्षिचैतन्यं स एवावच्छिन्नाख्यः प्रथमो
[...]वः स्यात् चिदाभासः चिल्लक्षणरहितस्तद्वदवभासमानश्चिदा-
[...]सः अन्तःकरणाख्ये ऽहङ्कारादिशब्दवाच्ये लिङ्गशरीरे प्रतिबिम्बितं
[...]न्यं स एव चिदाभासाख्यो द्वितीयो जीवः स्यात्स्वप्नावस्थायां
[...]ष्याद्यनेकशरीरलक्षणं परिगृह्य सर्वा दिशो यः परिभ्रमति
[...]प्नकल्पितस्तृतीयो जीवः स्यादेवं जीवास्त्रिप्रकारो ज्ञातव्यः
[...]न्तु मध्ये आद्यो ऽवच्छिन्नाख्यः साक्षी पारमार्थिकः परमार्थ-
[...]ब्रह्मभूत इत्यर्थः ॥ ३२ ॥

[...]एवमवच्छिन्नजीवस्यानवच्छिन्नब्रह्मभूतत्वं कथं संभवतीत्याशङ्क्य
[...]स्वरूपनिरूपणद्वारेणारोपवशाज्जीवत्वं स्वभावतो ब्रह्मत्वं च
[...]संभवतीत्याह ॥

[...]च्छेदः कल्पितः स्यादवच्छेद्यं तु वास्तवम् ।
[...]जीवत्वमारोपाद्ब्रह्मत्वं तु स्वभावतः ॥ ३३ ॥

[...]॥ अवच्छेदावच्छेद्ययोर्जीवत्वब्रह्मत्वयोश्च परस्पर-
[...]नावपि तुशब्दौ अवधारणवाचकौ वा । ब्रह्मभूते

साक्षिण्यविद्याहङ्कारकृतो योऽवच्छेदः परिच्छेदः स आकाशे तलमलिनताद्यध्यासवदहङ्कारेणाध्यस्त एव स्यात्सुषुप्तावहङ्कारलयं सत्यविद्यावच्छिन्नोऽहमहङ्कारावच्छिन्नोऽहमित्युभयविधस्यावच्छिन्नत्वस्याप्यभिमानाभावादविद्याहङ्काराभ्यां परिच्छेदं यत्साक्षिचैतन्यं तत्कालत्रयेऽप्येकरूपत्वाद्वास्तवमेव सत्यमेव स्यादेवं यस्मात्तस्मादुक्तलक्षणे तस्मिन्साक्षिणि चिदाभासद्वारेणाहङ्कारसाक्षिणोरन्योन्याध्यासादेव जीवत्वं स्यात् "कर्तृत्वादीन्बुद्धिधर्मान्स्फूर्त्याख्यामात्मरूपताम् दधद्विभाति पुरत आभासोऽतो भ्रमो भवे"दिति वचनात् प्रकृते साक्षिणि ब्रह्मत्वं स्वभावत एव स्वतःसिद्धमेव स्यान्न तु चतुर्विध*क्रियासाध्यमित्यर्थः ॥ ३३ ॥

एवमस्य साक्षिणश्चिदाभासाहङ्काराख्योपाधिवशाज्जीवत्वं स्वभावतो ब्रह्मत्वं चोपपत्तितो दर्शयित्वा इदानीमस्य साक्षिण एव ब्रह्मणा सह ऐक्यं वाक्यानि बोधयन्ति नेतरयोश्चिदाभासस्वप्नकल्पितयोरित्याह ॥

अवच्छिन्नस्य जीवस्य पूर्णेन ब्रह्मणैकताम् ।
तत्त्वमस्यादिवाक्यानि जगुर्नेतरजीवयोः ॥ ३४ ॥

अवच्छिन्नस्येति ॥ अविद्याहङ्काराभ्यामवच्छिन्नस्यात एव द्वितीयवत्प्रतीयमानस्य पारमार्थिकजीवस्यैवाविद्याश्रयभूतस्येद कालवस्तुभिरनभिप्लुतेन परमात्मना "तत्त्वमसि अहं ब्रह्मा... मात्मा ब्रह्म प्रज्ञानं ब्रह्मे"त्येवमादिवाक्यान्यैक्यं जगुः ... पष्ठ्यादिकमवलम्ब्य लक्षणावृत्त्या तात्पर्येणैक्यं बोधयन्तीत्य... दाभासस्वप्नकल्पितयोर्ब्रह्मणा सहैक्यं वाक्यानि न बोधयन्ति त... याकार्यत्वेनावस्तुभूतत्वादित्यभिप्रायः । ननु प्रमाणफलस्य प्र... मित्याद्यहं ब्रह्मास्मीति चिदाभासेनैव प्रतिपन्नत्वेन तस्यैव ... स्यात्कूटस्थस्य साक्षिणः प्रमातृत्वासम्भवेन प्रमाणफलाश्र... पत्तेः काकस्य कार्ष्ण्यं धवलप्रासाद इतिवदन्यस्य ... स्यादित्याचार्यैरसम्बद्धमेवोच्यते इति चेन्नैष दोषः ... साक्षिप्रतिबिम्बत्वेन तदर्थत्वादनिर्वचनीयमायाकल्पि... द्यास्य प्रमाणफलाश्रयत्वानुपपत्तेः साक्षिणश्चिद...

* चतुर्विधं फलं नाम । उत्पत्तिराप्तिः संस्कारो गुणान्तरा...

तदात्मत्वात्परमार्थरूपत्वाच्च प्रमाणफलाश्रयोपपत्तेः "प्रत्ययी प्रत्यय-श्चेत्र यदाभासौ तदर्थता तयोरविविक्तमस्त्वाद्य चैतन्यं कल्प्यते फलम् कूटस्थ अपि फलं योग्यं राजनीव जयादिकम् तदनात्मत्वहेतुभ्यां क्रियायाः प्रत्ययस्य चे"त्याचार्यैः कूटस्थस्य साक्षिणो ऽपि प्रमाण-फलाश्रयत्वमस्तीति समर्थितत्वाच्च "ज्ञानिताज्ञानिते त्वात्माभासस्यैव न चात्मनः तथा च कथमाभासः कूटस्थो ऽस्मीति बुध्यताम् नायं शरीरश्चिदाभासः कूटस्थैकस्वभाववान् आभासस्य च मिथ्यात्वात् कूटस्थत्वावशेषणादिति" तृप्तिदीपाख्ये ग्रन्थे तैरेवाचार्यैराशङ्क्य परि-हृतत्वाच्च ॥ ३४ ॥

एवं पारमार्थिकजीवस्य साक्षिण एव परिपूर्णानन्दपरमात्मनैक्ये सिद्धे सत्यन्तर्बहिर्व्यष्टिसमष्टिभावेन जीवपररूपस्याविद्यावच्छिन्नस्य तत्त्वतो ऽनवच्छिन्नब्रह्मरूपस्यास्य साक्षिण एव भोक्तृभोज्यात्मकसमस्तप्रपञ्चाधिष्ठानत्वमन्तर्बहिश्चोपाधिभूतयोश्चिदाभासजगतोर्माया-कार्यत्वेन मिथ्यात्वं साक्ष्यनन्यत्वं तन्मात्रेणावशेषत्वं चोत्तरग्रन्थ-भूयस्त्वेन दर्शयितुं साक्षिणो जीवजगदधिष्ठानत्वं जीवजगतोर्माया-कार्यत्वं च दर्शयति ॥

ब्रह्मण्यवस्थिता माया विक्षेपाऽऽवृतिरूपिणी ।
आवृत्या ऽखण्डतां तस्मिन् जगज्जीवौ प्रकल्पयेत् ॥ ३५ ॥

ब्रह्मणीति ॥ अत्रापि छन्दोभङ्गभयादेव पूर्वापरनिपातव्यत्यासः ... तश्चार्थतश्च न पौनरुक्त्याख्यो दोषो ऽत्र शङ्कनीयः ब्रह्मा-... स्याऽलौकिकस्यातिसूक्ष्मत्वेन झटिति ज्ञातुमशक्यत्वादध्या-... प्रतिपत्त्यर्थत्वाच्छ्रुत्यैव नयकृत्य उपादत्त्वाच्च सत्यादिलक्षणे ... ऽवस्थिता ऽऽवृतिविक्षेपलक्षणशक्तिद्वयात्मिका ऽनिर्वचनीया मा-... श्रयभूतस्य ब्रह्मणो ऽखण्डतामाच्छाद्य तस्मिन्नवच्छेद्यमस्ति-... रूपिणि जगज्जीवौ प्रकल्पयेत्पूर्वोक्तप्रकारेण सृजेदित्यर्थः ॥३५॥

... ग्ययोर्मध्ये भोक्तृरूपस्य जीवस्यैव प्राधान्ये ऽपि पश्चा-... वाविल्युक्तमर्थक्रमानुसारेण । इदानीं तयोर्जीवजगतोः ... दर्शयति ॥

... श्चिदाभासो भवेद्भोक्ता हि कर्मकृत् ।
... सर्वं जगत्स्याद्भूतभौतिकम् ॥ ३६ ॥

जीव इति ॥ कृष्यादिकं यज्ञादिकं श्रवणादिकं च कर्म करोतीति कर्मकृत् स्वार्जितमैहिकामुष्मिकफललक्षणं भोगं भुनक्तीति भोक्ता एव मुक्तलक्षणो यो धीस्थश्चिदाभासः स एव ब्रह्माश्रितमायाकल्पितो जीव इत्युच्यते हिशब्दो यस्मादर्थे धीस्थश्चिदाभासः कर्मकृद्भोक्ता च यस्मात्तस्माज्जीवो भवेदित्यक्षरयोजना। भूतं पृथिव्यादि-भौतिकं देवतिर्यगादिशरीरजातं भूतं च भौतिकं च भूतभौतिकं भोक्तृणां भोगाधिष्ठानभूतं तत्तच्छरीरानुरूपेण भोज्यरूपमिदं परि-दृश्यमानं सर्वं भूतभौतिकं जगत्स्याज्जगदित्युच्यते ॥ ३६ ॥

एवं जीवजगतोः स्वरूपं दर्शयित्वा इदानीमनयोरनिर्वचनीय-मायाकार्यत्वेन मोक्षदशायामभावाद्व्यवहारमात्र स्थितत्वाच्चैतदुभयं व्यावहारिकमित्याह ॥

अनादिकालमारभ्य मोक्षात्पूर्वमिदं द्वयम् ।
व्यवहारे स्थितं तस्मादुभयं व्यावहारिकम् ॥ ३७ ॥

अनादिकालमिति ॥ अस्मिन्काले आरब्धे एते जीवजगती इति विचार्य केनापि निर्णेतुमशक्यत्वात् "प्रकृतिं पुरुषं चैव विद्ध्यन उभावपी"ति भगवद्वचनाच्च अनयोर्जीवजगतोरादिर्नास्त्येव "इ कलाः पञ्चदश प्रतिष्ठां यथा नद्यः स्यन्दमानास्समुद्रे ऽस्तं गच्छ तस्य तावदेव चिरं भूयश्चान्ते विश्वमायानिवृत्ति"रित्यार्ष "ततस्तिमितगम्भीरं न तेजो न तमस्ततम्। अनाख्यमनभिव्य श्चिद्वशिष्यते" इति वसिष्ठवचनाच्च अनयोर्जीवजगतोर्देहरा हित्यलक्षणविदेहकैवल्यदशायामभावादन्तो ऽस्त्येव यस्माद् अनादिकालमारभ्य वर्तमानदेहराहित्यलक्षणविदेहकैवल्यप्राप्ते प्रमातृप्रमाणप्रमेयाद्यनेकावान्तरभेदभिन्नत्रिपुट्यात्मके व्यवह जगदाख्यमिदं वस्तुद्वयं स्थितम् उक्तलक्षणं व्यवहारमाश्रि तस्मादेतदुभयं व्यावहारिकं न तु पारमार्थिकं प्रातिभासि जीवजगतोर्मायिकत्वं साक्षिणो जीवजगदधिष्ठानत्वं मुख ण्यवस्थिता मायेत्यस्मिन् श्लोके दर्शितम् अस्मिन् श व्यावहारिकत्वकथनद्वारा मिथ्यात्वं दर्शितमधि ष्ठानावशेषत्वं चार्थात्सूचितम् ॥ ३७ ॥

एवं ब्रह्मण्यवस्थितेत्यादिभिस्त्रिभिः श्लोके

जीवजगद्द्वयलम्बनेन द्रढीकरिष्यामीत्यभिप्रायेण स्वप्नजीवजगतोर्निद्राकार्यत्वं दर्शयति ॥

चिदाभासस्थिता निद्रा विक्षेपाऽऽवृतिरूपिणी ।
आवृत्य जीवजगती पूर्वे नूत्ने तु कल्पयेत् ॥ ३८ ॥

चिदाभासस्थितेति ॥ व्यावहारिकजीवाख्यचिदाभासाश्रया ऽऽवृतिविक्षेपात्मिका तमोरूपा प्रसिद्धा निद्रा ऽऽवरणशक्त्याकारेण पूर्वे व्यावहारिकजीवजगती आवृत्य ततो निद्राश्रयत्वेन निद्रावच्छिन्नचिदाभासस्वरूपं जाग्रत्समस्तप्रपञ्चसंस्कारसहिते देहस्थान्तर्नाडीमध्ये स्थिते ऽस्मिन् निद्रावच्छिन्नचिदाभासाकारे विक्षेपशक्त्याकारेण नूत्ने नूतने जीवजगती कल्पयेत् पूर्वनूतनजीवजगतोर्व्यावहारिकप्रातिभासिकत्ववैलक्षण्यद्योतनार्थस्तुशब्दः यथा निद्रा चिदाभासाश्रया तथा माया ऽपि ब्रह्माश्रया यथा निद्रा ऽऽवृतिविक्षेपाख्यशक्तिद्वयात्मिका तथा माया ऽपि शक्तिद्वयात्मिका यथा स्वप्नजीवजगतोर्निद्राकार्यत्वं तथा व्यावहारिकजीवजगतोरपि मायाकार्यत्वं यथा निद्रा- ... च्छिन्नचिदाभासाकारस्य स्वप्नजीवजगदधिष्ठानत्वं तथा मायाव- ... च्छिन्नसाक्ष्याख्यब्रह्माकारस्यापि व्यावहारिकजीवजगदधिष्ठानत्वं तस्माद्ब्रह्मण्यवस्थिता मायेत्यनेन श्लोकेन प्रदर्शिते ऽर्थे विप्र- ... हेतुः को ऽपि नास्तीत्यभिप्रायः ॥ ३८ ॥

...ब्देन द्योतितं वैलक्षण्यं स्पष्टयति ॥

...तिकालएवैते स्थितत्वात्प्रातिभासिके ।
...हि स्वप्नप्रबुद्धस्य पुनः स्वप्ने स्थितिस्तयोः ॥ ३९ ॥

...तकालइति ॥ प्रतीत्यनन्तरकालस्थितिं निषेधयत्येवकारः ...ाले एव वर्तमानत्वादेते स्वप्नजीवजगती प्रातिभासिके इत्यु- ...मर्थं व्यतिरेकमुखेनापि द्रढयति न हीति । एकस्मिन् दिने तस्मात्प्रबुद्धस्य दिनान्तरे दृश्यमाने स्वप्ने पूर्वदिनस्वप्न- ...जीवजगतोरवस्थितिर्नास्ति यस्मात्तस्मात्ते प्रातिभासिके ...व्यवहारिके पारमार्थिकत्वशङ्कैव नास्त्यनयोरनेन प्राति- ... स्वप्नजीवजगतोः प्रतीतिकाले एव स्थितत्वात्पुनः ... मिथ्यात्वं तथा व्यावहारिकजीवजगतोरप्यनादि- ... पूर्वं स्थितत्वात्ततः परमभावाच्च मिथ्यात्वं ...ऽमारभ्येति अनेन श्लोकेन प्रदर्शिते ऽर्थे विप्र-

तिपत्त्यवकाशो नास्तीत्यभिप्रायः ॥ ३९ ॥

एवं स्वाप्नजीवजगद्दृष्टान्तेन संक्षेपेण प्रदर्शितं व्यावहारिकजीव जगतोर्मिथ्यात्वं पुनः स्वप्नदृष्टान्तमवलम्ब्य श्लोकत्रयेण द्रढयितुं दृष्टान्तभूतयोः स्वप्नजीवजगतोर्मिथ्यात्वं तावद्दर्शयति ॥

प्रातिभासिकजीवो यस्तज्जगत्प्रातिभासिकम् ।

वास्तवं मन्यते ऽन्यस्तु मिथ्येति व्यावहारिकः ॥ ४० ॥

प्रातिभासिकेति ॥ स्वप्नकल्पितप्रातिभासिकाख्यो यो जीवः सः स्वप्नकल्पितं प्रातिभासिकाख्यं तज्जगद्वास्तवं मन्यते सत्यमित्यवगच्छति न तु मिथ्येति स्वस्य यावदवस्थानं तावत्तस्याप्यवस्थितत्वादन्योन्यपक्षव्यावृत्त्यर्थस्तुशब्दः प्रातिभासिकादन्यो व्यावहारिकाख्यो जीवस्तत्प्रातिभासिकं जगच्च तद्द्रष्टारं प्रातिभासिकं जीवं च मिथ्येति मन्यते न तु वास्तवमिति स्वप्नात्पूर्वं स्वप्नानन्तरं प्रबोधे च तयोरुभयोरप्यवस्थानाभावादिति भावः ॥ ४० ॥

दृष्टान्तेन प्रदर्शितं न्यायं दार्ष्टान्तिके योजयति ॥

व्यावहारिकजीवो यस्तज्जगद्व्यावहारिकम् ।

सत्यं प्रत्येति मिथ्येति मन्यते पारमार्थिकः ॥ ४१ ॥

व्यावहारिकेति ॥ उक्तलक्षणो यो व्यावहारिकजीवः स कल्पितं तद्व्यावहारिकं जगत्सत्यं प्रत्येति वास्तवमित्यवगच्छ तु मिथ्येति स्वस्य यावदवस्थानं तावत्तस्याप्यवस्थितत्व दन्यः पारमार्थिकजीवस्तद्व्यावहारिकं जगच्च तद्द्रष्टारं चि मिथ्येति मन्यते एतदुभयमसत्यमित्यवगच्छति न तु स नित्यप्रलयाख्यसुषुप्तौ तयोरनवस्थानस्यानुभवसिद्धत्वात् "न सीन्नो सदासी"दित्यादिश्रुत्यनुसारेणानादित्वे ऽपि "गताः इत्यादिश्रुत्यनुसारेण वर्तमानदेहराहित्यलक्षणविदेहकैवल तयोः प्रतीतिरप्यात्यन्तिकनाशस्य निश्चितत्वात् श्रुत्याचार्य शास्वभावसिद्धे ब्रह्मात्मत्वे साक्षात्कृते सति भाविदेह जीवन्मुक्तिदशायां तयोर्व्यावहारिकजीवजगतोः क सद्भावे ऽपि तयोः सत्ता ऽऽत्यन्तिकनाशस्य श्रुतियुन तस्मात्प्रातिभासिकजीवजगती यथा मिथ्याभूते वजगती च मिथ्यास्वरूपेति भावः ॥ ४१ ॥

मिथ्येति मन्यते पारमार्थिक इत्येतावता ग्रन्थेन प्रतिपादितमर्थं पुनर्द्रढयति ॥

पारमार्थिकजीवस्तु ब्रह्मैक्यं पारमार्थिकम् ।
प्रत्येति वीक्ष्यते नान्यद्वीक्षते त्वनृतात्मना ॥ ४२ ॥

पारमार्थिकेति ॥ अवधारणवाचको तुशब्दो पारमार्थिकः जीवः साक्षात्परमात्मस्वरूपः वर्तमानदेहराहित्यलक्षणविदेहकैवल्यप्राप्तिपर्यन्तं ब्रह्म चिच्छब्दलक्ष्यं साक्षिस्वगतादिभेदराहितं बन्धमोक्षादिव्यवहारातीतं सच्चिदानन्दलक्षणं स्वस्वरूपं ब्रह्मैक्यमेव पारमार्थिकमित्यवगच्छति नान्यद्वीक्षते "यत्र नान्यत्पश्यति यत्र त्वस्य सर्वमात्मैवाभू"दित्यादिश्रुतेः वीक्षते त्वनृतात्मना प्रबलप्रारब्धवशात्स्वरूपावस्थानाच्चिदाभासाकारेण व्युत्थितः सन्कदाचिज्जीवजगदादिकं यद्यपि वीक्षते तथा ऽपि मिथ्यात्वेनैव पश्यति न तु सत्यत्वेनेत्ययमेव तात्पर्यार्थः ॥ ४२ ॥

भू... एवं प्रातिभासिकजीवजगद्दृष्टान्तेन व्यावहारिकजीवजगतोर्भा... ... कार्यत्वमत एव मिथ्यात्वं च दृढीकृत्येदानीं दृष्टान्तभूतयोर्जीवज... ...धिष्ठानचिदाभासानन्यत्वं तन्मात्रेणावशेषत्वं च प्रसिद्धमपि ...पि बाह्यदृष्टान्तेन दृढीकृत्य तेन बाह्याभ्यन्तरदृष्टान्तद्वयेनापि व्या... ...कजीवजगतोरधिष्ठानभूतसाक्ष्यनन्यत्वं तन्मात्रेणावशेषत्वं च ...रोपिताकारस्याधिष्ठानानन्यत्वे बाह्यदृष्टान्तं तावद्दर्शयति ॥

...धुर्यद्रवशैत्यानि नीरधर्मास्तरङ्गके ।
अनुगम्याथ तन्निष्ठे फेने ऽप्यनुगता यथा ॥ ४३ ॥

...र्यमिति ॥ यथा दृष्टान्ते माधुर्यं च द्रवत्वं च शैत्यं च ...शैत्यानि नीरधर्मा जलगुणाः जलस्योपरि वातवशात्तरङ्ग... ...ति जलविवर्तत्वेन जलनिष्ठे तस्मिन् तरङ्गे अनुगम्याथ ...रं तत्तरङ्गविवर्तत्वेन तरङ्गनिष्ठे फेने ऽप्यनुगताः ...ति भेदव्यवहारे विद्यमाने ऽपि जलादीनां माधुर्य... ...स्वरूपाभावतया तेषां माधुर्यद्रवशैत्यात्मकत्वा... ...त्तरोत्तरव्यानृत्ताकारेण विवर्तमानत्वादुत्तरोत्त... ...पानानन्यत्वं प्रदर्शितमनेन श्लोकेन ॥ ४३ ॥

एवमारोपिताकारस्याधिष्ठानानन्यत्वं बाह्यदृष्टान्तेन दर्शयित्वा तमेव न्यायं दार्ष्टान्तिके योजयति ॥

साक्षिस्थाः सच्चिदानन्दाः सम्बन्धाद्व्यावहारिके ।
तद्द्वारेणानुगच्छन्ति तथैव प्रातिभासिके ॥ ४४ ॥

साक्षिस्था इति ॥ यथा दृष्टान्ते तथा दार्ष्टान्तिके ऽपि ब्रह्मस्वरूपे साक्षिणि स्थिताः स्वरूपलक्षणशब्दवाच्याः सत्यज्ञानानन्दाः साक्षिगुणास्तरङ्गे जलगुणानां सम्बन्धवद्व्यावहारिकजीवजगतोः सम्बन्धाद्व्यावहारिकजीवजगद्व्यवधानेन प्रातिभासिकजीवजगतोरप्यनुवृत्ता भवन्ति । व्यावहारिकः प्रातिभासिक इत्यतो व्यावहारिकप्रातिभासिकजगतोरप्युपलक्षणं जीवयोस्तत्तज्जगदन्तःपातित्वेन जगद्व्यतिरेकेणाभावात्साक्षिस्था इत्याधाराधेयभावो गुणगुणिभावश्च राहोः शिर इति वदौपचारिकः प्रातिभासिकजीवजगतोश्चिदाभासविवर्तकत्वं स्वभावतः प्रसिद्धे ऽपि तरङ्गस्थानीयचिदाभासस्थाः सच्चिदानन्दा एव फेनस्थानीयप्रातिभासिकजीवजगतोरप्यनुगता इति पुनरप्येवं निश्चिते सति यथा तयोः प्रातिभासिकयोर्जीवजगतोश्चिदाभासानन्यत्वं यथा वा जलस्थमाधुर्यादीनामेव तरङ्गे ऽप्यनुगत[illegible] तरङ्गस्थजलानन्यत्वं यथा जलस्थानीये साक्षिणि स्थितानां सा[illegible] दिस्थानीयानां सच्चिदानन्दानामेव तरङ्गस्थानी[illegible]योश्चिदाभास[illegible] तोरप्यनुगतत्वेन तयोः ब्रह्मभूतसाक्ष्यनन्यत्वं सिद्धमिति भावः[illegible] एवात्मा मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु स्थानत्रयव्यतीतस्य[illegible] न विद्यते" इत्यादिश्रुतेः ॥ ४४ ॥

एवं व्यावहारिकजीवजगतोरधिष्ठानभूतसाक्ष्यनन्यत्वं [illegible] मुखेन दर्शयित्वा तदेव पुनरधिष्ठानावशेषत्वेन द्रढयितुं पूर्[illegible] दृष्टान्तं दर्शयति ॥

लये फेनस्य तद्धर्मा द्रवाद्याः स्युस्तरङ्गके ।
तस्यापि विलये नीरे तिष्ठन्त्येते यथापुरा ॥ ४[illegible]

लये इति ॥ तरङ्गविवर्तस्य फेनस्य नाशे सति[illegible] माधुर्यशैत्याद्याः फेनाधिष्ठाने तरङ्गे भवन्ति [illegible] स्यापि नाशे सत्येते द्रवाद्यास्तरङ्गफेनाद्युत्पत्तेः नीरे तिष्ठन्ति तथा तिष्ठन्त्येव कालत्रये ऽपि न[illegible]

तरङ्गफेनयोरविद्यमानत्वान्नीरजत्वान्नीरस्थत्वान्नीरलयत्वाच्च नीरव्य-तिरेकेण तरङ्गफेनौ न स्त इत्यर्थः ॥ ४५ ॥

दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयति ॥

> प्रातिभासिकजीवस्य लये स्युर्व्यावहारिके ।
> तल्लये सच्चिदानन्दाः पर्यवस्यन्ति साक्षिणि ॥ ४६ ॥

प्रातिभासिकेति ॥ अत्रापि प्रातिभासिकजीवजगतोर्लये सति तत्र स्थिताः सच्चिदानन्दाः जाग्रत्प्रपञ्चसंस्कारसहिते चिदाभासे भवन्त्यत्रापि तल्लये तज्जगतोऽप्युपलक्षणं नित्यनैमित्तिकप्राकृतात्यन्तिकाख्येषु प्रलयेषु व्यावहारिकजीवजगतोर्लये सति तत्र स्थिताः सच्चिदानन्दाः सर्वाधिष्ठानभूते साक्षिण्येव पर्यवस्यन्ति निष्ठां प्राप्नुवन्ति तस्याप्यधिष्ठानभूतस्य कस्य चिद्वस्तुनोऽभावादेवं साक्षिणः कालत्रयेऽपि सद्रूपत्वात् व्यावहारिकजीवजगदादेः सृष्टेः पूर्वं प्रलयानन्तरं चाविद्यमानत्वात्तज्जत्वात्तत्रस्थत्वात्तल्लयत्वाच्च तल्लक्ष्य-ब्रह्माभिन्नसाक्षिव्यतिरेकेण व्यावहारिकजीवजगदादिर्नास्त्येवेत्यर्थः । भू ...रव्याघ्रादीनामाभिमुख्यागमनेन प्रातिभासिकजीवकर्तृकेण तद्दर्श- ...निद्रावच्छिन्नचिदाभासस्यैव निद्राश्रयभूतेन चिदाभासेनैक्यवि- ...जागरणाख्ये प्रबोधे जाते सति दिनान्तरे विद्यमानप्रातिभासिक- ...दृष्ट्या स्वरूपभूतचिदाभासाज्ञानपूर्वकसमस्तसंसारे विद्यमाने ...र्तमानदिने चारव्याघ्रादिदर्शनेन प्रबुद्धः प्रातिभासिकजीवः ...शक्तिद्वयात्मकनिद्रात्यन्तिकनाशान्निद्राश्रयावच्छिन्नाद्वि- ...एकरूपे चिदाभासे भूगुपतनादिकर्तव स्वनाशेन चिदा- ...प्राप्तुमिच्छया प्रातिभासिकभोग्यरूपसमस्तप्रपञ्चेन सहा- ...नाशं यथा प्राप्नोति तथा व्यावहारिकजीवोऽपि व्यावहा- ...दृष्ट्या स्वरूपभूतप्रत्यगभिन्नसच्चिदानन्दलक्षणब्रह्मताज्ञान- ...हितसंसारे विद्यमानेऽपि चारव्याघ्राद्याभिमुख्यागमनस्थानी- ...चार्यानुग्रहेण प्रातिभासिकजीवकर्तृकतद्दर्शनस्थानीयेन ...श्रवणानुष्ठानेन निद्रावच्छिन्नचिदाभासस्थानीयस्य माया- ...लपो ...वतोऽनवच्छिन्नस्य ब्रह्मरूपस्य साक्षिण एव निद्रा- ...नुविद्ध ...थानीयेन पूर्णेन ब्रह्मणैक्यविषयं ब्रह्मविद्याख्यं ...कनिष्ठं ...दृष्ट्या शक्तिद्वयात्मकमायात्यन्तिकनाशान्मा- ...शब्दानुविद्धेना ...रहिते अत एव स्वगतादिभेदवर्जिते सच्चिदा-

नन्दलक्षणे ब्रह्मात्मनि देवत्वकामनया ऽग्निप्रतिष्ठेव साक्षित्वमात्रावशेषवाञ्छया ब्रह्मसाक्षात्कारकालमारभ्य वर्तमानदेहराहित्यलक्षणविदेहकैवल्यप्राप्तिपर्यन्तं व्यावहारिकभोग्यरूपसमस्तप्रपञ्चेन सह शनैः शनैर्नाशं यात्यात्यन्तिकलयं प्राप्नोति "देवत्वकामा अग्न्यादौ प्रविशन्ति यथा तथा साक्षित्वेनावशेषाय स्वविनाशं स वाञ्छति यावत्स्वदेहदाहः स्यान्नरत्वं नैव मुञ्चति यावदारब्धदेहः स्यान्नाभासत्वविमोचन"मित्येतत्तैरेव तृप्तिदीपाख्ये ग्रन्थे उपपत्त्या सह प्रदर्शितत्वात्तस्मादस्य चिदाभासस्य भ्रान्तिविवेकौ नित्यमुक्ते साक्षिण्यध्यस्तौ न वास्तवावित्येतत्तैरेव भारतीतीर्थगुरुभिरुपनिषत्संक्षेपवार्तिके सम्यक् निरूपितम् । "बोधात्पुरा तु चिद्भ्रान्त्या मग्ना भोक्तरि शोचति सा भ्रान्तिर्भोक्तृनिष्ठैव तद्विवेको ऽपि भोक्तृगः भोगान्तरभेदो हि भ्रान्तितद्बोधकावुभौ इतरारोपितत्वाच्च चित्यध्यस्तौ न वास्तवावि[illegible] । अस्य साक्षिणः साक्षित्वं साक्ष्यापेक्षं न तु वास्तवमित्येतदप्यद्वैतमकरन्दकारैर्निरूपितम् । "चैत्योपरागरूपा मे साक्षिता ऽपि न तात्त्विकी उपलक्षणमेवेयं निस्तरङ्गचिदम्बुधेरिति चैत्यं जडपदार्थः यस्मादेवं तस्माद्व्यावहारिकदृष्ट्यनुसारेण मायाश्रयत्वं मायाहङ्काराभ्याम[illegible] च्छिन्नत्वं नामरूपतादात्म्येन भोग्यत्वं अन्तःकरणे प्रतिबिम्बितचि[illegible] भासाकारेण कर्तृत्वभोक्तृत्वादिरूपसंसारित्वं "ब्रह्म वा इद[illegible] आसीत् तदात्मानमेवावेदहं ब्रह्मास्मी"ति श्रुत्यनुसारेण ब्रह्म[illegible] त्कर्तृत्वं जीवन्मुक्तत्वं च विदेहमुक्तत्वं च "न निरोधो न चो[illegible] र्न बद्धो न च साधकः न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थ[illegible] श्रुतिप्रामाण्यात्परमार्थदृष्ट्यनुसारेण मायाश्रयत्वादिविदेह[illegible] र्यन्तसमस्तव्यवहारातीतत्वं च प्रत्यगभिन्नस्य सच्चिदा[illegible] स्याद्वितीयस्यावाङ्मनसगोचरस्य ब्रह्मण एवोपपद्यते अत ए[illegible] शास्त्रस्यापि साफल्यं स्यादित्ययमेवास्य प्रकरणस्य [illegible] दान्तशास्त्रस्य महातात्पर्यत्वेन पिण्डीकृतो ऽर्थः । तस्मात्स[illegible] मिति ॥ ४६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दभारतीतीर्थ[illegible]

ब्रह्मानन्दभारतीप्रक्लृप्ता वाक्यसुधाटीका स[illegible]

शुभं भवतु ।

# BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS:

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M. A., C. I. E.

AND

G. THIBAUT, PH. D.

*Nos. 55. & 56.*


# विवरणोपन्यासः

## विवरणतात्पर्यव्याख्यानरूपः ।

अपि च

## सटीका वाक्यसुधा ।

# VIVARANOPANYÂSA,

A COMMENTARY ON VIVARANATÂTPARYA

*( A Treatise on Vedanta Philosophy )*


BY ŚRÎ RÂMÂNANDA SARASVATÎ :

ALSO VÂKYASUDHÂ BY ŚRÎ ŚANKARÂCHÂRYA

WITH A COMMENTARY BY ŚRÎ BRAHMÂNANDA BHÂRATÎ.

EDITED BY

PANDIT DÂMODARA ŚÂSTRÎ SAHASRAB

OF THE GOVT. SANSKRIT COLLEGE, BENARES



BENARES.

*PUBLISHED BY THE PROPRIETORS Messrs. BRAJ B.*

AND SOLD BY H. D. GUPTA

*SECRETARY, CHOWKHAMBA SANSK*

PRINTED BY FREEMAN & CO., LTD., AT THE TARA

BENARES.

1901.

॥ श्रीः ॥

# विवरणोपन्यासभूमिका ।

—§—*—§—

अयं किल वेदान्तप्रमेयागाधविषयविवरणस्वरूपस्य विवरणाभिधानस्य ग्रन्थरत्नस्याप्रौढवेदान्तव्युत्पत्तीनां दुर्बोधत्वं विचार्य करुणासान्द्रान्तःकरणैस्तत्रभवद्भिः श्रीमद्रामानन्दसरस्वतीयतीन्द्रपादैस्तत्तात्पर्यव्याख्यानरूपो विवरणोपन्यासाभिधो ग्रन्थो निरमायि ।

अयं च यतीन्द्रः कदा कतमं देशमलञ्चकारेत्यत्र न किञ्चिद्विश्वसनीयं प्रमाणमुपलभ्यत इति व्यर्थ एव तद्विषये निर्मूलानुमानप्रयासः ।

सोऽयं ग्रन्थो वेदान्तशास्त्ररसिकानां विद्वद्वराणां मनोविनोदाय भवत्विति तत्प्रकाशने सोत्कण्ठोऽहं प्राचीनानां द्वित्राणां पुस्तकानां साहाय्येन यथामति तच्छोधनमकरवम् । न्यवेशयं च तत्र तत्रावशिष्टानामशुद्धीनां शुद्धिपत्रम् ।

तदेवं सपरिश्रमं कृतशोधनेऽप्यत्र यदि मद्बुद्धेरपाटवेन, सीसकाक्षयोजकादीनां वा प्रमादेन काश्चनाशुद्धय उपलभ्ये तद्गुणैकपक्षपातिनो विपश्चिदपश्चिमा मर्षयिष्यन्त्येवेति निश्चितमा

अन्ते चास्मिन् यथावकाशं तत्र तत्र स्थलेषु शोधन कृतसाहाय्यैरस्मत्सुहृद्वरैः काशिकराजकीयप्रधानपाठालयाध्य स्तैलङ्गरामशास्त्रिभिर्बहूपकृतोऽस्मीति तेभ्यः परःशतं धन वितरन् विरमाम्यस्माद्विस्तरादिति शिवम् ।

| | |
|---|---|
| पौ० शु० ११ सोमे | सहस्रबुद्धयुपाह्वो |
| काश्याम् । | दामोदरशार्म |

# शुद्धिपत्रम् ।

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ७ | तं भिन्दन् | भिन्दन् |
| १ | ८ | वन्दे सर्वव० | तं वन्दे सर्व० |
| २ | ८ | प्रारिप्सितदु० | प्रारिप्सित प्रति-बन्धकदुरि० |
| ४ | १८ | सत्यवादि० | सत्यत्वादि० |
| ५ | ९ | प्रायच्छादिति० | प्रायच्छामि० |
| ८ | १ | ज्ञानान्निवृत्त० | ज्ञानान्निवर्तेरन् |
| ८ | ४ | प्यवृत्तित्वो० | प्यव्याप्यवृ० |
| १२ | २७ | प्रत्यक्षवादि० | प्रत्यक्षत्वात्तत्प्रत्य-क्षत्व वादितोऽपि० |
| १८ | ३० | अथ सिद्धान्त० | अपसिद्धान्त० |
| २१ | ८ | प्रमृष्ट० | प्रमुष्ट |
| ४३ | २३ | तत्र | तत्र |
| ४४ | १५ | घटस्यैव | घटस्येव |
| ४८ | २८ | शक्तस्येव | शक्तस्यैव |
| ५१ | २३ | प्रत्यक्षनैष्पल्ल्या० | प्रत्यक्षनैल्या० |
| ५२ | २५ | स्वर्व | सर्व |
| [illegible] | ११ | नात्वियं | नत्वयं |
| [illegible] | १३ | वात्तान | वाज्ञान |
| [illegible] | ५ | नथहतोः | नर्थहेतोः |
| [illegible] | ५ | ब्रम्हभिन्ना | ब्रह्माभिन्ना |
| [illegible] | [illegible] | शेषे नि | शेषेण नि |
| [illegible] | [illegible] | एवं प्रमा | एवमप्राम |
| [illegible] | [illegible] | ऽविद्या | मूलाविद्या |
| [illegible] | [illegible] | द्याति | ऐन्द्येति |
| [illegible] | [illegible] | ’द्यस्के | साद्यस्के |
| [illegible] | [illegible] | गदर्शन० | योगादर्शन |
| [illegible] | [illegible] | ाकिकात्मनाः | लौकिकात्मनोः |
| [illegible] | [illegible] | शादिक | वादादेव |
| [illegible] | [illegible] | ज्ञातत्वं | मज्ञातत्व |
| [illegible] | [illegible] | र्यं तत्र | तात्पर्यं वक्तुंतत्र |
| [illegible] | [illegible] | नो | श्रेयः साधनं |
| [illegible] | [illegible] | [illegible] | भाव्यस्य |
| [illegible] | [illegible] | [illegible] | वेदस्याध्याय |
| [illegible] | [illegible] | [illegible] | शयति |
| [illegible] | [illegible] | [illegible] | धिनास्व |
| [illegible] | [illegible] | [illegible] | नादि |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९२ | ८ | आनन्तर्यविधि | आनन्तर्याविधि |
| ९९ | २४ | तथा च | तथाचाऽ- |
| १०१ | १८ | स्फुरणं | स्फुरणं |
| १०२ | ८ | श्रवणाविधिः, | श्रवणविधिः |
| १०४ | ३० | बहूत्स्या ऽत्रा | बहूत्स्या यत्राना |
| १०६ | २८ | वाविनः | वादिनः |
| १०८ | ६ | भमैता | ममैता |
| १०८ | २२ | शून्यातिना | शून्यान्तिना |
| ११२ | १३ | दुःखाभि | दुःखाभि |
| ११२ | २६ | सूत्रयता | सूत्रकृता |
| ११३ | २८ | ब्रह्मत्वस्यानु | ब्रह्मत्वज्ञानानु |
| ११६ | १७ | नुपमर्दे | नुपमर्दे |
| ११६ | २० | इयाव | इमावयव |
| ११८ | ३२ | तत्तू स | तत्तु स |
| ११९ | ८ | ज्ञाने ध | ज्ञाते ध |
| १२१ | २१ | अचेतनया | अचेतनतया |
| १२७ | १६ | वेदान्ताः | वेदान्ताः |
| १२८ | १८ | कर्णषष्कुल्या | कर्णशष्कुल्या |
| १२८ | २० | पाधिकन्तु | पाधिकं तु |
| १२८ | २१ | नन्त्यशब्दाः | नन्तशब्दाः |
| १३१ | १६ | संसर्गोऽनु | संसर्गानु |
| १३६ | १२ | दिष्टासिद्धिः० | दिष्टसिद्धिः |
| १३७ | ८ | श्रुतरशरीर | श्रुतरश० |
| १४४ | ३० | मवे | मेव |
| १४५ | १७ | दर्ज्ञयति | दर्शयति |
| १४५ | २४ | येद्य इ | वेद्य इ |
| १४८ | ८ | भूतसर्गस्य | भूतसंसर्ग० |
| १४८ | २१ | अस्ति भवति | अस्तिर्भव० |
| १४९ | १८ | निबन्धे | निषेधे |
| १४९ | १८ | प्रत्ययातुदित० | प्रत्ययानु० |
| १४९ | २६ | तत्रष्टास्वर्ग | तत्रष्टस्वर्ग |
| १४९ | ३० | नियोगेन | नियोगे |
| १५० | १ | इष्टासाधन | इष्टसाधन |
| १५० | २५ | नह्यन्धनैव | नह्यन्धेनैव |

+—§ इति §—+

॥ श्रीः ॥

---

अथैषा प्रस्तूयते वाक्यसुधानाम्नी वेदान्तसुधालहरीव प्रकरणिका सम्मुद्रय प्रकाशितुम् । एतत्कर्तारो भगवत्पूज्यपादाचार्याः श्रीमच्छङ्कराचार्यपादा इति तद्विषये परिचयदानं नाम दीपेन भगवत उष्णरश्मेः प्रकाशनमिवात्र न सन्देहः । करुणामसृणान्तरङ्गैर्भगवदाचार्यैरेतत्सुधासेचनेन शान्तान्तःकरणतां सम्पादयितुं कृते ऽपि रचनाप्रयासे तस्याः सुदुर्लभतया न प्राभूवन् वेदान्तशास्त्ररसिकास्तमास्वादयितुमिति विचार्यात्रत्यचौखम्भासंस्कृतसीरिजाख्यग्रन्थमालाध्यक्षेण श्रेष्ठिवरेण श्रीमद्धरीदासाभिधेन तन्मुद्रणकार्ये दत्तोत्साहः प्रावर्तेऽहमेन्मुद्रणे ।

इयं किल सुधा सल्पापि सुधेन विबुधानां मोदहेतुर्भवत्विति भगवन्तं काशीविश्वेश्वरं प्रार्थयन्, मद्दृष्टिदोषेण चात्रावशिष्टाः सुलभा अशुद्धीः क्षान्तुं विनयेन गुणैकपक्षधीमद्वारान् निवेदयन्, विरमाम्यस्माल्लेखादिति शुभम् ।

माघकृष्णाष्टम्यां रवौ
१९५७
काश्याम् ।

सहस्रबुद्धयुपाह्वो
दामोदरश

श्रीगणेशाय नमः ।

# ॐ नमो भगवत्यै सङ्कष्टनाशिन्यै ।

## रामानन्दसरस्वतीकृतो विवरणोपन्यासः ।

---

वन्दे वन्दारुवृन्दस्फुटमुकुटमणिद्योतिताङ्घ्रिं रमेशं
श्रीरामं सद्य एव प्रणतजनगतध्वान्तविच्छेदहेतुम् ।
सत्यानन्दानुभूतिं जनहृदि विशनान्मायया जीवसंज्ञं
सर्वज्ञं सर्वसंज्ञं निजमहिमदृशां नेति नेत्यक्षराख्यम् ॥ १ ॥
वेदान्तार्थं गभीरं ह्यतिसुगमतया बोधयामीति विष्णु-
र्व्यासात्मा ऽसूत्रयत्तद्दुरधिगममभूद्वादिदुर्बुद्धिभेदात् ।
तं भिन्दन् दुर्बुद्धिभेदं य इह करुणया ऽभाष्ययद्भाष्यमेतत्
वन्दे सर्ववन्द्यं त्रिजगति भगवत्पादसंज्ञं महेशम् (१) ॥ २ ॥
(२) कामाक्षीदत्तदुग्धप्रचुरसुरनुतप्राज्यभोज्यातिपूज्य-
श्रीगौरीनायकाभिप्रकटनशिवरामार्यलब्धात्मबोधैः ।
श्रीमद्गोपालगीर्भिः प्रकटितपरमाद्वैतभासास्मिता ऽस्य
श्रीमद्गोविन्दवाणीचरणकमलगो निर्वृतो ऽहं यथालिः ॥ ३
टीकाकारान्नमस्कृत्य तद्व्याख्यातॄंश्च सिद्धये ।
तद्ग्रन्थयोजनार्थस्य तदुपन्यास ईर्यते ॥
अर्थसङ्ग्राहकश्लोका अर्थस्मृत्यर्थमी
तेषामपेक्षितो न्याय इह यत्नात्प्रकाश्य
हरिशङ्करयोगे ऽस्मिन् भाष्यतीर्थे मुमु
सिष्णासवः सुखोपायः पन्थास्तेषामय

नन्वभीप्सितकार्यारम्भे शिष्टा मङ्गल
फलाभावात् । न च समाप्तिः फलम् ।
विनापि दर्शनात् । नापि विघ्नध्वंस फल
तथाहि । किं ज्वरादिर्विघ्नः । दुरितं वा ।

---

(१) श्रीशङ्कराचार्यमित्यर्थः ।

(२) कामाक्षीदत्तदुग्धेत्ययं श्लोको ऽसम्बद्ध इति प्रति

श्रीगणेशाय नमः ।

# ॐ नमो भगवत्यै सङ्कष्टनाशिन्यै ।

# रामानन्दसरस्वतीकृतो विवरणोपन्यासः ।

वन्दे वन्दारुवृन्दस्फुटमुकुटमणिद्योतिताङ्घ्रिं रमेशं
श्रीरामं सच्च एव प्रणतजनगतध्वान्तविच्छेदहेतुम् ।
सत्यानन्दानुभूतिं जनहृदि विशनान्मायया जीवसंज्ञं
सर्वज्ञं सर्वसंज्ञं निजमहिमदृशां नेति नेत्यक्षराख्यम् ॥ १ ॥
वेदान्तार्थं गभीरं ह्यतिसुगमतया बोधयामीति विष्णु-
र्व्यासात्मा ऽसूत्रयत्तद्दुरधिगममभूद्यादिदुर्बुद्धिभेदात् ।
तंभिन्दन् दुर्बुद्धिभेदं य इह करुणया ऽभाष्ययद्भाष्यमेतत्
वन्दे सर्ववन्द्यं त्रिजगति भगवत्पादसंज्ञं महेशम् (१) ॥ २ ॥
(२)कामाक्षीदत्तदुग्धप्रचुरसुरनुतप्राज्यभोज्यातिपूज्य-
श्रीगौरीनायकाभित्प्रकटनशिवरामार्यलब्धात्मबोधैः ।
श्रीमद्गोपालगीर्भिः प्रकटितपरमाद्वैतभासास्मिता ऽस्य
श्रीमद्गोविन्दवाणीचरणकमलगो निर्वृतो ऽहं यथालिः ॥ ३ ॥
टीकाकारान्नमस्कृत्य तद्व्याख्यातृंश्च सिद्धये ।
तद्ग्रन्थयोजनार्थस्य तदुपन्यास ईर्यते ॥ ४ ॥
अर्थसङ्ग्राहकश्लोका अर्थस्मृत्यर्थमीरिताः ।
तेषामपेक्षितो न्याय इह यत्नात्प्रकाश्यते ॥ ५ ॥
हरिशङ्करयोगे ऽस्मिन् भाष्यतीर्थे मुमुक्षवः ।
सिष्णासवः सुखोपायः पन्थास्तेषामयं भवेत् ॥ ६ ॥

नन्वभीप्सितकार्यारम्भे शिष्टा मङ्गलमाचरन्ति । तदयुक्तम् । फलाभावात् । न च समाप्तिः फलम् । प्रमत्तानुष्ठितसमाप्तेर्मङ्गलं विनापि दर्शनात् । नापि विघ्नध्वंसः फलम् । विकल्पासहत्वात् । तथाहि । किं ज्वरादिर्विघ्नः । दुरितं वा । नाद्यः । विज्वरेण कृत-

(१) श्रीशङ्कराचार्यमित्यर्थः ।

(२) कामाक्षीदत्तदुग्धेत्ययं श्लोको ऽसम्बद्ध इति प्रतिभाति ।

मङ्गलस्य वैफल्या[1]पातात् । मङ्गलानन्तरं ज्वराद्यनिवृत्तेश्च । न द्वितीयः । हरिस्मरणेनापि सर्वदुरितध्वंसे मङ्गलानपेक्षणात् । न च हरिस्मरणमेव मङ्गलमिति वाच्यम् । दधिदूर्वादिवैफल्यापातात् । न च तयोर्विकल्पः । असमफलत्वात् । वस्तुतो निष्पापेन कृतस्मरणादेः फलानिरूपणात् । नापि विघ्नानुत्पादः फलम् । उत्पन्ने विघ्ने मङ्गलाननुष्ठानप्रसङ्ग इति चेत् । उच्यते । विघ्नाभावप्रयोज्यसमाप्तिर्मङ्गलफलम् । न समाप्तिमात्रम् । अतो न प्रमत्तानुष्ठितसमाप्तौ व्यभिचारः । न च सापि विघ्नाभावप्रयोज्या । तदीयप्रारिप्सितदुरितविशेषस्य विघ्नशब्दार्थस्य तत्रासत्त्वेन तदभावाप्रसिद्धेः । मङ्गलस्योत्तेजकत्वेन प्रतिबन्धकस्थलीये कार्ये एव हेतुत्वमुचितम् । निर्विघ्नं समाप्यतामिति कामनया स्वेष्टसाधनतांशे भ्रमरहितानां शिष्टानामाचारेणानुमितया श्रुत्या विघ्नाभावप्रयोज्यसमाप्तावेव मङ्गलस्य हेतुत्वबोधनात् । मङ्गलं चापूर्वद्वारा समाप्तिहेतुः । अपूर्वं तु सति विघ्ने तं ध्वंसयति । अदृष्टस्य स्वकार्यानुकूलकारित्वात् अन्यत एव विघ्नध्वंसे तु समाप्तिमेव करोति । सविघ्नकार्यान्तरसमाप्तिं वा । अत एव मङ्गले कृतेऽपि असमाप्तिर्युज्यते[2] । विघ्नबाहुल्यसंभवात् । फलबलेन मङ्गलापूर्वस्यैकविघ्नध्वंसमात्रकारित्वकल्पनात् । काम्यकर्माणि अङ्गवैकल्येनापूर्वानुत्पत्तिर्वा कल्प्यताम् । अतो मङ्गलस्यापूर्वद्वारा विशिष्टसमाप्तिफलकत्वमिति संक्षेपः । मङ्गलं ग्रन्थकरणाङ्गमिति वृद्धाः ॥ तत्फलान्यफलशून्यत्वात् । प्रचयगमनस्याङ्गाङ्गिनोः फलीभूतसमाप्त्यधीनत्वात् । शिष्टाचारपरिपालनस्यानुष्ठानमात्राधीनत्वेन मङ्गलापूर्वाजन्यत्वात् । वस्तुतस्तु वैदिकं मङ्गलं लौकिकस्य ग्रन्थकरणस्य नाङ्गमित्यनवद्यम् ॥ ननु युष्मदस्मदित्याद्यध्यासप्रतिपादको ग्रन्थो भाष्यं न भवति । स्वपदव्याख्याने सति सूत्रानुकारिवाक्यैः सूत्रार्थवर्णनस्य भाष्यलक्षणस्याभावात् । तथा हि अथातो ब्रह्मजिज्ञासेति सूत्रे निरर्थकानुवादत्वपरिहाराय शास्त्रे पुरुषप्रवृत्तये च कर्तव्येति पदमध्याहर्तव्यम् । अध्याहृतं च भाष्यकृता ब्रह्मजिज्ञासा कर्तव्येति । तत्र प्रकृतिप्रत्ययार्थयोर्ज्ञानेच्छयोः कर्तव्यत्वानन्वयात् सन्प्रत्ययेन जहल्लक्षणया विचारो गृह्यते । जिज्ञासेति यौगिकपदस्य वा-

(१) वैफल्यप्रसङ्गादिति पाठान्तरम् ।
(२) असमाप्तिर्दृश्यते इति वा पाठः ।

क्यत्वात् अशक्तत्वेन लक्षकत्वायोगात् । प्रकृत्या फलीभूतं ज्ञानम् अजहल्लक्षणया लक्ष्यते । विषं भुङ्क्ष्वेत्यादिवत् पदद्वये लक्षणोपपत्तेः । ततश्चाथशब्दोपात्ताधिकारिणा मुमुक्षुणा ब्रह्मज्ञानाय विचारः कर्तव्य इति सूत्रस्य श्रौतो ऽर्थः । अर्थादधिकारिविशेषणं मोक्षो ज्ञानफलत्वेनान्वेति । औपनिषदत्वश्रुतेर्ब्रह्मज्ञानकरणतया वेदान्तानां बुद्धौ संनिधानात् विचारविषयता लभ्यते । तथा चाधिकारिणा मोक्षसाधनब्रह्मज्ञानाय वेदान्तवाक्यविचारः कर्तव्य इति सूत्रतात्पर्यार्थः । एतदर्थाऽस्पर्शित्वेनाभाष्यत्वात् । भाष्यत्वेनायं ग्रन्थो न व्याख्येय इति चेत् । उच्यते । ब्रह्मज्ञानं हि विचारफलत्वेन सूत्रितं तस्य स्वतो ऽपुरुषार्थस्य कथं फलत्वमिति वक्तव्यम् । न च सुखसाक्षात्कारत्वात् स्वतःफलतेति वाच्यम् । वृत्तेरनित्यतया मुमुक्षुकाम्यत्वादिसम्भवात् । स्वरूपसाक्षात्कारस्य विचारासाध्यत्वात् । नापि सूत्रितज्ञानस्य स्वर्गादिकं फलं सर्वतो विरक्तस्य ब्रह्मजिज्ञासाधिकारात् । अतः परिशेषात् जीवगतबन्धनिवर्तकत्वेनैव ज्ञानं फलम् । बन्धस्य सत्यत्वे ज्ञानान्निवृत्त्ययोगात् अध्यासो भाष्यकारैर्वर्ण्यते । एवञ्चाह को ऽयमित्यादिना अस्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त इत्यन्तेन भाष्येण लक्षणसम्भावनाप्रमाणैः साधितमध्यासं युष्मदस्मदित्याक्षेपसमाधानभाष्याभ्यामनूद्य तात्पर्येण विषयप्रयोजने सूत्रेणार्थात्सूत्रिते प्रतिपाद्येते । यथा धूमवानयमिति वाक्येन हेतुमनूद्य वह्निरेव प्रतिपाद्यते । हेतुवचनस्य प्रतिज्ञातार्थे तात्पर्यात् । यत्परः शब्दः स शब्दार्थ इति न्यायात् । केचित्तु तात्पर्यार्थः सर्वो ऽपि शब्दस्य मुख्यार्थ इत्याहुस्तन्न । लक्षणोच्छेदापत्तेः । तस्मादाक्षेपादिभाष्यद्वयं मुख्यवृत्त्या हेतुमध्यासमनूद्य तात्पर्यानुपपत्त्या लक्षणया विषयप्रयोजने साध्ये प्रतिपादयति । ननु ब्रह्मात्मैक्यलक्षणो विषयः कथं सूत्रित इति चेत् उच्यते । जीवगतकर्तृताद्यध्यासस्य ब्रह्मज्ञाननिवर्त्यत्वं तावत्सूत्रितमित्युक्तम् । जीवब्रह्मणोर्भेदे तत्कथं स्यात् । भिन्नविषययोरध्यासतत्त्वज्ञानयोर्निवर्त्यनिवर्तकभावायोगादित्यर्थाद्विषयो ऽपि सूत्रित इति ॥ अध्यासस्य विषयप्रयोजनहेतुत्वं कथमिति चेत् । उच्यते । अथातो ब्रह्मजिज्ञासेति सूत्रसङ्घातात्मकं शास्त्रं प्रेक्षावत्कृतिविषयः सफलत्वात् कृष्यादिवत् । न च गन्धादिज्ञाने व्यभिचारः । कृतिसाध्यत्वे सतीति विशेषणात् । न च सफलत्वासिद्धिः । सूत्राणि सफलानि बन्धनिवृत्त्य-

नुकूलत्वात् सर्पभ्रमनिवर्तकरज्जुबोधवत्। न च हेत्वासिद्धिः। सूत्रै-र्विचारितवाक्योत्थज्ञानस्य[1] बन्धनिवर्तकत्वात्। बन्धो ज्ञाननिवर्त्यः अध्यस्तत्वात् रज्जुसर्पवदिति प्रयोजनसाधको ऽध्यासः। जीवो ब्रह्माभिन्नः तज्ज्ञाननिवर्त्याध्यासवत्त्वात् यदित्थं तत्तथा। यथा रज्ज्वाभिन्न इदमंश इति विषयसाधको ऽध्यास इति। तथा चार्थात्सूत्रि-तविषयप्रयोजनपरत्वात्। युष्मदित्यादेः सर्वलोकप्रत्यक्ष इत्यन्तस्य सूत्रार्थस्पर्शिता सिद्धा। तत्राद्यं भाष्यद्वयं शास्त्रस्य साक्षाद्विषयप्र-योजनपरं लक्षणादिभाष्यं तु सर्वलोकप्रत्यक्ष इत्यन्तमध्यासप्रतिपा-दनद्वारा विषयादिपरं अस्यानर्थहेतोरित्यादिकमारभ्यते इत्यन्तं वेदा-न्तानां विषयादिमत्त्वकथनद्वारा तद्विचारात्मकशास्त्रस्य विषयादि-मत्त्वपरम्। अत एव सद्वारत्वसाम्यात् पूर्वेण लक्षणादिभाष्येणास्य भा-ष्यस्य सहोपादानं कृतम्। एवं सूत्रार्थस्पर्शित्वात् भाष्यबुद्ध्यायं ग्रन्थो व्याख्येय इति सिद्धम। नन्वस्य सूत्रस्य जिज्ञास्यब्रह्मज्ञानाज्ञानाभ्याम-सङ्गतिः। ज्ञाते ऽर्थे जिज्ञासानुपपत्त्या विचारायोगात्। अज्ञाते धर्मिज्ञा-नाभावात्। तथा सूत्रस्य मूलप्रमाणाभावादसङ्गतिः शास्त्रे प्रथमाध्याया-दौ च कथं सङ्गतिरिति चेदुच्यते। नित्येनैवाध्ययनविधिनाधीतसाङ्ग-स्वाध्यायस्य व्युत्पन्नस्य सत्यादिवाक्यादापाततो ब्रह्मज्ञानं जायते। ज्ञानस्यापातत्वं सत्यत्वादिविशिष्टगोचरत्वं तस्य विशेष्यमात्रजिज्ञासा-हेतुत्वं तु विशेष्यगोचरत्वादुपपन्नम अकस्माच्छुक्तौ रजतविशिष्टज्ञाने सति किमिदमिति विशेष्यजिज्ञासादर्शनात्। यद्वा सत्यादिवाक्यात् अखण्डसाक्षात्कार एवादावुत्पन्नः लक्षणवाक्यस्याखण्डार्थत्वव्युत्प-त्तेः किन्तु तात्पर्याज्ञानादिपुरुषापराधादनवधारणत्वं तस्यापातत्वं यथा ऽनभ्यासदोषाज्जलज्ञानस्य, यथा वा पूर्वमत्यन्तमदृष्टस्यार्द्रमरीचि-फलस्य ज्ञाने ऽनवधारणता। एवमापाततो ब्रह्मज्ञाने जाते तदवधा-रणेच्छोर्विचारसूत्रणं युक्तम्। ब्रह्मज्ञानाय विचारकर्तव्यत्वार्थकस्य सूत्रस्यात्मा श्रोतव्य इति श्रवणविधिर्मूलम्। अर्थैक्यात्। न च ब्रह्मात्म-शब्दाभ्यामर्थभेद इति वाच्यम्। आत्मनि विज्ञाते सर्वं विदितमित्य-द्वितीयत्वेनोक्तस्यात्मनो ब्रह्मत्वं निर्द्धार्य सूत्रे ब्रह्मशब्दप्रयोगात्। यत्तु भिन्नात्मविचारविधिरयम इति नैयायिकतनयानां जल्पनं तन्मै-त्रेयीब्राह्मणार्थाज्ञानकृतं जायापतिपुत्रादयो यस्यात्मनः प्रियत्वेन स-

(१) विचारितवाक्यांन्कज्ञानस्येति पाठान्तरम्।

ममताः स आत्मैव सर्वेभ्यः प्रियतम इति परमपुरुषार्थत्वेन त्वंपदार्थमुपक्रम्य तस्यैव दर्शनममृतत्वसाधनतया ऽऽत्मा द्रष्टव्य इत्यनूद्य तत्साधनत्वेन श्रवणादिकं विधाय यज्ज्ञानात्सर्वविज्ञानं प्रतिज्ञाय तत्सद्ध्यर्थं दुन्दुभ्यादिदृष्टान्तैरुत्पत्तिस्थितिलयेषु प्रपञ्चस्यात्ममात्रत्वं साधयित्वा तदन्ते एतावदरे खल्वमृतत्वमित्युपसंहारात् । तस्माद्द्वितीयब्रह्मात्मविचार एवामृतत्वसाधनदर्शनमार्थवादिकं फलमनूद्य तत्कामस्य विधीयते । प्रतिष्ठाकामो रात्रिसत्रं कुर्यादितिवत् । यत्तु प्रतर्दनं प्रति आहेन्द्रः स्वस्य ज्ञानमाहात्म्यं प्रकटयन् अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छदिति । तत्र श्रवणशून्यसंन्यासिनामिन्द्रयातनाश्रवणाच्छ्रवणं नित्यमिति । तन्न । श्रवणशून्यातुरसंन्यासविधिविरोधेन ज्ञानस्तावकवाक्यस्य श्रवणाकरणप्रत्यवायपरत्वकल्पनायोगात् । दृष्टफलकत्वादवघातादिवत् यावत्फलमावर्तनीयमित्यावृत्त्यधिकरणविरोधाच्च । किञ्च नानेन वाक्येन श्रवणस्य नित्यत्वं लभ्यते । मुमुक्षुत्रैवर्णिकसर्वाधिकारिकत्वाच्छ्रवणविधेः । वाक्ये च संन्यासिमात्रस्य प्रत्यवायभावात् । न च संन्यासिन एव श्रवणाधिकारो नान्येषामिति वाच्यम् । एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति । तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदित्यादिश्रुतिस्मृतिभिः ज्ञानफलकत्वेन विहितसंन्यासस्य श्रवणाङ्गत्वायोगात् । न च संन्यासस्यानङ्गत्वे ऽपि अधिकारिविशेषणत्वमस्त्विति वाच्यम् । मानाभावात् । न च शान्तो दान्त उपरतस्तितिक्षुः श्रद्धान्वितो भूत्वा ऽऽत्मन्येवात्मानं पश्येदिति वाक्यं मानमिति वाच्यम् । अस्य वाक्यस्य एतमेव प्रव्राजिन इति वाक्यविहितसंन्यासस्योपरतिपदेनानूदितस्यान्वयव्यतिरेकाभ्यां मुमुक्षोः श्रवणादिद्वारा ज्ञानसाधनत्वेन सिद्धशान्त्यादेरनुवादेन शान्त्यादिमत्कर्तृकश्रवणेन शान्त्यादिना वा पश्येदित्यत्र प्रकृत्यानूदितात्मज्ञाने लिङ्गा समुच्चयविधानार्थत्वात् श्रोतव्य इति प्राप्तं श्रवणं पश्येदित्यनूद्यानुपादेयाधिकारिविशेषणानां विध्ययोगात् । प्राप्तानुवादेन बहूनामङ्गानामप्येकस्मिन् वाक्ये विधातुमशक्यत्वात् । श्रवणस्य प्राप्तत्वेन शान्त्याद्यनेकगुणविशिष्टविध्यसम्भवाच्च । तस्मात्संन्यासो नाधिकारिविशेषणम् । नाप्यङ्गं श्रवणस्य । किन्तु ज्ञानप्रतिबन्धककल्मषनिवृत्तिद्वारा श्रवणवत् ज्ञानसाधनम् । श्रवणाधिकारी तु श्रोतव्य इति विधिसन्निहितार्थवादोक्तफलकाम एव रात्रिसत्र इवेत्युक्तम् । स च संन्यास्यसंन्यासी वा त्रैवर्णिकः संन्यस्य श्रवणं

कुर्यादिति वाक्यं क्रमपरं जन्मान्तरीयसंन्यासेनापि क्रमसम्भवात् ।

"नित्यं कर्म परित्यज्य वेदान्तश्रवणं विना ।
वर्तमानस्तु संन्यासी पतत्येव न संशय" इति ॥

एवञ्जातीयकं वाक्यं न्यायप्राप्तमनर्थमनुवदति श्रवणे काम्यत्वबुद्ध्योपेक्षानिरासार्थम् । यदि सांसारिकः श्रेयःसाधनं कर्म परित्यज्य निःश्रेयससाधनं नानुष्ठीयते तदा श्रेयःसाधनाभावान्मूढः पतत्येवेति प्राप्तानुवादः । अरुन्मुखानिति श्रुतेरपि अयमेवार्थः । वस्तुतो ऽरुच्छब्देन रौति शब्दयतीति व्युत्पत्त्या वेदान्तवाक्यमुच्यते न श्रवणम् । तथा च श्रुतिः उपनिषदमावर्तयेदिति । तथा च मुमुक्षोः श्रवणाकरणे प्रत्यवायाश्रवणात् श्रवणं काम्यमिति सिद्धम् । यद्यपि श्रवणं श्रोतव्यार्थनिर्धारणे ऽन्वयव्यतिरेकसिद्धं नापूर्वविध्यर्हं तथाप्यवघातवन्नियम्यते । मुक्तिसाधनज्ञानकामेनाद्वैतात्मविषयकवेदान्तविचारः कर्तव्य इति । अर्थाद्भिन्नात्मविचारो व्यावर्त्यते । नन्वस्य वस्तुतो मुक्तिहेतुज्ञानसाधनत्वाभावात् कथं व्यावर्त्यत्वम् । नखविदलनादेस्तुषविमोकसाधनस्यैव व्यावर्त्यत्वदर्शनादिति चेन्न । अपूर्वीयव्रीहितुषविमोकसाधनस्यैव भ्रान्त्या प्राप्तस्य तत्र व्यावर्त्यत्वात् । किञ्चाप्राप्तिमात्रं विधेरुपजीव्यम् । अप्राप्तिस्तु वस्तुतः साधनेन भ्रान्तिप्राप्तसाधनेन वा विधेयसाधनस्य भवत्येव तस्मात्कस्य चिद्भेदरसिकस्य मुमुक्षोर्भिन्नात्मविचारप्राप्तौ नियम्यते । के चित्तु ब्राह्मणादेर्वेदाधिकारिणः पुराणप्राधान्यं व्यावर्त्यमित्याहुः । मुमुक्षुणा वैदिकेन वेदान्तवाक्यान्येव विचारयितव्यानीति नियमादृष्टस्य ज्ञाने उपयोगः सर्वापेक्षान्यायात् । न च वेदान्तेषु विध्यङ्गीकारे लिङादयः श्रूयमाणाः कुण्ठीभवन्तीति भाष्यविरोध इति वाच्यम् । तत्र भाष्ये ज्ञानविधिनिराकरणात् । अनियोज्यविषयत्वादिति हेतूक्तेः अज्ञस्य श्रवणादौ नियोगसम्भवात् । न च विध्यङ्गीकारे ब्रह्मासिद्धिः अन्यपराद्वाक्यादन्यासिद्धेरिति वाच्यम् । उपक्रमादिना ब्रह्मात्मन्येव महातात्पर्यात् । तज्ज्ञानोद्देशेनावान्तरतात्पर्येण श्रवणादिविधानात् । अत एवोद्देश्यत्वाद्ब्रह्मणः प्राधान्यं विधेरेव तच्छेषत्वं ब्रह्मकर्मकज्ञानविधाने तु ब्रह्मणो विधेयज्ञानकारकत्वेन विधिं प्रति गुणत्वं स्यात् इति युक्तो ज्ञानविधिनिरासः । ननु ब्रह्मपरे वाक्ये अवान्तरतात्पर्येण श्रवणादिविधानं कथमिति चेत् । उच्यते । ब्रह्मपरे वाक्ये यज्ञेनेत्यादिवाक्येन यज्ञादीनां विविदिषायामिष्यमाणज्ञाने वा हेतुत्वविधानवत् अधस्तात्समिधं धारयन्ननुद्र-

वेदुपरि हि देवेभ्यो धारयतीत्यत्र विधिस्तु धारणे ऽपूर्वत्वादिति न्यायेन अधोधारणवाक्यैकवाक्यतां भङ्क्त्वा स्रुग्दण्डोपरि समिद्धारणविधिवत् दर्शपूर्णमासप्रकरणे तिस्रो रात्रीर्व्रतं चरेदञ्जलिना वा पयः पिबेदित्यवान्तरवाक्येन मलवद्वाससो व्रतकलापविधानवच्चेति। अथ वा तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेदिति वाक्येन श्रवणं कृत्वा मननं कुर्यादित्यर्थकेन श्रवणादिकं विधीयते। तत्रैवाथ मुनिरिति निदिध्यासनं नियम्यते इति सूत्रकारेण सहकार्यन्तरविधिरिति वक्ष्यमाणत्वात्। मनननिदिध्यासनयोः श्रवणाङ्गत्वमग्रे वक्ष्यामः। तथा च श्रवणविध्यपेक्षितानाम् अधिकारिविषयप्रयोजनानां श्रुतानामपि न्यायेन निर्णयार्थमिदं सूत्रमिति। तद्विधिमूलकत्वमस्य सूत्रस्य सिद्धम्। ये तु श्रवणे विधिं नेच्छन्ति तेषामिदं सूत्रं निर्मूलमनारभ्यं स्यात् विध्यभावे अधिकार्यादिनिरूपणायोगात् इति संक्षेपः। अनेन सूत्रेण श्रवणविधेः स्वार्थे विचारकर्तव्ये समन्वये सिद्धे सति जन्मादिसूत्रमारभ्य विचारः प्रवर्तते इत्युपोद्घातत्वाच्छास्त्रे प्रथमाध्यायादावस्य सूत्रस्य सङ्गतिः। एवं सङ्गतसूत्रार्थस्पर्शित्वादिदं भाष्यं व्याख्येयम्। अत्र सूत्रे कण्ठोक्तस्य ब्रह्मज्ञानस्य स्वरूपेणाफलत्वादधिकारिणो मुमुक्षोर्विशेषणीभूतो मोक्षो बन्धनिवृत्तिरूपो ऽर्थाज्ज्ञानफलत्वेन सूत्रितः। बन्धश्च प्रमातृत्वभोक्तृत्वरूपः तस्य सत्यत्वे ज्ञानान्निवृत्त्ययोगात् अध्यासो ऽर्थात्सूत्रितः। तथा चाध्यासेन विषयप्रयोजने साध्येते ताभ्यां विचारस्य कर्तव्यता साध्येति क्रमः। साध्यसाधनभावश्च पूर्वं दर्शितः। एवमर्थात्सूत्रितो भाष्ये वर्णित इत्युक्तम्। अत्र शङ्कते। ज्ञानफलत्वेन बन्धनिवृत्तेरर्थात्सूत्रितत्वे ऽपि बन्धस्याध्यासो न सूत्रितः सत्यस्यापि निवृत्तिसम्भवादिति। अत्रोच्यते। किं दर्शनबलात्सत्यस्य ज्ञानान्निवृत्तिरुच्यते, श्रुतिबलाद्वा? आद्येपि ज्ञानं किं स्वविषयगतं निवर्तयत्याश्रयगतमुतोभयगतम्? आद्येपि ज्ञानं किं निवर्त्यप्रपञ्चविशिष्टब्रह्मगोचरं वा निवर्त्यागोचरं वा? नाद्यः चित्रावयविनि पटे नीलविशिष्टद्रव्यज्ञानस्य नीलनिवर्तकत्वादर्शनात्। न द्वितीयः। नीलो ऽयमिति ज्ञानेन स्वागोचरस्य स्वविषयगस्य रसपीतरूपादेरनिवृत्तेः। न च सिद्धान्ते ऽपि पटज्ञानात्तद्गतनिवृत्तिः स्यात् ब्रह्मज्ञानादिव प्रपञ्चनिवृत्तिरिति वाच्यम्। ब्रह्मज्ञानस्य प्रपञ्चोपादानाज्ञाननिवर्तकत्वेन प्रपञ्चनिवर्तकत्वात्। न हि पटाज्ञानविलसितास्तद्गता धर्मा ये न पट-

ज्ञानान्निवृत्तेरन् । न च चित्रस्य रूपान्तरत्वान्नीलादिकं पटे नास्तीति वाच्यम् । कारणे चित्रस्यासत्त्वेन कार्ये ऽनुपपत्तेः शुक्लादिरूपाणां स्वसमानजातीयारम्भकत्वादनुभवाच्च । नानारूपसङ्कस्यैव चित्ररूपत्वात् अनुभवबलात्संयोगादेरिव नानारूपवद्द्रव्यारब्धद्रव्यरूपस्याप्यवृत्तित्वोपपत्तेः । न द्वितीयः । घटज्ञानस्य स्वाश्रयात्मगतधर्मादिनिवर्तकत्वादर्शनात् । अतो न ब्रह्मज्ञानाज्जीवगतसत्यबन्धनिवृत्तिः । न तृतीयः । मम शरीरमिति ज्ञानाद्देहात्मसन्बन्धानिवृत्तेः । अतो न ब्रह्मज्ञानाज्जीवब्रह्मोभयगतस्य निवृत्तिः । ननु विद्वान्नाम रूपाद्विमुक्त इति श्रुतिबलात् सत्यस्य ज्ञानान्निवृत्तिरिति चेन्न । श्रुतौ निवर्त्ये सत्यशब्दाभावात् । उक्तरीत्या लोके सत्यस्य ज्ञानान्निवृतेरदर्शनेन श्रुतायाः बन्धस्य ज्ञानान्निवृतेरुपपत्त्यर्थं मिथ्यात्वस्य कल्पनात् । क्षणिकयागस्यं श्रुतस्वर्गसाधनत्वोपपत्त्यर्थमपूर्वकल्पनवत् । न च तार्क्ष्यस्मरणाद्विषं सेतुदर्शनात्पापं सत्यं निवर्तते इति वाच्यम् । श्रद्धानियमादिसापेक्षज्ञानस्य तत्र निवर्तकत्वात् । बन्धस्य तु नान्यः पन्था इति श्रुत्या केवलज्ञाननिवर्त्यत्वात् अध्यासो ऽकामेनापि रज्जुसर्पादेरिव वक्तव्यः । कालादेरपि निवर्त्यान्तःपातित्वेन ज्ञानासहकारित्वात् । अतो ब्रह्मज्ञानं बन्धनिवर्तकं सूत्रयता बन्धस्याध्यस्तत्वं सूत्रितमेव । नन्वेवमपि सूत्रस्य मुख्यार्थं विहायार्थिको ऽध्यास एव किमिति भाष्यकारैर्वर्णित इति चेत् । उच्यते । प्रतिपाद्यमर्थं बुद्धौ सङ्गृह्यादौ तद्धेतुवर्णनमुपोद्घातः, प्रतिपाद्यमादौ प्रतिज्ञाय पश्चात्तद्धेतुवर्णनं प्रतिपादनमिति विभागो ऽस्ति । एवं च सूत्रस्य श्रौतोर्थो विचारकर्तव्यतातत्साधकविषयप्रयोजनसिद्धिहेतुत्वादध्यास उपोद्घातत्वेनादौ वर्णित इति । ननु भवतु प्रयोजनसिद्धिहेतुरध्यासः । बन्धो ज्ञाननिवर्त्यः अध्यस्तत्त्वाद्रज्जुसर्पवदित्यनुमितिहेतुत्वात् । विषयस्तु प्रत्यगभिन्नमनादि स्वप्रकाशं ब्रह्म । कथं तत्सिद्धौ हेतुरध्यास इति चेत् । तत्वमस्यादिवाक्येनापेक्षितयोग्यताज्ञानहेतुत्वादिति ब्रूमः । जीवगतो बन्धो ऽध्यस्त इति यावन्न वर्ण्यते तावद्वेदान्तैः स्वार्थो जीवब्रह्माभेदो बोधयितुमशक्यः विरुद्धैः किञ्चिज्ज्ञत्वादिधर्मैर्भेदाभावरूपायोग्यतानिश्चयात् । वह्निना सिञ्चेदितिवज्जरद्गवादिवाक्यवच्च । अध्यासज्ञाने तु बिम्बप्रतिबिम्बयोरिव विरोधाभावात्सूत्रभाष्यकाराभ्यां ब्रह्मात्मैक्ये तात्पर्यं वर्णयितुं शक्यं तदनुसारेण वाक्यस्य स्वार्थबोधकत्वमबाधितं भवति । तर्ह्यत्य-

न्तापेक्षितो ऽध्यासः सूत्रकारेण मुखतः किमिति नोक्त इति चेदु-च्यते । सूत्रकारेण प्रतिपादने प्रवृत्तेनादौ विचारकर्तव्यतां प्रतिज्ञाय ब्रह्मात्मनि वेदान्तानां समन्वयं विचार्य जीवात्मनो ऽणुत्वकर्तृत्वादि-ना विरोधमाशङ्क्य तद्गुणसारत्वात्तद्व्यपदेश इति मुखत एवाध्यास उक्तसमन्वये विरोधनिरासार्थमुक्तः । बुद्धिगतधर्माध्यासाज्जीवो ऽणुरित्यादिव्यवहारो न वस्तुत इति सूत्रार्थः । भाष्यकारस्तु उपो-द्घाते प्रवृत्तः प्रवृत्त्यङ्गविषयादिसिद्ध्यर्थम् आदावध्यासं वर्णयतीति अनवद्यम् । एतावता ग्रन्थसन्दर्भेण सिद्धमर्थं सङ्गृह्णाति ॥

"सूत्रार्थस्पर्शिता भाष्ये पश्चात्सूत्रस्य सङ्गतिः ।
श्रवणे विधिरुद्दिष्टः सत्यस्य ज्ञानतो ऽमृति"रिति ॥

ननु तथापीदं भाष्यं न व्याख्येयम् आदौ मङ्गलाकरणात् । मङ्गलं हि अलौकिकानिषिद्धशिष्टाचारत्वात् श्रुतिविहितं निर्विघ्नसमाप्ति-फलकञ्च । न च विघ्नाभावान्मङ्गलाकरणं न दोष इति वाच्यम् । त-स्मादेषां तन्न प्रियमिति श्रुत्या, "श्रेयांसि बहुविघ्नानीति" स्मृत्या, लो-कप्रसिद्ध्या च सार्थकभाष्ये विघ्नसत्तानिश्चयात् । यस्मात्तत्त्वज्ञो दे-वान्न सेवते तस्माद्देवानां तत्त्वज्ञानं न प्रियमित्यर्थः । तस्माद्देवकृतवि-घ्नेन कर्तुर्भ्रान्त्यादिसम्भवात्तत्कृतं भाष्यं न व्याख्येयमित्युच्यते । "स-र्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् । येषां हृदिस्थो भगवान्मङ्ग-लायतनं हरि"रिति स्मृतेः । परदेवतातत्त्वानुस्मरणं मङ्गलम् । तच्च शिष्टाचारपरिपालने ऽग्रण्या भाष्यकृता कृतम् । अर्थज्ञानं विना वाक्य-रचनानुपपत्तेः । भाष्यस्य तत्त्वार्थकत्वात् । तस्मान्निर्दोषमिदं भा-ष्यं व्याख्येयमिति सिद्धम् । अत्र प्रथमसूत्रे श्रवणविधिर्विचार्यते इ-त्युक्तम् । श्रवणं नामाद्वैते ब्रह्मणि वेदान्तानां तात्पर्यनिर्णयार्थो विचार-स्तद्विचारात्मकं शास्त्रं कर्तव्यं न वेति सन्देहे पूर्वपक्षः । अधिष्ठानसा-मान्यांशस्यारोप्येण तादात्म्यप्रमाजन्यसंस्कारो ऽध्यासहेतुः । इदं र-जतमिति प्रमानन्तरं शुक्ताविदं रजतमित्यध्यासात् तथा च विज्ञानघने प्रत्यगात्मनि अन्तःकरणाद्यनात्माध्यासो न सम्भवति हेत्वभावात् । त-था हि आत्मानात्मानौ तादात्म्यशून्यौ विरुद्धत्वात् तमःप्रकाशवत् । द्विविधो विरोधः । सहावस्थानायोग्यता तादात्म्यायोग्यता चेति । तत्राद्यो गोत्वाश्वत्वयोरस्ति मिथो ऽत्यन्ताभावव्याप्तत्वात् । न तमःप्र-काशयोस्तयोर्मन्दप्रदीपे वेश्मनि सह स्थितेः । अतस्तादात्म्यायोग्य-त्वमत्र हेतुः । ननु तमःप्रकाशयोर्भावाभावत्वं तादात्म्यशून्यत्वप्रयोजकम् ।

तथा चोक्तानुमाने हेतुरप्रयोजक इति चेन्न। हेतोर्हेत्वन्तरादूषकत्वात् घटपटयोस्तादात्म्याभावे तदयोग्यत्वस्यैव हेतुत्वात्। तमसो द्रव्यत्वेन भावत्वाच्च। तार्किकास्त्वालोकाभावस्तम इत्याहुस्तन्न। तमःशब्दवाच्यो नाभावः स्वमात्रवृत्तिधर्मप्रकारकप्रतियोगिज्ञानाजन्यप्रत्यक्षविषयत्वाद्घटवत्। सन्निति प्रत्यक्षस्य घटाभाव इति प्रत्यक्षस्येश्वरप्रत्यक्षस्याभावत्वप्रकारकस्मृतेश्च। विषये घटाभावे व्यभिचारनिरासार्थानि क्रमेण विशेषणानि। किञ्चेषत्तमो गाढन्तम इत्यवस्थावत्त्वाच्चलत्वाद्रूपवत्त्वाच्च भाव एव तमः अपाकजनीलरूपस्याश्रयान्तराभावात्तमो द्रव्यमाश्रय इति युक्तम्। विना बाधं नीलं तम इति प्रतीतेर्भ्रान्तित्वकल्पनायामतिप्रसङ्गापातात्। नन्वालोकसंयोगो रूपिद्रव्यप्रत्यक्षकारणं तदभावान्नीलं तम इति भ्रान्तिरिति चेन्न। गाढे तमस्यप्यणुकप्रत्यक्षदर्शनात्। यद्विषयचाक्षुषज्ञाने तमः प्रतिबन्धकं तत्रैव प्रतिबन्धकनिवृत्त्यर्थमालोकसम्बन्धापेक्षणात्। न च तमसो रूपित्वे स्पर्शवत्त्वापत्तिः। वायोरपि स्पर्शवत्त्वे रूपित्वापत्तेः। अतो वायौ तमसि च व्यभिचाराद्रूपस्पर्शयोर्न मिथो व्याप्तिः। किन्तु भूम्यप्तेजस्सु साहचर्यमात्रमिति मन्तव्यम्। महाविद्युदादिवन्माया झटिति तमो जनयति। एवमुत्पत्तिज्ञप्तिहेतुसत्त्वात्तमो द्रव्यमिति सिद्धम्। किञ्च एकैकालोकाभावस्य तमस्त्वे सर्वत्र तमोबुद्ध्यापत्तिः। यावदालोकाभावकूटस्य तमस्त्वे मन्दप्रदीपे गृहे तमोबुद्धिर्न स्यात्। अतिस्थूलप्रदीपे तमो नास्तीति बुद्धिर्न स्यात् एकस्य प्रदीपस्य तमःशब्दिताभावकूटाभावत्वायोगात्। यावदालोकानामेवाभावकूटाभावत्वात्। आलोकसामान्याभावस्य तमस्त्वे तम उत्पन्नं, नष्टमिति बुद्धिर्न स्यात्। यत्तु निमीलितनयनस्यापि तमोदर्शनाद्रूपदर्शनाभाव एव तम इति प्रभाकरोक्तं, तन्न। पिहितकर्णपुटस्यान्तरशब्दोपलब्धिवदान्तरतमोद्रव्योपलम्भसम्भवात्। न चैवं सत्यञ्जनद्रव्योपलब्धिः स्यादिति वाच्यम्। फलबलेनायोग्यताकल्पनात्। तमोन्तःस्थस्य बहिरालोकरूपदर्शनेन सह तमोदर्शनाच्च न रूपदर्शनाभावस्तम इत्यलमतिप्रसङ्गेन। एवञ्च तादात्म्यायोग्यत्वादात्मानात्मनोस्तादात्म्यं नास्ति तमःप्रकाशवदित्यनुरूपो दृष्टान्तः। अत्राह सिद्धान्ती। आत्मनि अहङ्कारादेस्तादात्म्याभावे कथमध्यासानुपपत्तिरित्युच्यते? अधिष्ठानसामान्यांशस्यारोप्यविशेषेण तादात्म्यं क्वचित्सत्यं वाच्यम्। अन्यथा तत्प्रमाजन्यसंस्कारालाभादहं कर्तेत्यध्यासे तु चिदात्मैव

सामान्यं, भ्रमे भासमानाधिष्ठानांशस्यैव सामान्यत्वात् । न च लक्ष्याहङ्कारेण सत्यं तादात्म्यं सम्भवति द्रष्टृदृश्ययोः स्वाभाविकैक्यायोगात् । न च निरवयवस्य चिदात्मनो ऽसङ्गस्य स्वतो वा हेतूपरागाद्वा सावयवदृश्याहङ्कारात्मना परिणामः सम्भवति येन तादात्म्यं सत्यं स्यात् । ननु चिति अचिदध्यासे चिदचितोस्तादात्म्यं क्वचित्सत्यम् वाच्यम् । न तु चिदधिकरणकाचित्तादात्म्यं गौरवात् । तच्चात्र सुसम्पादम् । अहमुपलभे इत्यहङ्कारे चैतन्यतादात्म्यानुभवादिति चेन्न । अहङ्कारस्य स्वत एव चिदभेदे साक्षिवेद्यत्वव्याघातात् । समयोर्दीपयोर्मिथो ग्राह्यत्वादर्शनात् । न चाहङ्कारस्य हेतूपरागात् चित्परिणाम इति वाच्यम् । जडपरिणामस्य चित्त्वायोगात् । ननु दर्पण इव मुखस्य सन्निधानमात्राज्जडे चितः संसर्गभानमस्त्विति चेत् ? न । बिम्बप्रतिबिम्बभावस्यातात्त्विकत्वेनाध्याससिद्ध्यधीनत्वादतः क्वचिदपि चिदचितोस्तादात्म्यासत्त्वेन तत्प्रमाजन्यसंस्कारस्य हेतोरभावादध्यासो न सम्भवति । निरवयवनिर्गुणात्मनि गुणावयवसादृश्याभावाच्च । यद्यपि कर्तृत्वादिधर्माध्यासो ऽहङ्काराद्युपाधिको न सादृश्यमपेक्षते तथा ऽप्यहङ्कारादिधर्म्यध्यासो निरुपाधिकः सादृश्यमपेक्षते । तस्मादध्यासाभावे विषयप्रयोजनयोरभावाच्छास्त्रं नारम्भणीयमिति प्राप्ते सिद्धान्तः । आत्मानात्मनोरहमिति प्रतीतियोग्यत्वं सादृश्यम् । वस्तुतो निरुपाधिकाध्यासे ऽपि न सादृश्यं कारणम् । नीलं नभ इत्यध्यासात् । न हि रूपनभसोः सादृश्यमस्ति । संस्कारो ऽप्यनुभवजन्यः कारणं न प्रमाजन्यो गौरवात् । तथा च रागद्वेषादिदोषकर्तृत्वभोक्तृत्वाध्यासानां बीजाङ्कुरवदनादित्वात्पूर्वपूर्वभ्रमजन्यसंस्कारादुत्तरोत्तराध्यासः सम्भवति । एतदभिप्रेत्योक्तं भगवता भाष्यकृता । "अन्योन्यात्मकतामध्यस्य सत्यानृते मिथुनीकृत्य नैसर्गिको ऽयं लोकव्यवहार" इति । सो ऽहं ममेदमित्यध्यासः प्रवाहतो ऽनादिरित्यर्थः । प्रवाहानादित्वं हेतुहेतुमद्भावेनेति दर्शयितुम् अध्यस्य मिथुनीकृत्येति क्त्वाप्रयोगः कृतः । सत्यानृते इति शुक्लो घट इति प्रमानिरासार्थं मिथुनीकरणमध्यास एव । ननु स्वप्रकाशात्मनि अज्ञानासम्भवात्कथमध्यास इत्याशङ्क्योक्तं मिथ्याज्ञाननिमित्त इति संस्फुरदात्मतत्त्वमाहत्यानाद्यनिर्वचनीयमज्ञानमध्यासं जनयति । तस्योपादानत्वे ऽपि दोषतया ऽहङ्काराध्यासकर्त्रीश्वरोपाधितया वा निमित्तत्वं मन्तव्यम् । ननु कथमज्ञानमध्यासोपादानमिति चेदन्वयव्यतिरेकाभ्यामिति ब्रूमः । ननु शुक्ति-

तस्य ज्ञानं रजताध्यासप्रतिबन्धकं, ततश्च शुक्तिज्ञाने ऽसत्यध्यासो ऽन्यथा नेत्यन्वयव्यतिरेकौ प्रतिबन्धकाभावविषयाविति चेदुच्यते । सत्यां सामग्र्यां कार्यानुत्पादप्रयोजकं प्रतिबन्धकम् । तथैव वृद्धव्यवहाराश्च हि दोषघटिताध्याससामग्र्यां सत्यां तत्त्वज्ञानमस्ति अतो न प्रतिबन्धकम् । न च प्रातीतिकरजतस्योपादानापेक्षा नास्तीति वाच्यम् । प्रातीतिकं सर्वं कार्यं सोपादानं भावकार्यत्वात् घटवदित्यनुमानात् । न च घटेन सहोत्पन्नक्रियागुणयोर्व्यभिचार इति वाच्यम् । सहोत्पत्त्यसिद्धेः । सहोत्पत्त्यङ्गीकारे तु तयोर्घटोपादानमृदुपादानकत्वात् । द्रव्यस्य स्वासमवायिकारणसामानाधिकरण्यनियमे ऽपि रूपादीनां तदभाववत्स्वोपादानवृत्तित्वनियमस्याप्यभावात् । नन्वध्यासस्याज्ञानादन्यदुपादानमस्त्विति चेन्न तावदात्मा रजततज्ज्ञानात्मकाध्यासस्योपादानम् अपरिणामित्वात् । इदमंशसंयुक्तचक्षुषेदमाकारज्ञानपरिणाम्यन्तःकरणमपि न प्रातीतिकरजतोपादानं प्रतीतेः प्रागसति रजते इन्द्रियसंयोगासम्भवेन बहिरस्वतन्त्रस्य मनसः प्रतीत्युपादानत्वायोगात् । न हि प्रतीतिं विना प्रातीतिको ऽर्थः स्थातुमर्हति । न च साक्ष्येव प्रतीतिरिति वाच्यम् । तथाप्यन्तःकरणाध्यासे ऽन्यस्योपादानत्वासम्भवेनाज्ञानस्यैव सर्वत्रोपादानत्वौचित्यात् । नापि प्रमातृकरणविषयदोषा रागकाचसादृश्यादयो ऽध्यासोपादानं कार्यानाश्रयत्वात्, कार्यतादात्म्यवतः कारणस्योपादानत्वात्, तेषामननुगतत्वाच्च । नापि सत्य इदमंश उपादानं कार्यस्यापि सत्यत्वापातात् परिणामस्य परिणामिसमानसत्ताकत्वादतः परिशेषादधिष्ठानचैतन्यस्थाज्ञानमेवार्थज्ञानात्मकाध्यासोपादानमित्यहङ्काराध्यासो ऽज्ञानोपादानकः अध्यासत्वात् रजताध्यासवदित्यनवद्यम् । साक्ष्यभिन्नविषयचैतन्ये ऽध्यासो ऽस्तीति भ्रान्तित्वं साक्ष्यात्मनो युज्यते । नन्वज्ञानं ज्ञानाभावः तस्य कथमध्यासोपादानत्वं, न चाज्ञानं भावरूपमस्ति मानाभावादिति चेत् । उच्यते, अहमज्ञो मामन्यञ्च न जानामीति प्रत्यक्षमहं दुःखीति प्रत्यक्षवत्सर्वसंमतं तस्य ज्ञानसामान्यविरोधिवस्तुविषयः स च नाभावः षष्ठप्रमाणवादिनाभावस्याप्रत्यक्षवादिनो ऽपि नात्मनि ज्ञानसामान्याभावः सम्भवति । ज्ञानसमवायिन्यात्मनि यावज्ज्ञानविशेषात्यन्ताभावकूटासत्त्वेन तत्समनियतस्य सामान्याभावस्यायोगात् । न चाहमज्ञ इति सामान्यविरोध्यनुभवो न भवति किन्तु ज्ञानविशेषाभावानुभव इति वाच्यम् ।

अरूपो वायुरित्यनुभवतुल्यत्वात् । न चात्मनि ज्ञानसामान्याभावानुभवो ऽपि सम्भवति धर्मिप्रतियोगिज्ञानसत्त्वासत्त्वाभ्यां तदयोगात् । तस्मात्सकलानित्यज्ञानानुगतं यन्नित्यं चैतन्यं तदेव ज्ञानसामान्यं तद्विरोध्यज्ञानसामान्यं प्रत्यक्षविषयः ॥

एवं त्वदुक्तमर्थं विशिष्य न जानामीति विशेषाज्ञानमपि भावरूपमेव विशेषज्ञानस्य सत्त्वेन तदभावायोगात् । न चात्र परोक्षज्ञानसत्त्वे ऽपि अपरोक्षज्ञानप्रागभावो ऽस्तीति वाच्यम् । धर्मं न जानामीति नित्यपरोक्षार्थे ऽप्यज्ञानानुभवात् । यस्मिन्वस्तुनि कदापि ज्ञानं न भविष्यति तत्राज्ञानं कथं प्रागभावः स्यात् ? न च तत्रात्यन्ताभावो विषय इति वाच्यम् । अनुगतभावरूपाज्ञाने सम्भवत्यननुगतविषयकल्पनानुपपत्तेः । न चानादिचैतन्येन विरोधात्तत्वाप्यज्ञानानुभवो न स्यादिति वाच्यम् । आवरणेन प्रतिबन्धात्स्वतो विरुद्धस्यापि चैतन्यस्याज्ञानानुभवत्वोपपत्तेः । नन्वज्ञानस्य विशेषणं विषयः कथं साक्षिचैतन्येनावभास्यते मानं विना मेयभानायोगात् इति चेत् उच्यते । सर्वं वस्तु ज्ञाततया ऽज्ञाततया वा साक्षिचैतन्यस्य विषय एव । तत्र ज्ञातत्वं मनोवृत्त्यवच्छिन्नचैतन्यतादात्म्यम् तच्च सुखादावस्ति सुखादीनां मनोवृत्तित्वाच्छुक्तिरूप्यादावप्यस्ति इदमाकारवृत्तिसत्त्वात् । घटादौ मानाधीना वृत्तिरिति क्वचिज्ज्ञातत्ववृत्तिप्रकारेण विषयभाने प्रमाणापेक्षा न त्वज्ञानत्वेन तज्ज्ञाने मानापेक्षा ऽज्ञातताविरोधात् । परोक्षार्थे ज्ञातत्वानुभवस्तु वृत्तिविषयगोचर इत्यनुसन्धेयम् । तत्र सतो ऽप्यज्ञातत्वस्य वृत्तिप्रतिबन्धादननुभवः, नतु परोक्षवृत्त्या तस्य निवृत्तिरविरोधात् । अन्यथा शब्दावगतधर्मादौ संशयादिर्न स्यात् । दृश्यते हि निश्चितमहत्त्वे ऽपि चन्द्रे प्रादेशिकत्वभ्रमस्तस्मात्सविषयमज्ञानं साक्षिप्रत्यक्षसिद्धम् । ननु चिन्निष्ठाज्ञानस्याहमज्ञ इति अहङ्कारस्थत्वभानं कथमिति चेत् अहङ्काराज्ञानयोरेकत्राध्यासादिति ब्रूमः । यथा लौहित्यमुखयोः स्फटिकभित्तिप्रतिबिम्बितयोः सतोर्लोहितं मुखमिति भ्रमः तद्वदहमज्ञ इति भ्रम इति ॥

अधुना भावरूपाज्ञाने ऽनुमानमुच्यते । विवादास्पदं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकं अप्रकाशितार्थप्रकाशित्वात् अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति । पक्षीकृतज्ञानस्य यः प्रागभावो यो विषयो यस्तत्रान्धकारो यच्च विषयस्थमज्ञातत्वं यश्च भ्रमस्तेषां निरासार्थं क्रमेण वि-

शेषणानि। अत्र वदन्ति। यथार्थज्ञानमात्रस्य पक्षत्वे सुखादिज्ञाने परोक्षवृत्तौ च बाधः। तयोरज्ञानानिवर्तकत्वेन साध्याभावादपरोक्षवृत्तेः पक्षत्वे धाराद्वितीयादिज्ञाने बाधः, प्राथमिकानात्मापरोक्षवृत्तेः पक्षत्वे ऽपि बाध एव। अनात्मावरकाज्ञानासत्त्वादात्मज्ञानस्य पक्षत्वे चानात्मज्ञाने व्यभिचारः। साध्ये चाद्यपदं व्यर्थं स्वनिवर्त्यपदेनैव प्रागभावनिरासात्। ज्ञानस्य तन्निवृत्तित्वात्। द्वितीयपदमप्यसङ्गतम्। अनात्मनि आवरणाभावात् वृत्तेश्चिदुपरागाद्यर्थकत्वेनाज्ञानानिवर्त्तकत्वात्। स्वनिवर्त्यपदमप्यसङ्गतम्। अज्ञानस्य चिन्निष्ठत्वाद्वृत्तेर्मनःस्थत्वात्स्वदेशगतपदमप्यसङ्गतम्। हेतुरपि यद्यप्रकाशितज्ञानत्वं तदा प्रभायामसिद्धिर्यदि तज्ज्ञानहेतुत्वं तदा पक्षे हेत्वसिद्धिर्यदि तद्व्यवहारहेतुत्वं तदा कालादौ व्यभिचारः। अर्थस्य घटादेरप्रकाशितत्वं यद्यज्ञानावृतत्वं, तदा हेतोः साध्यसमत्वम् असिद्धिश्च। यदि वृत्त्यविषयत्वं तदा वृत्तिसाक्षिणि व्यभिचार इति। अत्राहुः। जन्यसविकल्पकाजन्यघटचाक्षुषप्रमाणज्ञानं पक्षः धारायां द्वितीयादिज्ञाननिरासार्थं सविकल्पकाजन्येति पदं पक्षस्य लाभार्थं जन्यत्वं सविकल्पकस्योक्तम्। पक्षस्य परमते निर्विकल्पकजन्यत्वात् सविकल्पकपदे ईश्वरज्ञाननिरासार्थं चाक्षुषपदम्। सुगममन्यत्। स्वसमानाधिकरणप्रागभावान्यस्वजननायोग्यस्वजन्यध्वंसप्रतियोगिस्वदेशगतपूर्वकत्वं साध्यम्। कदाचिद्घटज्ञानस्य घटपटसंयोगहेतुत्वमस्ति घटं दृष्ट्वा पटेनाच्छादनात्। तथा चेच्छाप्रागभावस्वजनकादृष्टात्मत्वानां त्रयाणां घटपटसंयोगप्रागभावस्य च व्यावर्तकानि क्रमेण विशेषणानि। न च लाघवादभावादन्यत्वमेवास्तु स्वप्राक्पदं व्यर्थमिति वाच्यम्। अभावान्यत्वापेक्षया विशिष्टाभावान्यत्वस्य भेदात् विशिष्टाभावत्वविशेषणं न व्यर्थं तद्विना स्वेष्टस्य विशिष्टाभावस्यालाभात्। पराभिमतप्रागभावान्यत्वमत्रेष्टमिति तत्प्रकारकानुमित्यर्थं विशेषणं युक्तमेव घटावच्छिन्नचैतन्यस्थं तद्विषयकं तूलाज्ञानं घटावच्छिन्नचैतन्यविषयया बुद्धिधिया वृत्त्या चक्षुषा निर्गत्य विषयचैतन्यस्थया स्वदेशगतं निवर्त्यत इति न कश्चिद्दोषः। यद्वा अन्धकारनिवृत्त्युत्तरक्षणवृत्तिचाक्षुषप्रमा पक्षः। स्वप्रागभावान्यस्वविषयसंशयादिजननयोग्यस्वसत्ताक्षणनियतध्वंसप्रतियोगिस्वदेशगतपूर्वकत्वं साध्यम्। परमते प्रागभावस्यैवाज्ञानत्वेन संशयादिजनकत्वात् प्रतियोग्यनिवर्त्यत्वे ऽप्यभेदे व्याप्त्यङ्गीकारेण प्रतियोगिनो

ज्ञानस्य सत्ताव्याप्यो नियतो यो ध्वंसो ज्ञानात्मकस्तत्प्रतियोगित्वात्तस्य निरासायादिपदं स्वप्राक्पदं पूर्ववदिष्टसिद्ध्यर्थं यथा ब्रह्म स्वसमानसत्ताकजीवभेदवत् अभ्रान्तत्वात् घटवदिति त्वदनुमाने स्वेष्टसत्यभेदसिद्ध्यर्थं स्वसमानसत्ताकेति पदं तद्वत्। प्रमाहेत्वदृष्टनिरासार्थं द्वितीयपदम्। तस्याः सुखाद्यनुभवफलनाश्यत्वान्न तृतीयपदेन निरासः। आत्ममनःसंयोगनिरासार्थं तृतीयम्। अन्धकारनिरासार्थं चतुर्थपदम्। एतद्विषयावरणसमयावृत्तित्वे सति एतदावरणनिवर्तकत्वं हेतुः कालादिनिरासार्थं सत्यन्तम्। उत्तरकालीनघटादिनिरासार्थं द्वितीयपदम्। संशयादिजननयोग्यमावरणशब्दार्थः। तच्च ज्ञाने सति नास्तीति सर्वानुभवसिद्धमिति नासिद्धिः। एवं प्रत्यक्षानुमानाभ्यां भावरूपाज्ञानं सिद्धम्। एवं विशुद्धब्रह्मात्मनि शुक्तिकायां चाहङ्काररजतादिमिथ्यार्थावभासान्यथानुपपत्तिरपि तत्र प्रमाणम्। पूर्वोक्तरीत्योपादानान्तराभावात्। तस्य च हेत्वदर्शनादनादित्वम्। एवं च यज्ज्ञानादि स्वयं मिथ्यामिथ्योपादानं तदज्ञानमिति स्थितम्। एवं सिद्धमर्थमाह ॥

"अन्धकारस्य भावत्वं तथा ऽध्याससमर्थनम्।
नैसर्गिकत्वसिद्ध्यर्थं तथा ऽविद्यासमर्थन"मिति ॥

कृतमिति शेषः। अनाद्यविद्यात्मना ऽध्यासस्य नैसर्गिकत्वसिद्धिरिति भावः। तस्याज्ञानस्यात्मैव विषयः तत्प्रयुक्तावरणरूपातिशयशालित्वात्। अनात्मन्यावरणे प्रमाणफलयोरभावात्। ननु अज्ञातो घट इत्यनुभवो मानमिति चेन्न तावदयमनुभवः प्रत्यक्षः; घटस्य ज्ञाने सत्यज्ञानासत्त्वात्। असति सम्बन्धिनि ज्ञानाभावात्। नाप्यनुमितिः लिङ्गाभावात्। ननु घटः पूर्वमज्ञातः इदानीं ज्ञातत्वात् संमतवदिति चेन्न। धाराद्वितीयादिज्ञानगम्ये दुःखादौ च व्यभिचारात्। न चेदानीमेव ज्ञातत्वं हेतुः, एवकारार्थस्यैवात्र साध्यतया विशेषणासिद्धेः। न चास्मर्यमाणत्वं हेतुः। ज्ञाते ऽप्यस्मृतिसम्भवात्। तस्मादज्ञानावृतचैतन्यतादात्म्येन घटादीनामध्यस्तत्वादज्ञातो घट इत्यनुभवः। साक्षिरूपचैतन्यावरणादेव जडानामपि अव्यवहारोपपत्तौ पृथगावरणे फलाभावात् अनात्मनि शुक्त्यादावावरणाभावे ऽपि विक्षेपदर्शनादज्ञानविषयत्वव्यपदेशः। ननु न जानामीत्यनुभवस्य सर्ववस्तुष्वेकाज्ञानावरणविषयत्वे लाघवादज्ञानमावरणं चैकं तस्यैव जडव्यवहारप्रतिबन्धकत्वे कथं तन्निवृत्तिं विना घटादिव्यवहार इति चेत्

उच्यते। अस्मिन्पक्षे तत्तदाकारवृत्तिज्ञानमुत्तेजकं तेन व्यवहारः। यद्वा घटादिरपि प्रातिभासिक इत्यावृतचैतन्येनैव तद्व्यवहारः। शुक्तिरूप्यव्यवहारवदिति रहस्यं पक्षद्वये ऽप्यात्मन्यावरणे सत्यपि जडव्यवहारो युज्यते। शुक्तिसाक्षात्कारस्तु न रूप्योपादानाज्ञानविनाशकः मुक्तिप्रसङ्गात्। किन्तु दण्ड इव घटस्य रूप्यस्योपादाने प्रविलयहेतुः। ननु तर्हि सविलासाज्ञाननिवृत्तेर्लोके काप्यदर्शनात्तत्त्वज्ञानस्य सा कथं इष्टफलमित्युच्यते इति चेत्। उच्यते। लोके शुक्तितत्त्वज्ञानात्तद्विरोधिनो ऽध्यासस्य निवृत्तेर्दर्शनादज्ञानस्यापि ज्ञानविरोधित्वाद्विरोधिनिवृत्तिरिष्टफलमित्युच्यते। अथवा मूलाज्ञानमेव लाघवादेकं तस्य धर्मरूपाणि विषयावच्छिन्नचैतन्ये साक्षिणि च व्यासज्यवृत्तीनि अवस्थापदवाच्यान्यनन्तानि कल्प्यन्ते। ज्ञानेनाज्ञानं निवृत्तमित्यबाधितानुभवात्। तानि च मूलाज्ञानवत्स्वाश्रयचैतन्यमेवावृण्वन्ति नानात्मानमिति सिद्धम्। तत्सङ्गृह्णाति॥

"जडावृतिनिरासश्चाप्यज्ञानावरणैकता।
अथ वा मूलमायैका ऽवस्थाज्ञानं तु भिद्यते" इति।

नन्वात्मावरणं नाम कीदृशं, किं तत्र प्रमाणं, किं फलमिति चेदुच्यते। ब्रह्म तावत्स्वप्रकाशं प्रत्यगभिन्नं सर्वश्रुतिसिद्धं, तथापि लोको नास्ति ब्रह्म न प्रकाशते इति व्यवहरति। तथा चास्ति प्रकाशते इति व्यवहारे सामग्र्यां सत्यां नास्तीत्यादिविपरीतव्यवहाररूपफलान्यथानुपपत्तिरेव विपरीतव्यवहारयोग्यत्वरूपमावरणं कल्पयति। तथा ऽप्यनुभवो ऽप्यस्ति मूढो ऽहं न किंचिज्जाने इति। अतः स्वप्रकाशेपि आत्मनि विचित्रशक्तिभावरूपाविद्याप्रयुक्तमावरणं तुरपह्नवम्। नन्वज्ञानप्रयुक्तमावरणमस्तु अज्ञानं तु अग्रहणमिथ्याज्ञानतत्संस्कारकर्मभ्यो ऽन्यन्न पश्याम इति चेन्न। सुषुप्तावात्मानवभासानुपपत्तेः। न हि स्वयम्प्रकाशस्यात्मनो जडाया मनोवृत्तेर्ग्रहणशब्दिताया अभावेनानवभासो युक्तः खद्योताभावेनेव सवितुः। न सुषुप्तौ भ्रान्तिरस्ति नापि संस्कारः आवरकः भ्रान्तिसंस्कारे सत्यपि शुक्तितत्त्वावभासदर्शनात्। नापि कर्मावरकं मानाभावात् पूर्णानन्दत्ववच्चैतन्यस्याप्यस्फूर्तिप्रसङ्गाच्च। अज्ञानस्य तु भावरूपस्य प्रत्यक्षत्वात्स्वसाधकं चैतन्यांशं विहाय स्वाश्रयविशेषांशावरकत्वं युक्ततरं स्वमपीतो भवतीत्यहङ्कारस्य सुषुप्तौ नाशश्रवणात्। कर्मसंस्काराश्रयत्वेनाविद्या ऽवश्याभ्युपेया। नन्वखण्डतमो द्रव्यमावर-

कमिति चेन्न । तस्य नित्यत्वे मुक्त्ययोगात् ज्ञाननिवर्त्यत्वे तस्यैवाज्ञानत्वात् । अत्र कश्चिद्भेदाभेदाभ्यां सर्वसङ्करवादी जल्पति । अग्रहणमिथ्याज्ञानतत्संस्कारा एवाज्ञानमिति स प्रष्टव्यः । किं तन्मिथ्याज्ञानमिति ननु मनुष्योऽहमिति भ्रम इति चेन्नायं भ्रमः भेदाभेदज्ञानत्वात् । खण्डो गौरिति ज्ञानवत् । ननु यथेदमिति प्रतिपन्नं रूप्यं तत्रैव निषिध्यते तद्वदहमिति ज्ञातं मनुष्यत्वं निषिध्यते । नाहं मनुष्यः किन्तु ब्रह्मेति तथा चायं भ्रमः स्वविशेष्ये बाधितार्थज्ञानत्वाद्रूप्यज्ञानवदिति चेन्नायं गौः खण्डः किन्तु मुण्ड इति गोत्वावच्छिन्नैक्येन ज्ञातस्य खण्डस्य तत्रैव निषेधात् । खण्डो गौरिति ज्ञाने व्यभिचारात् । ननु खण्डो गौरिति प्रतिपन्नोपाधौ गोत्वावच्छिन्नमात्रे विशेष्ये खण्डो न बाध्यते किन्तु गोत्वावच्छिन्ने मुण्डे स बाध्यते, अतस्तत्र हेत्वभावान्न व्यभिचार इति चेन्न । तथा सति पक्षे हेतुस्वरूपासिद्धेः न ह्यहन्त्वावच्छिन्ने मनुष्यैक्यनिषेधः किं त्वहन्त्वावच्छिन्ने ब्रह्मणीति तुल्यत्वात् । ननु जातिव्यक्तिगुणगुणिकार्यकारणविशिष्टस्वरूपांशांशिभावाः पञ्च यत्र, तेष्वेव भेदाभेदाविति न हेत्वसिद्धिरिति चेन्न । तव क्षपणकशिष्यत्वेन सर्ववस्तुषु भेदाभेदवादित्वव्याघातात् । मनुष्यशब्दितदेहस्य ब्रह्माभिन्नात्मकार्यत्वाच्च । तस्मात्सर्वत्र भेदाभेदयोः सत्त्वे भ्रान्तिस्तव मते दुर्लभेति सिद्धम् । किं च भ्रान्तेर्मनोधर्मत्वे आत्मन्यविद्या न स्यादिति बन्धमुक्तिवैयधिकरण्यम् न चात्मनः परिणामो भ्रमः । ज्ञानरूपस्य नित्यज्ञानगुणकस्य वा ज्ञानान्तरपरिणामायोगात् । यावद्द्रव्यभाविस्वसमानजातीयगुणान्तरावरुद्धे एकमात्रवृत्तिगुणान्तरस्यानुदयात् । अतो न शब्दद्वित्वादौ परमते व्यभिचारः । आत्मनो नित्यज्ञानं सुषुप्त्यनुसन्धानान्यथानुपपत्त्या सिध्यति । तस्माद्भ्रान्त्यादिमूलत्वेनानिर्वचनीयभावरूपमज्ञानमनाद्येष्टव्यमिति तस्याध्यासोपादानत्वं युक्तमेव । एवमुपादानात्मना प्रवाहरूपेण वा नैसर्गिको ऽध्यासो हेतुहेतुमद्भावान्नैमित्तिक इत्युच्यते भाष्यकृता मिथ्याज्ञाननिमित्त इति । एवं निष्कलङ्कचैतन्यैकताने निरंशानन्दैकरसे ज्ञानादिसाक्षिणि अज्ञानाध्यासो ऽनादिस्तत्कार्याध्यात्मिकाध्यासानामहमिति प्रथमो ऽध्यासः । नन्वधिष्ठानारोप्यांशद्वयानुपलम्भान्नायमध्यास इति चेन्न । अहङ्कारटीकायामंशद्वयस्य वक्ष्यमाणत्वात् । नन्वहङ्कारेन्द्रियाणां साक्षिभेदानुपलम्भादस्त्वध्यासः, शरीरस्य तु मम शरीरमिति भेदोपलब्धेरिन्द्रिय-

ग्राह्यत्वाच्च नाध्यास इति चेन्न । कल्पितस्याहङ्काराख्यस्य भोक्तुर्भोगोपकरणत्वेनाध्यस्तत्वानुमानात् । मायाविना कल्पितस्य राजच्छत्रादिवदिति । भेदोपलम्भस्तु परोक्षः । इन्द्रियग्राह्यत्वं च नाध्यस्तत्वविरोधि । तथा चाधिष्ठानसामान्यज्ञानचैतन्यं पूर्वपूर्वभ्रमजन्यसंस्कारश्च निमित्तं अनाद्यज्ञानमुपादानं दोषश्च । अज्ञातात्मा कर्तेति सामग्रीसत्त्वादध्यासः सम्भवति । तस्माद्विषयप्रयोजनसम्भवाच्छास्त्रमारम्भणीयमिति सिद्धम् ।

अधुना लक्षणसम्भावनाप्रमाणैरध्यासः साध्यते । तत्राह—कोऽयमध्यासो नामेत्यादि ? कथं पुनः प्रत्यगात्मनीत्यस्य प्राक्तनं लक्षणभाष्यं तदादिसम्भावनाभाष्यं तमेतमविद्याख्यमात्मानात्मनोरित्यारभ्य सर्वलोकप्रत्यक्ष इत्यन्तं प्रत्यक्षानुमानार्थापत्त्यागमाख्यप्रमाणपरमिति विभागः ? ननु लक्षणस्येतरभेदज्ञानं फलं, सम्भावनाया असम्भावनानिरासः फलम् । असम्भावना नाम ग्राह्यवस्त्वभावबुद्धिः । एवञ्च प्रमाणेन सर्वतो व्यावृत्तवस्तुसत्तानिश्चये सति लक्षणसम्भावनेन वक्तव्ये तयोः फलस्यार्थसिद्धत्वादिति चेत् ? उच्यते । यदि वस्तुसाधकमानेन लक्षणं ज्ञायेत यथा चक्षुषा घटत्वं, तदा स्वयं ज्ञानलक्षणसामर्थ्यात्तत्फलसिद्धेः पृथग्लक्षणं न वाच्यम् । इह तु अध्यासे साक्षिप्रत्यक्षं व्यवहारो ऽध्यासमूलः । तदन्वयाद्यनुविधायित्वादित्यनुमानं व्यवहारानुपपत्तिः । ब्राह्मणो यजेतेत्याद्यागमश्चाहं मनुष्य इति ज्ञानमात्रे मानं; न तु तज्ज्ञानस्याध्यासत्वं तेन ज्ञातुं शक्यं किन्तु बाधेनाध्यासत्वं शुक्तिरूप्यादिज्ञानस्य ज्ञायते । तल्लक्षणयोगादहं मनुष्य इति ज्ञानस्याध्यासत्वं स्पष्टं भवति नान्यथा । तस्मादस्य ज्ञानस्य प्रमातो भेदज्ञानाय लक्षणं वाच्यम् । भेदज्ञानं विना बाधानुदयादेति सिद्धम् । आत्मानात्मनोः परोक्षं भेदज्ञानमादायाहं[1] नर इत्यादिज्ञाने लक्षणं योज्यम् । यद्यपि क्वचित्प्रमाणेनैवासम्भावना निरस्यते यथा पक्षिणामाकाशगमने, तथापि क्वचित् प्रत्यक्षसिद्धे ऽप्यसम्भावना दृश्यते । यथा दूरदृष्टवता दृष्टे सवितृसुषौ एवमात्मनि अविषये ऽसङ्गे गुणावयवशून्ये स्वतोभासमानविशेषे आरोप्य विशिष्टज्ञानविषयत्वस्य दोषानुषङ्गस्य सादृश्यस्य विशेषादर्शनस्य चाध्यासव्यापकस्याभावादध्यासासम्भावना स्यादिति पृथक् सम्भावनाऽपि वाच्या ।

अतो लक्षणसम्भावनाप्रमाणानि क्रमेणोच्यन्ते । अथ सिद्धान्तन्यू-

(१) भेदज्ञानायाहमिति पाठान्तरम् ।

नाधिकोक्तिभिः पञ्चहेत्वाभासैश्च वर्जिता प्रमाणयुक्तिभ्यां तत्त्वनिर्णयफलावादकथा । तद्रूपमिदं शास्त्रमिति सूचनार्थं लक्षणप्रश्नभाष्ये आहेति परोक्तिः । स्मृतिरूपः परत्र पूर्वदृष्टावभास इत्यध्यासलक्षणं भाष्यम् । अस्यार्थः । स्मृतिः स्मर्यमाणं वस्तु तद्रूपस्तत्सदृशः । सादृश्यं स्फोटयति । पूर्वेति । दृष्टं दर्शनं संस्कारद्वारा पूर्वदर्शनादवभास्यत इत्यर्थः । तथा च संस्कारजन्यज्ञानविषयत्वं शुक्तिरूप्यस्य स्मर्यमाणेन सादृश्यम् । एवं च स्मर्यमाणसदृशत्वे सति परत्रावभास्यत्वमध्यस्तत्वम् । योग्याधिकरणे प्रत्यभिज्ञायमाने देवदत्ते ऽतिव्याप्तिनिरासाय परत्रेति पदम् । अयोग्याधिकरणपरमुपात्तम् । अधिकरणस्यायोग्यत्वं कल्पितार्थात्यन्ताभावरूपत्वं तदत्यन्ताभाववत्त्वं वा । यद्यप्येकावच्छेदेन स्वसंसृज्यमानाधिकरणे स्वात्यन्ताभाववत्यवभास्यत्वं साधनाद्यध्यस्तसाधारणं निर्दुष्टं लक्षणम् । संयोगे ऽतिव्याप्तिनिरासायैकावच्छेदेनेति । कालभेदेन स्वात्यन्ताभाववत्यवभास्ये घटे ऽतिव्याप्तिनिरासाय स्वसंसृज्यमानेति पदम् तेनाभावकाले तदधिकरणे प्रतियोगिसंसर्गस्य वर्तमानतोच्यते । ननु संयोगादिकमध्यस्तं लक्ष्यमिति चेत्सत्यम् । चैतन्ये सर्वमध्यस्तं न तु जडे वृक्षादौ संयोगादिकमध्यस्तमित्यलक्ष्यमेतत् । तथापि स्मृतिरूपपदं न व्यर्थम् । तद्बलेनैव परत्रावभासपदाभ्यामुक्तलक्षणलाभात् । तत्पदं विना परत्रावभास इत्युक्तावन्यथाख्यातिशङ्का स्यात् । तत्पदेन परत्रावभास्यो ऽर्थः । स्मर्यमाणसदृश इत्युक्त्या स्मर्यमाणाद्भिन्नो ऽर्थस्तत्र वर्तत इत्युक्तं भवति । तत उक्तलक्षणलाभः तस्मिन्नर्थे पूर्वोक्तसामग्रीस्मरणार्थं पूर्वदृष्टपदेन संस्कारजन्यत्वमुक्तमित्यनवद्यम् । अन्ये तु परत्रावभासपदाभ्यामध्याससाधारणलक्षणमुक्तं स्मृतिरूपपूर्वदृष्टपदाभ्यां प्रातीतिकाध्यासलक्षणमुच्यते । अत्र रूप्यस्य स्मर्यमाणेन प्रमाणाजन्यज्ञानविषयत्वं सादृश्यं स्मृतिरूपशब्दार्थः । स्मृतिभ्रमयोः प्रमाणाजन्यज्ञानत्वात् । पूर्वदृष्टपदं तु पूर्वदृष्टजातीयपरम् । अभिनवरूप्यस्य पूर्वदृष्टत्वाभावात् । सद्यो जातघटे स्मर्यमाणे चातिव्याप्तिवारणाय पदद्वयम् । न चाविद्यायां पूर्वमदृष्टायामव्याप्तिः तस्या व्यावहारिकत्वात् । यदि तस्याः प्रातीतिकत्वेन लक्ष्यत्वं तदा तज्जातीयत्वं नामातीतदर्शनाविषयत्वमिति संक्षेपः । एतदभिप्रेत्याह—

अग्रहभ्रान्तिसंस्कारकर्मभिर्नावृतिर्भवेत् ।
सर्वसङ्करवादी च मूलाज्ञानस्य सिद्धये ॥

निरस्तो ऽध्यासभाष्यस्य विभागस्तस्य लक्षणमिति।

अत्राहाख्यातिवादी रजतं स्मर्यमाणमेव न तत्सदृशमत्रापरोक्षमनुभूयते अनुभाव्याभावात् बाधविरोधेनार्थासत्वाच्च । तन्न । अधिष्ठानसामान्यज्ञानदोषादीनामनुभावकत्वात् । इदं रजतमिति पुरोवर्तित्वापरोक्षानुभवबलेनार्थसत्तानिश्चयाच्च । न च बाधानुपपत्तिः । बाधयोग्यार्थस्वीकारात् । तस्मादत्र कालत्रये ऽपि रजतं नास्तीत्यबाधितानुभवरूपबाधादत्यन्ताभावः सत्यः । अपरोक्षानुभवविषयो ऽर्थः सन्नपि मिथ्येति न विरोधः। अनुभवबलेन समानसत्ताकयोरेव भावाभावयोर्विरोधकल्पनात् । पुरोवर्तिविषयकरजतज्ञानानङ्गीकारे इदं रजतत्वेन साक्षात्करोमीत्यनुभवविरोधः । इदमि प्रवृत्त्यनुपपत्तिश्च। ज्ञानस्येष्टतावच्छेदकविशिष्टस्वविषये प्रवर्तकत्वात्। तद्विशिष्टस्य देशान्तरस्थत्वात्तव मते तत्रैव प्रवृत्तिः स्यादिति । ज्ञानाध्यासलक्षणं तु स्मृतिसदृशत्वे सति परत्रावभासत्वम् । सादृश्यं संस्कारजन्यत्वे सति स्मृतिभिन्नत्वम् । विशेषणकृत्यं पूर्ववत् । ननु भ्रमो न संस्कारजन्यः अस्मृतित्वादभिज्ञावदिति चेन्न । संप्रयोगमात्रजन्याभिज्ञाप्रत्यक्षादन्येषां ज्ञानानां सर्वेषामपि पूर्वानुभवजन्यसंस्कारजन्यत्वात् । व्याप्त्यनुभवजसंस्कारे सत्यनुमितिरन्यथा नेत्यन्वयव्यतिरेकदर्शनात्। तथा च हेतोरनुमितौ व्यभिचारः। अतो रजतज्ञानस्य संस्कारजन्यत्वे ऽपि न स्मृतित्वम्। स्यादेतत् रजतभानं स्मृतिरेव। संस्कारमात्रजन्यज्ञानत्वात्। गङ्गास्मृतिवत् । न च हेत्वसिद्धिः संप्रयोगस्याधिष्ठानज्ञाने उपक्षयात् । अनुभवस्मृत्यात्मकस्य सर्वस्य ज्ञानस्य यथार्थत्वेन भ्रान्तेश्चासत्त्वेन दोषस्य हेतुत्वे मानाभावात्। न च साध्याविशेषः स्मृतित्वस्य जातित्वात्। अननुभवत्वं वा साध्यम्। नचैवं रजतं स्मरामीत्यनुभवापत्तिः स्मरणाभिमानस्य प्रमोषात् । इदमित्यनुभवाव्यवधानेनोत्पन्नरजतज्ञानादिदमि प्रवृत्तिर्युज्यते। ननु बालस्य तिक्तानुभवाभावात्तिक्तो गुड इति स्मृतिः कथमिति चेत्? उच्यते। पित्ताख्यो दोष एव जन्मान्तरीयसंस्कारमुद्बोध्य स्मृतिं जनयति माधुर्यज्ञानं प्रतिबध्नाति स्मृतित्वं च मुष्णातीति। तस्मादख्यातिर्भ्रान्तिरिति सिद्धम्। अत्रोच्यते। केयमख्यातिः? न तावद्विशिष्टज्ञानाभावमात्रं सुषुप्तौ भ्रान्तिप्रसङ्गात्। नाप्यविविक्तानेकपदार्थज्ञानत्वं भ्रान्तित्वं यदि पदार्थयोरविविक्तत्वं भेदाज्ञानं तर्ह्यसम्भवः, इदं रजतमित्यपुनरुक्तशब्दद्वयस्मृतिहेतु-

त्वेन सामान्यविशेषयोर्भेदज्ञानस्य सत्त्वात् । यद्यैक्यज्ञानं तदा मद्विष्टसिद्धिः । तादात्म्यसंसर्गज्ञानलाभात् । खण्डो गौरिति प्रमायामतिव्याप्तिश्च । यद्यविविक्तं ज्ञानद्वयं भ्रमस्तर्ह्यज्ञाते भेदयोर्घटपटज्ञानयोर्भ्रान्तित्वापत्तिः । कदाचिद्भेदज्ञानं प्रकृते ऽपि तुल्यम् । तस्मादख्यातिवादिनो लोके भ्रान्तिव्यवहारोच्छेदः । अतो मिथ्यार्थज्ञानं भ्रम इत्यकामेनाप्यङ्गीकार्यम् । किञ्च रजतज्ञानस्य स्मृतित्वे स्मरामीत्यनुभवेन ग्रहणादिविवेकापत्तिः । न च स्मरणाभिमानः प्रमृष्ट इति वाच्यम् । न तावत्स्मृतिरेव स्मरणाभिमानः तस्याः सत्त्वेन प्रमोषाभावात् । नापि स्मृतिध्वंसः, तस्याप्यसत्त्वात् । न च स्मृतित्वस्याज्ञानं प्रमोष इति वाच्यम् । तज्ज्ञानस्यैव।पाद्यत्वात् । न च दोषात्तदज्ञानं सो ऽयमिति प्रत्यभिज्ञाभ्रमे सत्यपि दोषे तं स्मरामीति ज्ञानात् । एतेन पूर्वानुभवदेशकालवैशिष्ट्यं स्मर्यमाणस्य तत्तारूपः स्मरणाभिमानः तदज्ञानं प्रमोष इति निरस्तम् । सो ऽयमिति भ्रमे तज्ज्ञानस्य सत्त्वेनायमित्यनुभवात् स इति ज्ञानं भिन्नम् । स चायञ्च भिन्न इति विवेकापत्तेः । अनुभवस्य स्वाविषयत्वेन स्वविषयमात्रविषयकस्वजन्यस्मृतिविषयत्वायोगाच्च । अनुभूतो घट इति स्मृतिस्तु न घटव्यवसायजन्या, किन्तु तदनुव्यवसायजन्या अनुव्यवसायश्च सिद्धान्ते साक्षिरूपः । स च विषयविशिष्टत्वेनानित्य इति संस्कारहेतुः । न चानुभवस्य स्वप्रकाशत्वात्स्वजन्यस्मृतिविषयत्वं कार्यमात्रस्य जडत्वात्पदार्थस्मृतेर्मूलानुभवागोचरत्वदर्शनाच्च । न स्मर्यमाणे क्वापि पूर्वानुभवसम्भेदः यस्तव स्मरणाभिमानो भवेत् पदार्थस्मृतेरप्यनुभवगोचरत्वे ऽनुभवस्य शब्दार्थता स्यात् । अत्र प्रसङ्गात् कञ्चिदाह । शब्दास्यार्थेन संयोगतादात्म्ययोरसत्त्वात्सम्बन्धान्तरादर्शनाच्चाप्रामाण्यमिति । तन्न । शक्तेः सम्बन्धस्य सत्त्वात् । नन्वव्युत्पन्नस्य शब्दादर्थस्मृत्यदर्शनाच्छब्दार्थयोः सम्बन्धज्ञानमर्थस्मृतेः प्राग्वक्तव्यम् । शक्तिस्तु स्मृतिरूपकार्यलिङ्गानुमेयेत्यन्योन्याश्रयः । सम्बन्धज्ञाने जाते स्मृतिजन्म तेन च तज्ज्ञानमिति चेन्न । व्युत्पत्तिकाले शब्दस्यार्थे शक्तिग्रहानन्तरं शब्दश्रवणात् शक्तिग्रहजसंस्कारोद्बोधमात्रेण पदार्थस्मृत्यङ्गीकारात् । अर्थस्मृतेः प्रागेव शब्दस्यार्थेन सम्बन्धज्ञाने तु शब्दवैयर्थ्यं स्यात् सम्बन्धविशेषणत्वेनार्थस्य ज्ञातत्वादित्यलम् । ननु यदि पूर्वानुभवसम्भेदो न स्मृतिविषयस्तर्हि स्मृतेरनुभवात् विषयविशेषाभावात्कथं भेद इति चेत् ?

कथं तव घटस्मृतेर्घटानुमितितो भेदः ज्ञानसम्भिन्नार्थगोचरत्वावि-शेषात्। ननु करणविशेषादनुमितिस्मृत्योर्भेद इति चेदिहापि तुल्यम्। संस्कारमात्रस्य स्मृतिहेतुत्वात्। तदन्यस्यानुभवहेतुत्वात् तस्मात्सं-स्कारमात्रजन्यत्वमेव स्मृतेरनुभवाद्विशेषः। नेतोऽन्यः स्मरणाभि-मानो नाम कश्चिदस्ति यस्य प्रमोषादविवेकः कल्प्येत । किञ्च स्वप्ने आत्मा गृह्यमाणः अन्यत्सर्वं स्मर्यमाणं तत्र गृह्यमाणाविवेके ऽहं नीलमिति स्यात्स्मर्यमाणानामेवान्योन्यमविवेके परोक्षता स्या-त्तस्मान्नाख्यातिर्भ्रमः। रजतज्ञानस्य शुक्तिगोचरत्वाभावे तत्र प्रव-र्तकत्वायोगाच्च । एतेनासत्यप्रवृत्तिहेतुज्ञानत्वं भ्रान्तित्वमिति निर-स्तम्। तस्माद्रजतज्ञानं पुरोवर्तिविषयकम्। तत्र प्रवर्तकज्ञानत्वाच्छु-क्तिज्ञानवदिति सिद्धम्। विशिष्टज्ञानात्मको भ्रमः। स्मृतित्वानुमाने हेतोः स्वरूपासिद्धिः। रजतं साक्षात्करोमीत्यनुभूयमानज्ञानस्य सं-स्कारमात्रजन्यत्वाभावादिति स्थितम्। तार्किकास्तु सादृश्यादिदोष-दुष्टमिन्द्रियं देशान्तरस्थरजतात्मना शुक्तिकां गृह्णातीत्यन्यथाख्याति-रित्याहुः। तदयुक्तम्। इदं रजतमिति भ्रमे किमिदमि रजततादात्म्य-मारोप्यं रजतत्वसंसर्गो वा? आद्ये किं रजतांशज्ञानस्य शुक्तिर्विष-यः रजतं वा? नाद्यः। अनुभवविरोधात्। द्वितीये देशान्तरस्थरजते प्रवृत्तिः स्यात् ज्ञानस्य स्वविषय एव व्यवहारहेतुत्वात्। एतेन रज-तज्ञानस्य शुक्तिर्विषयः तज्जन्यव्यवहारास्पदत्वादिति निरस्तमुक्त-बाधात्। द्रव्यज्ञानाद्द्रव्येण सहार्थादादीयमानगुणादौ व्यभिचाराच्च। किञ्च सामान्यविशेषयोरत्यन्तभेदवादिना तादात्म्यस्यासत्त्वेन प्र-त्यक्षत्वायोगः, जन्यप्रत्यक्षविषयत्वे इन्द्रियसन्निकर्षाश्रयत्वस्य व्या-पकत्वादसति तदभावात्। एतेन संसर्गारोपो निरस्तः। शुक्तिकेदं-रजतत्वाभ्यां निरूपितसंसर्गस्यात्यन्तासत्त्वात् रजतत्वस्य स्वातन्त्र्ये-णोपस्थित्यभावेनारोपासम्भवाच्च। भेदाभेदवादिनां तु तादात्म्यस्य सत्यत्वान्न क्वापि भ्रमः स्यात्। यत्तु शुक्तिका रजताकारेण परिणम-तीत्यन्यथाख्यातिरिति तन्न। दुग्धपरिणामस्य दध्न इवास्य बाधा-सम्भवात्। तस्मान्नान्यथाख्यातिः। अत्राहात्मख्यातिवादी बौद्धः। रजतं बुद्ध्यभिन्नं इन्द्रियासन्निकृष्टत्वे सति अपरोक्षत्वाद् बुद्धिवत्। बुद्धेरजताकारत्वे तद्बुद्धिसन्ताने पूर्वं कदाचिदुत्पन्नरजतबुद्धिरेव संस्कारशब्दिता हेतुः व्यवहितस्यापि शालिबीजस्य स्वसमानाकार-बीजहेतुत्वदर्शनात्। तस्माद् बुद्ध्यात्मकं रजतम् बहिर्वत्स्याद्‌ इत्या-

त्मख्यातिरिति । स वक्तव्यः-रजतं कुतो जायते ? इति न तावदर्थात् ज्ञानाद्बाह्यार्थानङ्गीकारात् । नाप्यतीतरजतज्ञानात् । अतीतस्याहेतुत्वात् अन्यथा चिरध्वस्तवन्हेरिदानीं धूमप्रसङ्गः । न च यस्य ज्ञानस्याकारो रजतं तस्मादेव तज्जायत इति वाच्यम् । अभेदे तदयोगात् । भेदे तु क्षणिकस्य जनकज्ञानस्य पश्चाद्भावि रजतं न विषयः ज्ञानान्तरं तु रजतस्य दुर्लभमित्यज्ञातमेव रजतं स्यादिति । तस्मान्नात्मख्यातिः । ननु तर्हि रजतज्ञाने का सामग्री, किं तज्ज्ञानं, कस्तस्य विषय इति उच्यते । अधिष्ठानसामान्यज्ञानं संस्कारो दोषश्च निमित्तम् न च दोषस्य विशेषज्ञानप्रतिबन्धकत्वमेव न विपरीतकार्यहेतुत्वमिति वाच्यम् । वेत्रबीजे दावदाहाख्यदोषस्य कदल्यङ्कुरहेतुत्वदर्शनात् । ज्ञानं त्वधिष्ठानारोप्यविशिष्टज्ञानमेकमैन्द्रियकं न सम्भवति इन्द्रियसंप्रयोगस्याधिष्ठानसामान्यवृत्तावुपक्षयात् । रजतस्य प्रातीतिकस्य प्रतीतेः पूर्वं सन्निकर्षाभावात् । किन्तूक्तनिमित्तसहिताविद्यारजततद्वृत्त्याकारेण परिणमते । एवं चाधिष्ठानारोप्ययोर्वृत्तिज्ञानभेदे ऽपि सत्यानृतयोस्तादात्म्येनैक्यादेकविषयावच्छिन्नं चैतन्यरूपमेकं विशिष्टज्ञानं फलरूपं भ्रान्तिज्ञानम् । तस्य च मिथ्यारजतं विषयः । भ्रान्तेर्मिथ्याज्ञानत्वप्रसिद्ध्यन्यथानुपपत्तिर्विषयस्य मिथ्यात्वे मानम् । स्वतो ज्ञानस्याबाधेन मिथ्यात्वायोगादिति । तत्र चाविद्यावृत्तावनाग्रहः वृत्तिं विनापि रजतस्य सुखादिवत्साक्षिभास्यत्वसम्भवात् । इदमाकारवृत्तिनाशादेव रजतस्मृतियोगात् । यद्वृत्त्यवच्छिन्नं चैतन्यं यावतां सत्तानिश्चयरूपं तद्वृत्तिनाशात्तावद्गोचरसंस्कार इति नियमात् । पूर्वानुभवसंस्कारस्य प्रातीतिकरजतं प्रत्येव हेतुत्वोपपत्तेरिति संक्षेपः । ननु सिद्धान्ते रजतं पश्यामीति चाक्षुषत्वानुभवः कथमिति चेत् ? इदमाकारचाक्षुषवृत्त्यभिव्यक्तचैतन्यविषयत्वादिति ब्रूमः । यत्तु संप्रयोगस्यानुभवे संस्कारस्य स्मृतौ निरपेक्षत्वादनुभवस्मृत्यात्मकं ज्ञानद्वयमेव युक्तं नैकं विशिष्टज्ञानं निरपेक्षहेत्वोरेककार्यकारित्वादर्शनादिति, तन्न । ज्ञानद्वययौगपद्याभावेन प्रवृत्त्यनुपपत्तेः । धूमज्ञानस्य स्वकार्ये धूमव्यवहारादौ निरपेक्षस्यैव व्याप्तिसंस्कारसहितस्यानुमितिहेतुत्वदर्शनात् । न च व्याप्तिस्मृतिरेव सहायः अस्या अपि स्वकार्ये निरपेक्षत्वेन निरपेक्षहेतोरेककार्यकारित्वानपायात् । धूमदर्शनोद्बुद्धसंस्कारादेवानुमितिसम्भवेन मध्ये ऽननुभूयमानव्याप्तिस्मृतिकल्प-

मानौचित्याच्च । एतेन परामर्शो हेतुरित्यपास्तम् । पक्षतावच्छेदकावच्छिन्नवृत्तिहेतावव्यभिचरितसाध्यसादेश्यरूपव्याप्तिपरामर्शाङ्गीकारे तदानीमेव पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरनुमित्युच्छेदापत्तेः सिद्धसाधनत्वादसन्निकृष्टवन्हिव्याप्तेः प्रत्यक्षत्वासम्भवाच्च । ज्ञानस्याप्रत्यासत्तित्वादिति दिक् । संस्कारसंप्रयोगयोरेव प्रत्यभिज्ञाकारित्वदर्शनाच्च । भिन्नजातीयज्ञानहेतुभ्यो नीलादिभ्यश्चित्ररूपाभिज्ञाप्रत्यक्षदर्शनाच्च । तस्माद्दोषेण सह संस्कारसंप्रयोगाभ्यामेकं भ्रान्तिज्ञानं युक्तम् । यद्यपि संप्रयोगस्याधिष्ठानसामान्यवृत्तावेव हेतुता दोषसंस्कारयोस्तु मिथ्यारजते तद्वृत्तौ च तथापि विशिष्टभ्रान्तिज्ञानरूपचैतन्यमपि वृत्त्यादिविशिष्टत्वेन जायमानं सत्परम्परया संप्रयोगादिजन्यमित्युच्यते इति मन्तव्यम् । किञ्च सर्वेषामेव पुरोदेशे रजतानङ्गीकारवादिनामत्र तत्साक्षात्करोमीत्यनुभवविरोधः । ननु तवाप्यस्तीत्यनुभूतस्य सद्भिन्नत्वेऽनुभवविरोध इति चेन्न । रजते इदन्तासंसर्गवदधिष्ठानसत्तासंसर्गारोपात् । ननु सर्वस्याविद्यकस्याधिष्ठानचैतन्यरूपसत्त्वसम्बन्धाविशेषे कथं प्रातीतिकव्यावहारिकविभाग इति चेत्? उच्यते । अविद्यातिरिक्तदोषाजन्यं जडं व्यावहारिकं आगन्तुकदोषजन्यं प्रातीतिकं तथा तत्सम्बन्धादेकमेव सत्त्वं त्रिविधमित्युच्यते । कालत्रयाबाधिते ब्रह्मणि स्वरूपे पारमार्थिकं सत्त्वं घटादौ व्यावहारिकं तदेव सत्त्वं रजतादौ प्रातीतिकमिति । अन्ये तु त्रीणि सत्त्वानि भिन्नान्येव व्यवहाराय कल्पितानीत्याहुः तच्चिन्त्यम् । सर्वत्र सद्बुद्धेरेकाकारत्वाल्लाघवाच्च । तस्मादुपाधिभेदादेव सत्त्वस्य त्रैविध्यम् । एवं चानुभवाविरोधान्मायामयं रजतं प्रत्यक्षभ्रान्तिविषय इति सिद्धम् । एतदभिप्रेत्याह—

अख्यातिभङ्गः शब्दार्थसम्बन्धकथनं तथा ।
अन्यथात्मख्यातिभङ्गो मिथ्यारजतसाधनमिति ॥

अत्र केचित् । अविद्यामयं रजतं न मायामयम् । मायाविद्ययोर्भेदप्रसिद्धेरित्याहुः । अत्रोच्यते । किं लक्षणभेदात्तयोर्भेदः, उत व्यवहारतः? नाद्यः । अनिर्वचनीयत्वस्वरूपलक्षणस्य तत्त्वावरकत्वविशेषलक्षणस्य भ्रान्त्युपादानत्वोपलक्षणस्य चाविशेषात् रजतादेरप्यविद्यात्मकत्वेन लक्ष्यत्वान्नाद्यस्यातिव्याप्तिः । यथा पृथिवीलक्षणस्य गन्धस्य पृथिवीत्वेन लक्ष्ये घटे नातिव्याप्तिः तद्वत् । न च सत्यमन्त्रादिकमेव मायेत्यनिर्वचनीयत्वासिद्धिरिति वाच्यम् । अनिर्वचनीयका-

र्योपादानस्यैव मायापदार्थत्वात् । अस्ति हि मायाविना सृष्टेषु मिथ्यागजादिषु मायापदप्रयोगः । स च तदनुस्यूतोपादानविषयः । गजादीनां व्यावृत्तानां तदर्थत्वासम्भवात् । तथा च मिथ्योपादानं स्वयं मिथ्यामायापदार्थः । अघटितकारित्वगुणयोगान्मन्त्रादौ मायाशब्दो गौणः । न च स्वाश्रयाव्यामोहिका माया तद्व्यामोहिका ऽविद्येति भेद इति वाच्यम् । एकस्या अपि भ्रमाविरोधिज्ञानवत्यव्यामोहकत्वस्य तच्छून्ये मोहकरत्वस्य च सम्भवात् । तस्मान्न लक्षणतो भेदः । नापि व्यवहारतः । "तत्त्वभावाद्भिश्चमायानिवृत्ति"रिति श्रुतौ । "तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते । योगी मायाममेयाय तस्मै विद्यात्मने नम" इति च स्मृतौ । तत्त्वज्ञाननाश्याविद्यायां मायाशब्दप्रयोगात्तथैव भाष्यकारादिभिर्व्यवहारादिति न मायाऽविद्ययोर्भेदः । किन्त्वेकैवाविद्या सर्वसाधारणभ्रमशक्त्या विक्षेपशक्त्या वा माया असाधारणभ्रमशक्त्या आवरणशक्त्या वा अविद्येत्युच्यते । तस्माद्भवत्यविद्यं रजतं मायामयमिति । न च रजतं पारमार्थिकमिति सत्ख्यातिर्युक्ता, शुक्तिवत्सर्वदा ग्राह्यतापत्तेः । कालत्रये ऽपि नास्तीति बाधानुपपत्तेश्च । तेन हि बाधेन प्रतिपन्नस्य रजतस्याधिष्ठाने ऽत्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वमेव विषयीक्रियते । एतेन बाधप्रत्यक्षमपि मिथ्यात्वे मानमित्युक्तं भवति । इदं चाभावः प्रत्यक्ष इति परमतेन द्रष्टव्यम् । सिद्धान्ते तस्यानुपलब्धिग्राह्यत्वात् । यद्वा सिद्धान्ते ऽप्यभावो ऽनुपलब्धिसहितसाक्षिप्रत्यक्ष इति मन्तव्यम् । बाधानन्तरं मिथ्यैव रजतमभादित्यनुभवो बाधस्य मिथ्यात्वविषयतां द्रढयति । ननु को ऽयं बाधः? न तावदन्यार्थिनो ऽन्यत्र प्रवृत्तिध्वंसो बाधः वीतरागाणां प्रवृत्त्यनुदये ऽप्यधिष्ठानदर्शने बाधप्रसिद्धेः । न चाभेदेन ज्ञातयोर्भेदज्ञानं बाधः । शुक्लो घट इति ज्ञातयोर्घटस्य शौक्ल्यमिति भेदज्ञानस्य बाधत्वापत्तेरिति उच्यते । किं मिथ्यात्वव्यवहारहेतुर्बाध आक्षिप्यते, तत्त्वसाक्षात्कारसाध्यो वा? नाद्यः । प्रतिपन्नस्याधिष्ठाने ऽत्यन्ताभावप्रमाया एव तद्धेतुत्वेन बाधत्वात् । तदुक्तं बाधप्रत्यक्षसिद्धं विद्यात्वमिति । न द्वितीयः । कार्यात्मना परिणताज्ञाननिवृत्तेस्तत्साध्यत्वेन बाधत्वादित्यनवद्यम् । एवं ख्यात्यन्तरनिरासेन मिथ्यारजते परत्राऽवभास्यत्वमध्याससाधारणलक्षणमुपपादितम् । तत्र स्मृतिरूपपदेन ज्ञानाध्यासे संस्कारजन्यत्वं स्मृतिसादृश्यमुक्तम् । अत्र केचित् । भ्रमस्य संस्कारमात्रजन्यत्वेन स्मृतिसादृश्यायोगात् सादृश्यवाचि-

ना ... पदेन दोषसंप्रयोगसं ...रजन्यत्वं लभ्यते । तच्च कार्याध्यासस्य लक्षणमित्याहुः । तत्र दोषादेरन्वयव्यतिरेकाभ्यां रजताद्यर्थे अपि हेतुत्वं मन्तव्यम् । नन्विदं लक्षणद्वयं स्वप्नाध्यासे नास्तीत्यव्याप्तम्, न हि तत्रेन्द्रियसम्प्रयोगो ऽस्ति, इन्द्रियाणामुपरतत्वात् । अतः कार्याध्यासलक्षणमत्र नास्ति अधिष्ठानादर्शनात् । परत्रावभासत्वमपि नास्तीति चेत्; उच्यते । निद्रादोषपूर्वानुभवजन्यसंस्कारसहितं मनः स्वसंप्रयुक्तात्मन्यविद्यां क्षोभयित्वा शुद्धाविद्याविवर्तगजादिपदार्थसमकालं तद्गोचरं ज्ञानमुत्पादयति । अतो लक्षणद्वयमत्र स्वप्ने ऽस्त्येव, मनःसम्प्रयोगसत्त्वान्मनउपहितात्मनो ऽधिष्ठानत्वात् । वस्तुतस्तु मनोध्यासं प्रतीन्द्रियसम्प्रयोगालाभादधिष्ठानसामान्यज्ञानमेव हेतुरिति तदेवानुगतं सम्प्रयोगपदेन विवक्षितमिति न कश्चिद्दोषः । अत्र निष्कृष्टाहङ्कारचैतन्यमात्रमिति विवरणवाक्येन स्वप्नाधिष्ठानचैतन्यं प्रति मनसो विशेषणत्वं निषिध्यते । अहं नीलमिति मानमिरासाय तूपाधित्वमपि निषिध्यते । तदवच्छिन्नचैतन्यस्थाविद्याविवर्तः स्वप्नप्रपञ्च इति टीकाया अन्तःकरणेनावच्छिन्नेत्यादि स्वव्याख्यानेन च विरोधात् । स्वप्नस्यानुपहितचैतन्यस्थत्वे स्वे शरीरे यथाकाममिति श्रुतिविरोधश्च । मनोवच्छिन्नात्मवेद्यत्वासम्भवश्च । संबन्धाभावात् । तस्मात्स्वप्ने घटः स्फुरतीति चैतन्यतादात्म्यानुभवाच्चैतन्यमेवाधिष्ठानं तस्योपाधिर्मनोरूपाहङ्कारः न विशेषणम् । अयं घट इत्यहङ्कारात्पृथक्त्वेन विच्छेदावभासादिति । इदमभिप्रेत्याह —

मायाविद्यैक्यमत्रोक्तं सत्ख्यातेश्च विमानता ।
स्वप्नाध्यासे लक्षणोक्तिर्बाधरूपोक्त्यनन्तरम् ॥ इति ।

किञ्च जागरणे ऽपि प्रत्यगात्मसाक्ष्यभिन्नचैतन्यमेवं सर्वप्रपञ्चाधिष्ठानं किमु वक्तव्यं स्वप्ने चैतन्यमधिष्ठानमिति । न हि जागरणे स्वतश्चैतन्यहीनानां विषयाणां चैतन्यात्मनि कल्पितत्वं विना मया ऽवगतोयं घटादिरिति मानं सम्भवति संबन्धाभावात् । न च घटपटादिचैतन्यानां भेदात्तदभेदे प्रत्यगात्मनो ऽपि भेदः स्यादिति वाच्यम् । नियमेन घटाद्युपाधिज्ञानपूर्वकं भासमानचैतन्यभेदस्यौपाधिकतया प्रातिभासिकत्वात्स्वतश्चैतन्यभेदे मानाभावादिति अद्वितीयं चैतन्यं जागरइव स्वप्ने ऽधिष्ठानमित्यनवद्यम् । परत्रावभास इति लक्षणम् । अत्रावभासो ज्ञानं अतो नाम्नि ब्रह्मदृष्टौ नातिव्याप्तिः । तस्या विधेयायाः कृतिसाध्यत्वेन क्रियात्वात् । न हि ज्ञानं कृतिसाध्यं कृति

प्रति साधनत्वादयत्नतो दुर्गन्धादि[illegible] । अत्राह शून्य-
वादी । परत्रेति पदं व्यर्थं केशोण्डुकभ्रमे ऽधिष्ठानाभावात्तस्मादर्थज्ञानं
भ्रम इत्येव लक्षणमिति । तत्तुच्छम् । शून्यज्ञानस्यापि भ्रमत्वापातात् ।
करसंमृदितनयनरश्मिषु केशस्य पिण्डाकारभानात् । तस्मात्परत्र प-
रावभास इति लक्षणं सर्वमतेष्वनुस्यूतं तत्र सिद्ध[illegible] सत्ये
वस्तुनि मिथ्यासम्भेदावभास इति पर्यवस्यतीति मत्वाह—

जागरे चिदभेदोक्तिः स्वप्नावस्थानसिद्धये ।
ज्ञानस्यायत्नसाध्यत्वं भ्रमे ऽधिष्ठानसाधनमिति ॥

यत्तु संविद्रजतयोर्बीजाङ्कुरवत्परस्पराधिष्ठानत्वान्न सत्याधि-
ष्ठानको भ्रम इति, तन्न । दृष्टान्तवैषम्यात् । न हि यस्माद्बीजाद्यो ऽङ्कु-
रस्तस्मादेवाङ्कुरात्तद्बीजं जायते । अन्योन्याश्रयापत्तेः । किन्तु पूर्व-
स्मादङ्कुरान्तरात् । ननु भवत्वस्माकमपि संविदो रजते ऽध्यासस्त-
स्यापि पूर्वसंविदि तस्या अपि पूर्वरजते इति परम्परेति चेन्न । इदं
रजतमिति ज्ञायमाने रजते पूर्वसंविदादीनामनन्वितत्वेनाधिष्ठान-
त्वायोगात् । बीजस्याप्यनन्वितत्वेनाङ्कुरं प्रति निमित्तमात्रत्वात् ।
अन्वितद्रव्यान्तरस्यैवोपादानत्वेनाधिष्ठानत्वात् संविद्रजतयोः नि-
मित्तनैमित्तिकभावस्याप्यदृष्टस्य कल्पनानौचित्यात् । तस्मादिदं र-
जतमिति ह्याकारावभासनादन्वितसत्याधिष्ठानको भ्रमः । अपि चै-
कस्मिन्नाकारे आकारान्तराभासज्ञानस्य बाधत्वात्साधिष्ठान एव
भ्रमः । अन्यथा बाधो ऽपि निरधिष्ठान एव स्यात् । अधिष्ठानप्रसक्त्य-
भावात् । नन्वाप्तवाक्यान्न सर्प इति निरधिष्ठानो बाधो ऽस्तीति चे-
न्न । सर्पाभावविशिष्टाधिष्ठानसामान्यस्य तत्राप्यवगतत्वात् । किं त-
र्हीति विशेषाकाङ्क्षादर्शनात् । किं बहुना सर्वदा सर्वत्राव्यभिचारिसा-
क्ष्यवधिकः सर्वस्य बाध इति न शून्याधिष्ठानको भ्रमः । यत्तु असदेव
ख्यायते इत्यसत्ख्यातिरिति, तन्न । असतो ऽपरोक्षत्वायोगात् । स-
त्त्वमपि बाधान्नास्तीत्युक्तम् । न चान्यत्र सत एवान्यत्र बाध इति नि-
यमाद्देशान्तरे सत्त्वमिति वाच्यम् । यदि प्रतिहर्ता विच्छिद्यात्सर्ववेदसं
दद्याद्युद्गाता तर्ह्यदक्षिणो यज्ञ इति ऋत्विग्विच्छेदनिमित्तप्रायश्चि-
त्तयोर्निमित्तयौगपद्ये विकल्पः । पूर्वापाये[1] तु पूर्वस्योत्तरेण बाध इति
सिद्धान्तः । न हि तत्र प्रतिहर्तृविच्छेदनिमित्तसर्वस्वदानकर्तव्यता
बाधिता ऽन्यत्रास्ति, इह भग्नघटस्यान्यत्रासत एव बाधदर्शनाच्च ।

(१) पूर्वापर्ये इति क्वचित्पाठः ।

तस्मात्सत्ये वस्तुनि परत्र सदसद्विलक्षणवस्तुसम्भेदावभासो भ्रम इति [illegible]। अत्र भ्रान्तिविषयमिथ्यात्वस्य लोकानुभवसिद्धत्वान्न युक्त्यपेक्षेत्याह भाष्यकारः। शुक्तिका हि रजतवदवभासते एकश्चन्द्रः स द्वितीयवदिति बाधसिद्धमिथ्यात्वस्यात्र वच्छब्देनानुवादः। तत्रात्मनि अहङ्काराध्यासे रज्जुसर्पोदाहरणं जीवेश्वरभेदाध्यासे द्वितीयोदाहरणमिति भावः। नन्वहङ्कारे परत्रावभास्यत्वमिति लक्षणमव्याप्तम्। दोषादित्रयजन्यत्वमपि तत्र नास्ति। तथा हि। विशिष्याज्ञातं सामान्यतो ज्ञातमधिष्ठानं शुक्त्यादिकं परत्रपदार्थः, नात्मा, निःसामान्यविशेषस्वप्रकाशत्वादतः परत्रेत्यंशाभावादव्याप्तिः। निरवद्यात्मनि दोषाभावात्स्वप्रकाशे वस्तुनि अविद्यारूपदोषस्याप्यभावात्। दोषघटितसामग्र्यपि नास्ति। स्वप्रकाशत्वं नाम स्वव्यवहारे प्रकाशान्तरानपेक्षत्वम् तच्च यावत्सत्त्वम्[१] भासमानात्मन्यस्त्येव। परप्रकाश्यत्वे प्रकाशाभावदशायामात्मनि सत्त्वसंशयापत्तेः। अत्रायं पुरुषः स्वयंज्योतिः आत्मैवास्य ज्योतिरिति श्रुतेश्च। अत्र हि ज्योतिरात्मेति सामानाधिकरण्यादात्मनो ज्ञानरूपत्वं भाति। स्वयमिति विशेषणेनात्मनो घटादिवच्चिद्वेद्यत्वं प्राप्तं वार्यते। ज्योतिरेव स्वयं न ज्योतिर्विषय इत्यर्थः। यत्तु ज्योतिःपदं ज्ञानकर्तृपरं स्वयमिति च स्वज्ञाने कर्त्रन्तरनिरासार्थमिति, तन्न। तमोविरोधिप्रकाशे रूढस्य ज्योतिःपदस्य ज्ञानकर्तरि लक्षणाया अन्याय्यत्वान्मुख्यार्थग्रहे ऽनुपपत्त्यभावात्। न चानित्यज्ञानस्य गुणस्य नित्यद्रव्याभेदानुपपत्तिरिति वाच्यम्। ज्ञानस्यानित्यत्वे गुणत्वे च मानाभावात्। किञ्चानादित्वात् ज्ञानस्य तत्कर्तृलक्षणा न युक्ता। ज्ञानं स्वाश्रये सति न जन्यते प्रकाशत्वात् प्रदीपरूपवदिति अनादित्वानुमानात्। प्रकाशत्वं तमोविरोधित्वं, स्वविषये संशयादिजननयोग्यत्वं तमस्त्वं, तच्च ज्ञानसाधारणं तमोनिवृत्तौ भास्वररूपमेव हेतुः, न प्रदीपद्रव्यमिति न तत्र व्यभिचारः। निर्गुणोत्पत्तेर्निरस्तत्वात्। अथवा स्वाश्रयसत्त्वस्यानेकक्षणव्याप्यत्वस्य विवक्षितत्वान्न दृष्टान्ते साध्यवैकल्यमिति बोध्यम्। परमतेन प्रत्यक्षगुणत्वं वा विशेषणमस्तु। अतो नादृष्टे व्यभिचारः। अत एव नाश्रयाप्रसिद्धिः। परमते तस्य प्रसिद्धत्वात्। परं प्रति बोधकानुमाने परकीयप्रसिद्धेरेवोपगमात्। अतः सत्याश्रये प्रकाशगुणस्य क्वाऽपि जन्माऽदर्शनादनाद्यात्म-

(१) यावत्सत्त्वमिति पाठान्तरम्।

नि [illegible]दे । ननु सति मनसि वृत्तिर्जायते इति चेत्सत्यम् । तस्या अप्रकाशत्वान्न व्यभिचारः । अथ वा ज्ञानं क्रियाजन्यसंस्कारेषु संस्कारत्ववज्ज्ञानप्रभारूपसाधारणं प्रकाशत्वमखण्डं व्यवहारबलादस्त्विति न कश्चिद्दोषः । ज्ञानं न जायते ज्ञानत्वादीश्वरज्ञानवत् व्यतिरेकेण घटादिवच्चेति वा प्रयोक्तव्यम् । तस्य ज्ञानस्योपाधिं विना भेदादर्शनादद्वितीयस्य नाशकाभावाज्जन्मादिप्रतीतेः वृत्तिविषयत्वादनन्तस्यात्मनः सकाशाद्भेदे मानाभावादुक्तश्रुत्यात्मत्वमित्यात्मनः स्वयंप्रकाशत्वमनवद्यम् । तदेतदभिप्रेत्याह—

उदाहरणभाष्यार्थः स्वयं ज्योतिष्ट्वमात्मन इति ।

तस्मादहङ्कारे लक्षणाव्याप्तिः कारणाभावश्चेति प्राप्ते ब्रूमः । निरंशेऽप्यात्मनि चित्पूर्णानन्दादिपदवाच्यरूपा अंशाः कल्पिताः सन्ति । तत्र चिदंशरूपाधिष्ठानसामान्यज्ञानं स्वप्रकाशत्वादस्ति पूर्णानन्दत्वादिविशेषावरणाज्ञानं चास्ति तदेवाधिष्ठानमावृत्त्याहङ्कारादिभ्रमं करोतीति दोष इत्युच्यते । अतोऽहङ्कारे परत्रात्मन्यवभास्यत्वम् अधिष्ठानसामान्यज्ञानदोषसंस्कारजन्यत्वं चास्ति । यत्तु स्वप्रकाशे कथमविद्येति । तन्न । अनादिस्वरूपाज्ञानस्यानुभवबलेनाविरोधित्वात् । अनुभवस्त्वहमज्ञ इत्यादिः पूर्वं दर्शितः । अनुमानमपि दर्शितम् । श्रुतिरपि जीवस्य सुषुप्तौ भ्रान्त्यादिप्रतिबन्धकाभावात्स्वप्रकाशत्वाद्ब्रह्मस्वरूपावभासप्राप्तौ प्रतिबन्धकमविद्यादोषं दर्शयति । "सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढा" इति । प्रत्यूढा आवृताः । हिशब्देन साक्ष्यनुभवसिद्धत्वमुच्यते । अनृतेनेति मिथ्यात्वोक्त्या ज्ञानाभावत्वं पराभिमतं वार्यते । अत एवाज्ञानस्य न प्रामाणिकत्वम् । अनुभवसिद्धाज्ञाने प्रमाणैरभावव्यावृत्तिमात्रबोधनात् । यद्यपि भावत्वबोधकप्रमाणानामज्ञानं विषयस्तथाप्यज्ञातभावत्वांश एव तेषां प्रामाण्यं यद्यप्यज्ञानस्य धर्मवद्व्यावहारिकप्रमाणगम्यत्वेऽपि न क्षतिर्मिथ्यात्वेनाधिष्ठानज्ञाननिवर्त्यत्वसम्भवात् । तथाप्यज्ञाने साक्ष्येव सत्तासंशयविरोधिनिश्चयत्वाद्धर्मिग्राहकं प्रमाणमिति वस्तुगतिरुक्ता । नीहारेण प्रावृताः, "अज्ञानेनावृतं ज्ञान"मिति श्रुतिस्मृती अपि भावरूपाविद्यादोषे प्रमाणम् । ज्ञानान्मुक्तिश्रुत्यन्यथानुपपत्तिरपि ज्ञाननिवर्त्याविद्यायां मानमिति । एवं स्वरूपज्ञानस्याविद्यायाः साधकत्वेनाविरोधात्प्रमाणबलात्स्वप्रकाशात्मनि ब्रह्मस्वरूपविषयमज्ञानमस्तीति सिद्धम् । न

नावृणोत्यज्ञानमिति वाच्यम् । अज्ञानस्यावरकत्वेन तमोवदावृत्तविषयनिष्ठत्वसम्भवात् । न च काचादौ व्यभिचारः । करणानाश्रयत्वे सतीति विशेषणात् । ननु तर्हि आवृत्ताखण्डब्रह्मनिष्ठाज्ञानाज्जीवस्याज्ञत्वभ्रान्तत्ववदीश्वरस्या ऽपि तत्प्रसङ्ग इति चेन्न असर्वज्ञत्वात् । यद्यपि चित्त्वाकारेण जीव इवेश्वरे ऽप्यज्ञानमस्ति, तथा ऽपि नित्यसर्वज्ञेश्वरं बिम्बरूपं ब्रह्म खण्डस्वरूपं नावृणोत्यज्ञानमिति नाज्ञत्वादिप्राप्तिः । स्वप्रतिबिम्बरूपं जीवं प्रति त्वखण्डस्वरूपमावृणोतीति तस्याज्ञत्वादिप्राप्तिः उपाधेः प्रतिबिम्बपक्षपातित्वात् । एतेनाखण्डचिदेकरसे ब्रह्मणि कुतो जीवेश्वरभेदो येनाज्ञत्वसर्वज्ञत्वादिव्यवस्था स्यादिति निरस्तम् । मूलाविद्यात एवानादेर्भेदस्याङ्गीकारात् । तन्नाशे नाशादनादेरपि भेदस्याविद्यामूलत्वं युक्तम् । यत्त्वभिन्ने वस्तुनि भेदसम्पादको ऽतिरेको नाम कश्चिद्धर्म इति, तन्न । भेदातिरिक्ते तस्मिन्मानाभावात् । यदप्यन्तःकरणं भेदकमिति, तदपि न । तस्य सत्यत्वे मिथ्याभेदप्रयोजकत्वानुपपत्तेः । जीवब्रह्मभेदस्य मिथ्यात्वमद्वैतश्रुत्या दृश्यत्वाद्भेदत्वाच्चन्द्रभेदवदित्यनुमानेन च सिद्धम् । सुषुप्तावन्तःकरणस्य स्वमपीतो भवतीत्यादिना नाशावगमात्प्रत्यहं तद्भेदाज्जीवभेदापत्तिः सूक्ष्मतायाः अविद्योपादानं विना दुर्निरूपत्वादुपादाने लीनकार्यस्यैव शक्तिरूपस्य सूक्ष्मशब्दार्थत्वात् । नन्वस्त्वविद्योपादानकमन्तःकरणं कल्पितमेवा मोक्षात् स्थूलसूक्ष्मभावनानुस्यूतं भेदोपाधिरिति चेन्न । तस्य प्रमातृजीवभेदोपाधित्वे ऽप्यनादिजीवब्रह्मभेदोपाधित्वायोगात् । तस्मात्तदुपादानादनाद्यविद्याया एवावरकत्वेन क्लृप्तायास्तदुपाधित्वमिति सिद्धम् । ननु किमाश्रयेयमविद्या भेदभ्रमहेतुरिति चेत् ? लोके मुखमात्रसम्बन्धिनो दर्पणस्य बिम्बप्रतिबिम्बभेदभ्रमहेतुत्ववच्चिन्मात्राश्रयाविद्यायास्तद्धेतुत्वमिति ब्रूमः । नन्वसङ्गस्वप्रकाशचिन्मात्रस्याऽविद्याश्रयत्वानुपपत्तेरहमज्ञ इत्यनुभवाच्चान्तःकरणविशिष्टाश्रयमज्ञानमिति चेदहो पाण्डित्यमायुष्मतः ! विशिष्टस्य विशेषणमात्रत्वे विशेष्यचिदंशे ऽनुपपत्तितादवस्थ्यात् । जडस्य कार्यस्य मनसः कारणाविद्याश्रयत्वानुपपत्तेश्च । अतो अनुपपन्नद्वयाश्रयत्वाद्वरमेकचिदाश्रयत्वं चितिकल्पिताया अविद्याया अनुपपत्तेरलङ्कारत्वाद्विशिष्टस्यान्यत्वे तन्निष्ठाऽविद्यया चिदात्मनि बन्धमुक्ती न स्याताम् । अतो यस्य मुक्तिस्तस्य बन्धस्तस्याविद्येति नियमाच्चिन्मात्राश्रयाविद्या । अहमज्ञ इति धीस्तु अहङ्कारा-

ज्ञानयोरेकचित्सम्बन्धादृष्ट्या । अयो दहतीत्ययासे दग्धृत्ववीवत् । एतेन केवलान्तःकरणमेवाविद्याश्रय इति कस्य चिज्जल्पनमपास्तम् । अत्र संग्रहश्लोकः—

अज्ञानं स्वप्रकाशेऽस्ति स्वावृते तन्निवर्तते ।
तन्मूलो जीवभेदः स्यान्नातिरेकान्न चेतस इति ॥

ननु भवतु स्वप्रकाशचिन्मात्रस्याविद्याश्रयत्वम् । एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति श्रुतेराश्रयान्तराभावाच्च सुषुप्तौ चिन्मात्राश्रयत्वानुभवाच्च । तथाऽपि तस्य नाविद्याविषयत्वं भासमानस्यावृतत्वाख्याज्ञानविषयत्वविरोधादिति चेन्न । घटं न जानामीत्यज्ञानविशेषणस्य घटस्य भासमानस्यैवाज्ञानविषयत्वानुभवात् । सविषयकवस्तुज्ञाने विषयस्य भासमानत्वनियमात् अतोऽनुभवबलात्स्वरूपचैतन्येन भासमानत्वमविद्याविषयत्वाविरोधीति कल्पनीयम् । नन्वेवमप्यनावृतसाक्ष्यभिन्ने ब्रह्मणि कथमावरणमिति चेन्न । पूर्णानन्दाद्यंशे भेदेनावरणस्योक्तत्वात् । किं च भासमानेऽप्यावृतत्वं युक्तं, स्वतोऽपरोक्षसाक्ष्यात्मनि देहाद्भेदे भासमानेऽप्यावृतत्वदर्शनात् । तथा हि अपरोक्षसंविद्रूपसाक्षितादात्म्येनाऽऽत्मनोऽपरोक्षत्वं देहाद्भेदः साक्षिणि तद्रूपस्तद्धर्मो वा धर्मिप्रतियोगिनोर्भासमानयोः साक्षितादात्म्येनात्मनोऽपरोक्षतया भासत एव । तथाप्यावृतो मनुष्योऽहमित्यभेदभ्रमात् । अत्र कश्चिदाह । भेदो भासतेऽनावृतश्च अभेदज्ञानं तु गौणं मुख्यत्वे प्रमात्वापत्तेः । न चाथायमशरीर इत्यादिश्रुत्या देहः स्वातिरिक्तद्रष्टृकः दृश्यत्वादित्यनुमानेन च देहात्मत्वे शास्त्रानर्थक्यकृतहान्यादितर्कैश्च बाधान्मुख्यत्वेऽपि भ्रान्तित्वमिति वाच्यम् । अभेदप्रत्यक्षविरोधे श्रुत्यादीनामबोधकत्वादिति तन्न । भेदस्यानावृतत्वे देहातिरिक्तात्मानि वादिनां विवादाभावप्रसङ्गात् । न हि माणवकाग्न्योर्भेदे वा कश्चिद्विवदति । तस्माद्भेदे विवादाद्देहात्मज्ञानं मुख्यमेव । उक्तबाधेन भ्रान्तित्वनिश्चयात् न प्रमात्वापत्तिः । केवलश्रुत्यादीनां प्रत्यक्षाद्दुर्बलत्वेऽपि तर्कसहकृतानां प्रबलत्वात् । नाऽयं सर्प इति वाक्यादाप्तोक्तत्वात्तर्कसहकृतात्प्रत्यक्षबाधदर्शनात् । ननु तर्हि श्रुतितर्कज्ञानवतोऽहंप्रत्ययेन भिन्नात्मभानादभेदज्ञानं गौणमिति चेत्, किं तज्ज्ञानेनाऽहंप्रत्ययस्य भेदविषयत्वं क्रियते उत भेदांशे सत्त्वानिश्चयत्वान्नाद्यः । ज्ञानस्याप्रत्यासत्तित्वेन ज्ञानान्तरोपनीतभे-

दस्य प्रत्यक्षाहंप्रत्ययाविषयत्वात् । न हि घटज्ञानेन (१) पटविषयकं ज्ञानं भवति । शब्दयुक्त्यनुसन्धानात्प्रागण्यहंप्रत्ययस्य साक्ष्यात्मनि भेदगोचरत्वाच्च तस्य भेदांशे सत्तानिश्चयत्वाभावाद्भासमाने ऽपि भेदे आवृतत्वमुक्तम् । द्वितीयस्त्विष्ट एव । न च श्रुतियुक्तिभ्यामहंप्रत्यये भेदे सत्तानिश्चये सति अभेदज्ञानं गौणमिति वाच्यम् । परोक्षनिश्चयस्यापरोक्षभ्रमाविरोधित्वात् । अत एव भगवत्पादैर्विदुषां पश्वादिभिरविशेष उक्तः । अपरोक्षनिश्चये तु सर्वस्य बाधात्कस्य गौणत्वमित्यलम् । तस्माद्भासमानस्याप्यात्मनो ऽविद्याविषयत्वं युक्तमिति मत्वाह—

भासमाने ऽप्यावृतत्वं दृष्टं देहात्मभेदगमिति ।

एवं स्वयंप्रकाशात्मनि तदाश्रिततद्विषयाविद्यादोषसाधनेनाऽहङ्काराध्यासे दोषादिकारणत्रयजन्यत्वं सिद्धम् । अहङ्कारभ्रमस्य साक्षिरूपस्य विषयविशिष्टत्वेन जन्यत्वं मन्तव्यम् । परत्रात्मनि अवभास्यत्वं च लक्षणं सिद्धम् । नन्वधिष्ठानारोप्ययोरेकज्ञानविषयत्वमध्यासव्यापकं तदभावादविषयात्मन्यहङ्काराध्यासो न सम्भवतीति चेन्न । एकज्ञाने भासमानत्वस्यैव तद्व्यापकत्वात् । चैतन्यस्याऽहमिति ज्ञानरूपस्यान्तःकरणस्थत्वेन स्पष्टं भासमानत्वाद्दर्पणस्थत्वेन सौरालोकवत् । तदाह भाष्यकारः । अस्मत्प्रत्ययविषत्वादिति । ननु तथा ऽप्यहमिति ज्ञानं नाध्यासः । अधिष्ठानारोप्यांशद्वयानुपलम्भादिति चेन्न । अहमुपलभे इति अंशद्वयानुभवस्य सर्वसंमतत्वादयो दहतीति दग्धृतादात्म्येनायस इवा ऽत्राप्युपलब्धृसाक्षितादात्म्येनाहङ्कारस्य भानात् । अहङ्कारस्य दृश्यत्वेन घटवद् द्रष्टृत्वायोगात् । कर्मत्वकर्तृत्वयोरेकस्यां क्रियायामेकस्यायोगेन स्वद्रष्टृत्वायोगाच्च । द्रष्टृहङ्कारौ भिन्नौ तादात्म्येनाऽहमिति प्रतिभासेते । दृग्रूपस्याऽपि विषयविशिष्टचैतन्यवत्त्वेन द्रष्टृत्वं मन्तव्यम् । एवं दुःखित्वपरमप्रेमास्पदत्वाभ्यां जडात्मांशद्वयमूह्यं तयोरेकत्र सम्भवादित्याह :—

अंशद्वयमहङ्कारे सर्वानुभवसाक्षिकमिति ।

अत्र प्राभाकराः प्रत्यवतिष्ठन्ते । घटमहं जानामीति विषयसंविदाश्रयत्वेन केवल आत्मा भासते । नात्रेदमंशो ऽस्ति । यः कल्पितः स्यात् । तथा चोपलब्धैवाहङ्कारो न तद्भिन्नः । अयोव्यतिरेकेण वन्हि-

(१) घटज्ञानपटज्ञानेनेति क्वचित्पाठः ।

वदहङ्कारातिरेकेणात्मनः कदाप्यदर्शनात्तत्र घटस्य कर्मत्वेन संविदः स्वप्रकाशत्वेनात्मनः तदाश्रयत्वेनापरोक्षत्वान्न कर्मकर्तृत्वविरोधः । अत्र सांख्याः —

बुद्धिस्थचित्प्रतिबिम्बस्तादृशबिम्बाधीनः प्रतिबिम्बत्वात् मुखप्रतिबिम्बवदित्यात्मनो ऽनुमेयत्वं वदन्ति । ज्ञाततालिङ्गेन ज्ञानमनुमेयमिति भाट्टाः । सौत्रान्तिकास्तु संवेदनेषु प्रत्यक्षा अर्थप्रतिबिम्बास्तादृशबिम्बाधीना इति बाह्यार्थानामनुमेयत्वमाहुः । तदयुक्तम् । घटमहं साक्षात्करोमीति प्रमातृप्रमाप्रमेयाणां प्रत्यक्षत्वानुभवविरोधात् । किञ्च बाह्यार्थानामनुमितौ साक्षाद्विषयत्वे प्रत्यक्षे ऽपि तेषामेव विषयता किं न स्यादनुमितेरपि प्रतिबिम्बग्राहित्वे बिम्बार्थसिद्धिर्मानाभावात् । तस्मात्त्रयो ऽप्यपरोक्षाः । अत्राह विज्ञानवादी । यदपरोक्षं तद्विज्ञानाभिन्नं यथा विज्ञानं अपरोक्षश्च घटादिरिति । तथा च विज्ञानाभेद एवार्थस्यापरोक्षत्वं न तु विज्ञानकर्मत्वमिति तन्न । घटं जानामीति भेदानुभवविरोधात्तस्मादिन्द्रियजापरोक्षज्ञानकर्मत्वमेवार्थस्यापरोक्षत्वम् । यदप्याहुर्भाट्टास्तार्किकाश्चात्मा मानसप्रत्यक्षविषय इति, तदपि न । कर्तृकर्मविरोधात् । विषयसंविदाश्रयत्वेनैव तस्य प्रत्यक्षत्वसम्भवेन तद्विषयकज्ञानकल्पनागौरवात् ज्ञानविषयत्वे चानात्मत्वप्रसङ्गात् । अतो ज्ञानाश्रयत्वमेवात्मनो ऽपरोक्षत्वम् । यत्तु ज्ञानमनुव्यवसायगम्यमिति तार्किकास्तन्न । अनवस्थापत्तेः । निश्चितसत्ताकस्यैव ज्ञानस्यार्थसत्तानिश्चयत्वेनानुव्यवसायग्रहस्यावश्यकत्वात् । किञ्च । व्यवसायस्यानन्तरं ज्ञानत्वविशेषणज्ञानेन नाशान्नानुव्यवसायः जन्यप्रत्यक्षे विषयस्य हेतुत्वात् । न च विनश्यदवस्थो ऽनुव्यवसायो ऽस्तीति वाच्यम् । वर्तमानस्यैव प्रत्यक्षविषयत्वात् । अन्यथा प्रत्यक्षापि निष्कम्पा प्रवृत्तिर्न स्यात् । जानामीति वर्तमानतानुभवाच्च । किञ्च येनात्ममनःसंयोगेन व्यवसायः, तेनैवानुव्यवसायो जायते, संयोगान्तरेण वा? नाद्यः । अनुव्यवसायमालाप्रसङ्गात् । संयोगभेदं विना ज्ञानभेदायोगाच्च । समूहालम्बने घटपटादिविषयभेदेन सामग्रीभेदे ऽप्यसमवायिकारणसंयोगैक्येन ज्ञानैक्यदर्शनात् । न द्वितीयः । क्रियाविभागादिन्यायेन संयोगान्तरोत्पत्तौ व्यवसायस्य चिरातीतत्वात्प्रत्यक्षत्वायोगात् । न च ज्ञानं बहुक्षणावस्थायि अपसिद्धान्तात् । आत्मनि युगपज्ज्ञानद्वयायोगाच्च । तस्मादुत्पन्नमात्रे ज्ञाने संशयादर्शनात्स्वप्रकाशत्वमेव ज्ञानस्यापरोक्षत्वम् ।

यदाहुर्भाट्टा ज्ञातताख्यो ऽनुभवो विषयनिष्ठश्चाक्षुषप्रत्यक्षः संयुक्ततादात्म्यादिति । तन्न । अयोग्यानुभवग्राहित्वे चक्षुषस्तन्निष्ठरसादिग्राहकत्वप्रसङ्गात् । घटस्याऽनुभवाश्रयत्वे चेतनत्वापत्तेश्च । तस्मा त्मसमवेतस्वप्रकाशज्ञानमेव प्रमाणफलं न ज्ञातता । प्रमाणं स्वात्ममनइन्द्रियार्थानां सम्बन्धः । एतेन ज्ञानमेवार्थाकारवत्त्वेन प्रमाणम् । अर्थाभेदेन प्रमेयं ज्ञानत्वेन फलमिति बौद्धोक्तं निरस्तम् । स्वस्य स्वहेतुत्वायोगात् । नन्वात्मा संविद्विषयः संविदन्यत्वाद्घटवत् । न च कर्मकर्तृत्वविरोधः । द्रव्यबोधरूपत्वादात्मनो द्रव्यांशेन कर्मत्वं बोधांशेन कर्तृत्वमित्यविरोधादिति चेन्न । ज्ञानकर्मत्वेन द्रव्यांशस्य घटवदनात्मत्वाज्ज्ञानकर्त्रंशस्यैवात्मत्वात् । तस्य च निरंशस्य ज्ञानक्रियां प्रति गुणभूतस्य कर्तुस्तां प्रति प्राधान्यरूपकर्मत्वाविरोधतादवस्थ्यात् । तस्मात्संविदाश्रयत्वेनाऽहङ्कारस्य भानादात्मत्वमिति प्राप्तमिमं प्राभाकरकृतं पूर्वपक्षं संक्षिपति—

मातृमेयप्रमाणत्वं परोक्षत्वं निराकृतम् ।
अनुव्यवसितिर्मानमेयाभेदश्च दूषितः॥

प्राभाकर[illegible]नैव द्रव्यबोधात्मदूषणमिति । एवं प्राप्ते ब्रूमः । स्वप्रकाशानुभूतिरेवात्मा न जडाहङ्कार इति । तथा हि । किं प्रकाशस्यात्मनो जडानुभवाश्रयत्वेन सिद्धिरुत स्वप्रकाशानुभवाश्रयत्वेन, किं वा जडस्यात्मनः स्वप्रकाशानुभवाश्रयत्वेन सिद्धिरिति? नाद्यः । प्रमाणफलस्यानुभवस्य जडत्वे ततः काप्यज्ञानावरणनिवृत्त्ययोगाज्जगदान्ध्यप्रसङ्गात् । तस्मादनुभवः स्वनिवर्त्यसजातीयेनाऽनावृतः साक्षादावरणनिवर्तकत्वात्प्रदीपवत् । अनुभवे चाज्ञानशून्यत्वमनावृतत्वं पर्यवस्यति तच्च नानुव्यवसायादित्युक्तम् । अतः स्वत एवानुभवस्यानावृतत्वं वाच्यमिति स्वप्रकाशत्वसिद्धिः । न हि स्वप्रकाश आत्मा जडानुभवप्रसादात्सिध्यतीति युक्तं वक्तुम् । न द्वितीयः । उभयोः स्वप्रकाशत्वे मानाभावाद्गौरवान्मिथो वार्तानभिज्ञतया ऽऽश्रयाश्रयिभावासिद्धेश्च । न तृतीयः । तथा हि । अहङ्कारधर्मरूपो यो जन्यानुभवः स न स्वप्रकाशः कार्यत्वात् घटं जानामीति दृश्यत्वात् घटवत् स्वस्य स्वविषयत्वायोगादनुव्यवसायनिरासाच्च । जन्यानुभवविषयकं ज्ञानमहङ्कारधर्मातिरिक्तमित्यकामेनाप्यङ्गीकार्यम् । किञ्चाऽहङ्कारो ज्ञानविषयः ज्ञानान्यत्वात् घटवत् । विपक्षे व्यवहारानुपपत्तिः ज्ञानान्यस्य व्यवहारविषयत्वे ज्ञानविषयत्वस्य प्रयोजकत्वात् ।

न चानात्मत्वापत्तिर्दोष इष्टत्वात् । तथाऽहङ्कारविषयकं ज्ञानं नाऽहङ्कारकर्तृकं कर्तृकर्मविरोधात् । सत्याश्रये प्रकाशगुणस्य काप्युत्पत्तेरदर्शनाच्च । तथा चाहङ्कारतद्धर्मसाक्षिभूतं ज्ञानं लाघवादेकं तदेव स्वप्रकाशम् । स्वप्रकाशत्व यैकव्यक्तिवृत्तित्वे लाघवात् । तच्चानादि नित्यम् । जन्मविनाशप्रतीतेश्चक्षुरादिजन्यवृत्तिविषयत्वात् । तच्चाद्वितीयम् । उपाधिपरामर्शं विना भेदाप्रतीतेः । तदेव चात्मा तद्भिन्नस्यानात्मत्वात् । भेदे मानाभावाच्च । आत्मा स्वप्रकाशानुभूत्याभिन्नः अनुभूतिकर्मत्वाभावे सत्यपरोक्षत्वादनुभूतिवत् । ततश्च स्वप्रकाश आत्मा तद्दृश्यो जडो नात्माहङ्कार इत्यहमित्यध्यासेशद्वयं सिद्धम् । ननु सिद्धान्ते स्वप्रकाशचिदात्मैवाऽहङ्कार इत्यङ्गीक्रियतामिति चेन्न । दुःखादिपरिणामिनश्चिदात्मत्वायोगात् । सुषुप्तौ चिन्मात्रात्मनि भासमाने ऽप्यहमित्यभासमानत्वाच्च । देहादिवदनात्मैवाहङ्कार इत्यभिप्रेत्याऽऽह—

अनुभूतेः स्वयं भात्वमैक्यमात्मत्वमेव च ।
अहङ्कारस्य नात्मत्वं सुषुप्त्यादावभासनात् ॥ इति ।

ननु चिदात्मन एवाहमित्युल्लेखे विषयानुभवो हेतुस्तदभावात् सुषुप्तावहमित्युल्लेखाभावो युक्त इति चेन्न । सापेक्षनिरपेक्षयोर्भेदात् । चिदात्मा विषयज्ञानानपेक्षः सुषुप्तौ भाति तन्मात्रगोचरत्वे ऽहमुल्लेखस्य तदपेक्षा न युक्ता । अतः सापेक्षो ऽहमुल्लेखविषयो ऽहङ्कारो विषयनिरूप्यश्चिदात्मनो भिद्यते । नन्वहमुल्लेखो ऽपि चिदात्मभानवद्विषयभानापेक्ष एव अतो ऽनपेक्षत्वात्तयोरैक्यमिति चेन्न । सुषुप्तावहमित्युल्लेखापत्तेः । न चेष्टापत्तिः । अननुभवात् । सुषुप्तिभङ्गप्रसङ्गाच्च । ह्यस्तनाहङ्कार इव सुषुप्तावहमित्यभिमन्यमान एवासमित्युत्थितस्य स्मृत्यापत्तेश्च । स्वप्रकाशाहङ्काराभिमानस्याप्यनुभवात् । ननु सुषुप्तावहङ्कारे न स्मृतिः अनुभवनाशाभावादिति चेत्तर्हि ह्यस्तने ऽपि सा न स्यात् । ननु सिद्धान्ते कथमहङ्कारस्मृतिरिति चेदुच्यते । अहङ्कारानुभवो वृत्त्यवच्छिन्नचैतन्यरूपो वृत्तिनाशान्नश्यति नाशेन संस्कारात्स्मृतिः । न च वृत्तिकर्तुस्तत्कर्मत्वे विरोध इति वाच्यम् । कर्तरि वृत्तिकृताऽतिशयाभावेन कर्मत्वाभावात् । अहङ्कारे चिदंशो जडांशान्तःकरणकर्तृकवृत्तिविषयः, जडांशो वृत्त्यवच्छिन्नचैतन्यविषय इत्यविरोधात् । शालग्रामादिज्ञानधाराकालीनाऽहङ्कारस्य स्मृतिर्धारावृत्तिनाशादेव भवति । तद्वृत्त्यवच्छिन्नचैतन्यस्य वृत्तितद्विषयतदाश्रयाहङ्काराणां सत्तानिश्चयानुभवत्वादिति मन्तव्यम् । यत्तूत्थितस्य सुख-

महमस्वाप्समिति परामर्शसद्भावात्सुषुप्तौ सुखाश्रयत्वेनाहङ्कारानुभवो ऽस्तीति। तत्राह टीकाकारः। नाऽयं परामर्शः सुखगोचरः स्मृतिरूपः सुषुप्तौ विषयानुभवजन्यसुखानुभवाऽसम्भवान्नित्यसुखे मानाभावात्। किन्तूत्थितस्य दुःखाभावगोचरेयमनुमितिरिति। इदश्चाहङ्कारात्मवादिनं प्रति तन्मतमाश्रित्य समाधानम्। सिद्धान्ते तु साक्षिस्वरूपसुखसद्भावात्सुषुप्तौ विक्षेपाभावादज्ञानसुषुप्तिसुखसाक्षिगोचराविद्यावृत्तिप्रतिबिम्बितचैतन्यात्मकसुखानुभवो जायते। तन्नाशे सति संस्कारो ऽप्यविद्यावच्छिन्ने साक्षिण्यनुभवितरि जायते। स एव साक्षी स्मरति सुखमहमस्वाप्समिति। स्मर्तृसाक्षितादात्म्यादहङ्कारे स्मर्तृत्वावभासः। अहङ्कारस्तु स्वमपीतो भवतीति श्रुत्या सुषुप्तावसत्त्वादननुभवान्नोत्थितेन न स्मर्यते। किन्त्विदानीमभिव्यक्तो ऽनुभूयते। अन्ये तु साक्षिस्थसंस्कारेणाऽहङ्कारः स्मरति तस्यानुभवितृसाक्षितादात्म्यान्नानुभवस्मृत्योर्वैयधिकरण्यमित्याहुः। अस्मिन्मते सौषुप्तसुखस्मृतिर्मनोवृत्तिरेव। पूर्वस्मिन्मते तु अविद्यावृत्तिरिति भेदः। तदेतत्संगृह्णाति—

सुखसुप्तिपरामर्शो दुःखाभावैकगोचरः।
इति टीकाकृदुक्तिर्या सा न्यायमतसंश्रया॥
स्वरूपसुखसद्भावात्सिद्धान्ते सुखगोचरः। इति।

एवं स्मृतिमूलं सुषुप्तौ सुखानुभवो ऽस्तीति सिद्धम्। दुःखाभावस्तु सुषुप्तौ सुखलिङ्गेनोत्थितेना ऽनुमीयते। विशेषज्ञानाभावो ऽपि भावरूपाज्ञानेनाऽनुमीयते। तस्मात्सुषुप्तावहङ्कारस्य भाने साधकाभावात्सुषुप्तिभङ्गादिबाधकाच्चात्मनि भासमाने ऽप्यभासमानत्वाद्विनाशित्वात्परिणामित्वाद्दृश्यत्वाच्चानात्मत्वम्। श्रुतावथातो ऽहङ्कारादेश इत्यहङ्कारमुपदिश्याथात आत्मादेश इत्यहङ्काराद्भिन्नस्यात्मोपदेशान्महाभूतान्यहङ्कार इति स्मृतावहङ्कारं क्षेत्रेऽन्तर्भाव्य तत्साक्ष्यात्मनः क्षेत्रज्ञस्य दर्शितत्वाच्चाहङ्कारस्यानात्मत्वमिति सिद्धम्। तच्चाहङ्कारस्याविद्या माया प्रकृतिरग्रहणमव्यक्तम् तमःकारणं लयः शक्तिर्महासुषुप्तिर्निद्रा ऽक्षरमाकाशमिति नामकमज्ञानमुपादानम्। ईश्वरः कर्त्ता भ्रान्तिकर्म संस्कारा निमित्तं विज्ञानक्रियाशक्तिद्वयं स्वरूपं कर्तृत्वादिकं कार्यं साक्षी प्रमाणमिति मन्तव्यम्। तस्या [illegible]न्तःकरणस्य सांशत्वात्सुषुप्तौ प्राणव्यापारानुकूलः क्रियाशक्त्यंशस्तिष्ठति। ज्ञानशक्त्यंशो लीयते। सांख्यास्तु विचित्रपरिणामस्वभावस्य चेतनाऽनधिष्ठितस्य प्रधानस्य परिणामो बुद्धिरहङ्कारः कर्तृत्वादिमानित्याहु-

स्तथ । कर्तृत्वादीनामात्मसम्बन्धाभावेन परोक्षत्वापत्तेर्बन्धमोक्षवैयधिकरण्याच्च । न ह्यसङ्गात्मनः परनिष्ठकर्तृत्वादिसंबन्धेन सत्यः संबन्धो युज्यते । अतः स्यात्यन्तरनिरासादाविद्यक एव संबन्धो वाच्य इत्यविद्यया ऽऽत्मन्यध्यस्ता बुद्धिरहङ्कारः । नैयायिकास्तु बुद्धिनिमित्तकज्ञानाख्यो गुण आत्मधर्मः मनस्तत्र कारणं तद्व्यतिरेकेण कर्तृत्वादिमान् बुद्ध्याख्यो ऽहङ्कारो ऽप्रमाणिक इत्याहुः । अत्रोच्यते । कामादीनामसङ्गस्वप्रकाशचिदात्मधर्मत्वासम्भवात् कामः संकल्प इत्यादिश्रुत्या ऽहमिच्छामि करोमीति दृश्यमानधर्मवत्त्वेन मनो द्रव्यमेव बुद्धिरहङ्कार इत्युच्यते । बुद्धेर्गुणेनाऽऽत्मा स्वतो महानप्याराग्रमात्रो दृष्ट इति श्रुत्या परिमाणगुणवत्त्वाद् बुद्धिर्द्रव्यमेव । बुद्धिर्यदा नेङ्गते, तदा परमात्मानमश्नुते इति श्रुत्या चेष्टावत्त्वाच्च । सा च बुद्धिर्मन एव कामः संकल्प इत्यादिश्रुतौ धीर्मन इत्यभेदनिर्देशात् स एवाहङ्कारः कामादिधर्मित्वादित्यलम् । तदेतत्संगृह्णाति —

अहङ्कारस्य हेतुश्च स्वरूपं कार्यमेव वा ।
प्रदर्शितं तथा तस्य द्रव्यत्वं बुद्धिरूपतः ॥ इति ।

तथा च यथा स्फटिके लौहित्यं कुसुमसान्निध्यदोषात्कल्पितमेवं प्रत्यगात्मनि कर्तृत्वादिर्बन्धो ऽहङ्कारसान्निध्यात्कल्पित इत्यसंसारिब्रह्मैक्यशास्त्रार्थे न कश्चिद्विरोधः । अत्रायं प्रयोगः आत्मनि कर्तृत्वादिकं मिथ्या सोपाधिकत्वात्स्फटिके लौहित्यवत् । इत्याह—

अत आत्मनि बन्धः स्याल्लौहित्यं स्फटिके यथा इति ।

ननु चक्षुःसंयुक्तसमवायेन कुसुमरूपस्य गृह्यमाणस्फटिकेनाविवेकमात्रं न मिथ्यारूपमिति दृष्टान्तासिद्धिरिति चेन्न । कुसुमस्य लौहित्यं स्फटिके नास्तीति विवेके ऽपि लोहितः स्फटिक इति प्रतीतेः, चक्षुःसंयुक्तस्फटिकसन्निहिते कुसुमे घटादिव्यवहिते रूपग्रहणासम्भवाच्च । एतेन गृह्यमाणारोप इत्यन्यथाख्यातिर्निरस्ता । उक्तव्यतिरेकनिश्चयस्य ग्राह्यज्ञानमात्रप्रतिबन्धकत्वात् । यत्तु रूपप्रतिबिम्बभ्रमो ऽयमिति, तन्न । द्रव्यं विना रूपमात्रप्रतिबिम्बायोगात् । सद्द्रव्यरूपप्रतिबिम्बे स्फटिके लोहितं कुसुममिति धीः स्यात् । यदपि कुसुमप्रभासंयोगात्तथा भ्रम इति, तदपि न । पद्मरागादेरिव कुसुमस्य प्रभायां मानाभावात् । तथा ऽपि रूपितादात्म्यस्य रक्तः स्फटिक इत्यपरोक्षज्ञानविषयस्य मिथ्यात्वावश्यम्भावादसतो ऽपरोक्षत्वायोगात् । तस्माद्रक्तद्रव्यसन्निधिदोषात् मिथ्यारूपं जायते इति

दृष्टान्तसिद्धेः। नन्वेवं सति स्फटिके कुसुमे च रूपद्वयवदात्मनि अहङ्कारे च कर्तृत्वद्वयं स्यादिति चेन्न । धर्मिणोरेकत्वाध्यासेन द्वयोरैक्ये उभयोरेकत्वभानवत्कर्तृत्वयोरेकत्वभानाऽविरोधात् । यद्वा कर्तृत्वादिधर्मको ऽहङ्कार आत्मनि स्वरूपेण तादात्म्येन च कल्पित इति एकमेव कर्तृत्वादिकम्। न च दृष्टान्तासङ्गतिः। उपाधिसान्निध्यान्मिथ्याधर्मभानमित्यंशे तत्सङ्गतेः । अत एव वृत्तिं विनैव साक्षितादात्म्यादहङ्कारस्य दृश्यत्वलक्षणात् इदमर्थस्या ऽपि न व्यवहारत इदमर्थत्वम्। शरीरादेस्तु वृत्तिव्यवधानसिद्धिकत्वाद्व्यवहारतो ऽपीदमर्थत्वमिति विशेषः। एवं बन्धस्यौपाधिकत्वेन मिथ्यात्वादसंसारिब्रह्माभेदाविरोधे सति युज्यते । जीवो ब्रह्मैव। तत्प्रतिबिम्बत्वाद्दर्पणजलादिषु मुखसूर्यादिप्रतिबिम्बवदित्याह--

जीवब्रह्मविभागस्तु लोके बिम्बानुबिम्बवत् इति ।

न च हेत्वसिद्धिः । यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैको ऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजो ऽयमात्मा। स एष इह प्रविष्ट इत्यादिश्रुतेः। यथा ऽयं विवस्वानेको ऽपि भिन्ना अपो ऽनुगच्छन्ननुप्रविष्टः सन् बहुधा क्रियते एवमात्मा चिन्मात्र एको ऽप्युपाधिना जलवत्स्वच्छया मायया भेदरूपो भिन्नो जीवः सन् क्षेत्रशब्दितान्तःकरणादिषु बहुधा क्रियते इति योजना । प्रतिबिम्बभावातिरिक्तप्रवेशासम्भवाद्विभुकूटस्थेश्वरस्य प्रवेशवाक्यमपि जीवस्य प्रतिबिम्बत्वे मानम्। "एकधा बहुधा चैव दृश्यते जलचन्द्रवदिति"स्मृतिरपि। ननु यद्यस्य प्रतिबिम्बं तत्तदेवेति न व्याप्तिः। मुखे इमे भिन्ने इति भेदानुभवविरोधात्प्रत्यङ्मुखत्वादिविरुद्धधर्मवत्त्वाच्च अतो बिम्बमुखस्य छायामुखान्तरं वा प्रतिबिम्ब इति चेन्न। स्पष्टदन्तनेत्राद्यनुभवेन छायात्वासम्भवात् । ग्रीवास्थमेवेदं मुखमित्यभेदप्रत्यभिज्ञया मुखान्तरत्वायोगात्। अतो बिम्बाधीनचेष्टावत्तया तत्र छायाशब्दो गौणः। किञ्च किं मुखान्तरं दर्पणे सत्यं मिथ्या वा ? नाद्यः। शशमस्तके विषाणस्येव दर्पणे मुखस्योत्पत्तिकारणाभावाद्दर्पणावयवानां दर्पणे स्थिते परिणामान्तरायोगात् । दर्पणनाशस्त्वनुभवबाधितः । दर्पणे पर्वताद्युत्पत्तौ गुरुत्वातिशयात्पतनप्रसङ्गाच्च । बिम्बापाये ऽपि स्थितिप्रसङ्गाच्च । न चापेक्षाबुद्धिनाशाद्द्वित्वादिनाशवन्निमित्तापाये नैमित्तिकप्रतिबिम्बद्रव्यापाय इति वाच्यम्। द्वित्वादेर्यावद्द्रव्यभाविसतो ऽपेक्षाबुद्धिव्यङ्ग्यत्वान्निमित्तनाशे द्रव्यनाशायोगाच्च।

दर्पणस्यान्तर्मुखादेरुत्पत्तौ कठिनदर्पणभागव्यवधानेनाऽनुपलम्भप्रसङ्गाच्च । उपर्युत्पत्तावान्तरत्वानुभवविरोधात् । त्वगिन्द्रि[illegible]श्च । अतो न सत्यं मुखान्तरम् । यत्तु बिम्बस्य प्रतिमुद्रा प्रतिबिम्ब इति, तन्न । [illegible] पादस्येव दर्पणे मुखस्य संश्लेषाभावात्परिमाणभेदाच्च । नापि मिथ्या मुखान्तरं नेदं रजतमिति रजतस्वरूपबाधवन्नेदं मुखमिति स्वरूपबाधप्रसङ्गात् । तस्मान्नाऽत्र दर्पणे मुखमिति संसर्गमात्रबाधान्मदीयमेवेदं मुखमित्यबाधितप्रत्यभिज्ञानात्तदेव । तत्-प्रत्यङ्मुखत्वादिविरुद्धधर्मास्तु कल्पितभेदावुपपद्यन्ते । ननु मुखस्याचाक्षुषत्वात्तत्प्रतिबि[illegible] कथं चाक्षुषमिति चेन्न ! नासिकाद्यवयवसन्निकर्षेण मुखस्य चाक्षुषत्वाद्दर्पणाभिहता नेत्ररश्मयः परावृत्य मुखं व्याप्य व्यत्यस्तं दर्शयन्ति । ननु लोके भवतु बिम्बप्रतिबिम्बयोरभेदः, न तु जीवब्रह्मणोः तत्त्वमसीति संसारिस्वरूपबाधादिति चेत् ? अहो कष्टा तव मतिः ! अन्तःकरणोपाधिकल्पितः संसार इति विरोधं परिहृत्य बिम्बप्रतिबिम्बदृष्टान्तेन सम्भावितमैक्यं वाक्यस्वारस्येन प्रमीयमाणं परित्यजति निश्रेयसार्थिनो नायं चाङ्गीकरोति । तस्मात्सोऽयं देवदत्त इतिवदभेदार्थमिदं वाक्यं न बाधार्थमिति सिद्धमित्याह—

तत्त्वमस्यादिवाक्यं च न बाधार्थमितीरितमिति ।

एवं बिम्बमेवोपाधिस्थत्वेन भासमानं प्रतिबिम्बमिति प्रतिबिम्बं सत्यमेव उपाधिस्थत्वादिधर्मा एव कल्पिता इति तदंशे भ्रमः । नन्वयं भ्रमो न युक्तः उर्ध्वाग्रो वृक्षो न जलस्थ इत्यपरोक्षविशेषदर्शनेऽपि अधोग्रत्वादिमत्तया जले वृक्षभानात्तत्त्वज्ञानाभावादिति चेन्न । प्रतिबिम्बविभ्रमस्य मूलाविद्याकार्यत्वात् न च व्यावहारिकत्वापत्तिः आगन्तुकदोषजन्यत्वेन स्वप्नवत्प्रातिभासिकत्वोपपत्तेः । अस्ति चोपाधिसन्निधिदोषः । केचित्तूपाधिदोषप्रतिबन्धाद्बिम्बप्रतिबिम्बयोरैक्यापरोक्षज्ञानं नास्तीति ऐक्यावच्छिन्नात्मस्थमवस्थाज्ञानं तदावरकं भ्रमहेतुरस्तीत्याहुः । अन्ये त्वैक्यस्य बिम्बस्वरूपत्वात्प्रत्यक्षज्ञानमस्त्येवेति न तत्रावरणमस्ति । अज्ञानमात्रं तु भ्रमान्यथानुपपत्त्याऽस्तीति कल्प्यते । काळान्तरे न जानामीत्यनुभवाच्च निरुपाधिकभ्रम एवावरणं हेतुः । सोपाधिभ्रमे तूपाधिः । भ्रमत्वावच्छिन्नं प्रत्यज्ञानं हेतुरिति व्यवस्थामाहुः । विद्यमानमप्यज्ञानमावरणाभावाद्विशेषदर्शनप्रतिबन्धाच्च तत्काले न व्यवह्रियते । विशेषदर्शनमप्यु-

पाधिप्रतिबन्धान्न भ्रमं निवर्तयति । नन्वेवं सति अहं ब्रह्मेति तत्त्व-ज्ञानमप्यहङ्कारोपाधिप्रतिबन्धात्कर्तृत्वादिभ्रमं न निवर्तयेत् । तथा चोपाधिनिरासार्थं किमपेक्षितमिति तत एव मुक्तिः स्यादिति चे-दुच्यते । तत्त्वज्ञाननिवर्त्याज्ञानकार्यत्वादहङ्कारोपाधेर्न प्रतिबन्ध-कः । दर्पणादिस्तु मुखादितत्त्वज्ञाननिवर्त्याज्ञानकार्यत्वाभावात्तत्त्वज्ञा-नकार्यप्रतिबन्धक इति । ननु देवदत्तप्रतिबिम्बस्येव जीवस्य प्रति-बिम्बत्वे तत्त्वज्ञानाश्रयत्वं न स्यादिति चेन्न । देवदत्तशरीरप्रतिबि-म्बस्याचेतनत्वाज्ज्ञानानाश्रयत्वेऽपि चेतनप्रतिबिम्बस्य जीवस्य चेत-नत्वेन तदाश्रयत्वसम्भवात् । ननु तथाऽपि तत्त्वज्ञानं बिम्बस्यैव दे-वदत्तस्य दृष्टमित्यत्राऽपि बिम्बेश्वरस्यैव तत्त्वज्ञानाश्रयत्वं स्यादिति चेन्न । भ्रमनिवर्तकतत्त्वज्ञानाश्रयत्वे भ्रान्तत्वस्यैव प्रयोजकत्वात् । जी-वस्यैव भ्रमहेत्वज्ञानवत्त्वेन भ्रान्तत्वात्तस्यैव तदाश्रयत्वम् । यद्यपीश्व-रस्याऽपि सर्वविषयत्वेनाज्ञानवत्त्वमस्ति तथापीश्वरस्य कुत्राप्यावर-णाभावान्न भ्रमहेत्वज्ञानवत्त्वमिति न भ्रान्तत्वमित्युक्तं पुरस्तात् । अतो देवदत्तस्याऽपि भ्रान्तत्वादेव तत्त्वज्ञानवत्त्वं न बिम्बत्वादित्य-नवद्यम् । जीवस्यामूर्तनीरूपेश्वरप्रतिबिम्बत्वमाकाशस्य साभ्रनक्षत्र-स्याल्पजले प्रतिबिम्बदर्शनादुपपन्नम् । केचित्तु घटाकाशवदविद्या-वच्छिन्नो जीवो न तत्प्रतिबिम्ब इत्याहुस्तन्न । घटानवच्छिन्नाका-शस्य घटाद् बहिरेव स्थितिवदविद्यानवच्छिन्नेश्वरस्याविद्यकब्रह्मा-ण्डाद् बहिरेव स्थितिप्रसङ्गात् । तथा च सर्वसम्बन्धाभावात्सर्वोपा-दानत्वसर्वज्ञत्वादिकं न स्यात् । न ह्यवच्छेदकाभावविशिष्टस्याऽन-वच्छिन्नस्याऽवच्छेदकेन सम्बन्धो युज्यते । ननु बिम्बत्वविशिष्टस्ये-श्वरस्य कथं प्रतिबिम्बोपाध्यविद्यासम्बन्धः बिम्बमुखस्य दर्पणस-म्बन्धादर्शनादिति चेत् । उच्यते । बिम्बत्वं हि यावद्बिम्बस्वरूपव्या-पित्वेन मुखादावनुभूयते । न त्वनवच्छिन्नत्ववदव्याप्यवृत्ति । तथा च सर्वगतचिन्मात्रस्थं बिम्बत्वचिन्मात्रव्यापीति भवति बिम्बत्ववि-शिष्टं ब्रह्म सर्वगतं चिन्मात्रसम्बन्ध्यविद्यायां प्रतिबिम्बचैतन्यसम्ब-न्धश्चास्तीति चिन्मात्रस्य बिम्बचैतन्यस्य च सम्बन्धद्वयमादाय बिम्बस्य द्विगुणीकृत्य वृत्तिरित्युच्यते अनवच्छिन्नस्य तु चिन्मात्र-सम्बन्धव्यवच्छेदकसम्बन्धाभावान्न द्विगुणीकृत्य वृत्तिरिति विशेषः । तस्मात् प्रतिबिम्बो जीव इति पक्ष एव श्रेयानिति सिद्धम् । यत्तु अन-वच्छिन्नस्यापि चिन्मात्रत्वरूपेण सर्वसम्बन्धोऽस्तीति । तन्न । जीव-

व्यावृत्तरूपेणैवेश्वरस्य सर्वगतत्वादेवैकव्यत्वात् । अन्यथा साङ्कर्यात् । यदप्यवच्छेदकसमानसत्ताकाभावावच्छिन्नस्यावच्छेदकासम्बन्धे ऽपि पारमार्थिकाभावावच्छिन्नस्याविद्यावच्छेदकसम्बन्धो ऽस्तीति स ईश्वर इति, तन्न । अभावस्य सर्वोपादानत्वाद्यप्रयोजकस्येश्वरोपाधित्वायोगात् । तस्मान्मायिनं तु महेश्वरमिति मायावच्छिन्नस्येश्वरत्वश्रुतेः तस्योपादानत्वादिप्रयोजकत्वाच्च श्रुतिस्मृतिन्यायसिद्धत्वात्प्रतिबिम्बभावस्य जीवव्यावृत्तबिम्बत्वाकारेण मायावच्छिन्न एवेश्वर इति पक्षः साधीयानित्यलमतिविस्तरेण । एवमविद्याप्रतिबिम्बत्वाक्रान्तं शुद्धं चिन्मात्रमेव सुषुप्तिसाक्षी प्राज्ञो जीव इत्युच्यते । स चाविकल्पचिन्मात्रादीषद्विकल्पार्हः । उत्थाने परामर्शयोग्यप्रकाशत्वात् । स चाविद्यया चिन्मात्रादीषद्भिन्नः प्रतिबिम्बो जीवः पुनरन्तःकरणप्रतिबिम्बः सन् स्वप्ने तैजसः प्रमाता कर्त्ता ऽहमित्यादिस्फुटविकल्पार्हो भवति । ततः पुनरन्तःकरणसंसृष्टे स्थूलदेहे ऽभिव्यक्तः सन् जागरणे विश्वाख्यो मनुष्यो ऽहमित्यादि स्फुटतमविकल्पार्हो भवति । एवं पूर्वोपाध्यवच्छिन्नस्यैवोत्तरोपाध्यवच्छेदाङ्गीकारादुपाधिभेदे ऽपि नैकत्र देहे जीवभेदस्तत्र प्राज्ञेश्वरयोर्भेदो ऽनादिरज्ञातसत्ताकश्चानादेरप्यविद्यासम्बन्धवदविद्याधीनस्थितिकत्वादविद्यातन्त्रत्वं युज्यते । तैजसादिभेदस्तु कार्योपाधिकत्वात्कार्य इति अविद्योपादानकः प्रातीतिकश्चेति विभागः । एवं चिन्मात्रस्यैवाविद्याचित्तदेहैरुपाधिभिः संसार इति न बन्धमुक्तिवैयधिकरण्यम् । जीवेश्वरयोः कल्पितभेदाच्च सर्वज्ञत्वादिसाङ्कर्यमिति सर्वं सुस्थम् । तदेतत्प्रमेयं संगृह्णाति—

प्रतिबिम्बस्य सत्यत्वमवच्छिन्नेन जीवता ।
अज्ञानचित्तदेहैश्च जीवभेदः स्फुटीकृत इति ॥

अवच्छिन्ने जीवता नेति सम्बन्धः । नन्वात्मनि अहङ्काराध्यासो न युक्तः उपाध्यभावादिति शङ्कानिरासार्थं रज्जुसर्पमुदाहरन्ति पूर्वाचार्याः । यथा पूर्वानुभवसंस्काराद्रज्जौ सर्पो निरुपाधिको ऽध्यस्यते तथा ऽहङ्कार आत्मन्यध्यस्यते । नन्वात्मनि कर्तृत्वादेरध्यासो नास्ति स्वतः कर्तृत्वादिसम्भवात् । न चाऽसङ्गो ह्ययं पुरुष इत्यादिश्रुत्या निमित्तसङ्गाभावान्न कर्तृत्वादिसम्भव इति वाच्यम् । लोके वस्तुमात्रस्य सङ्गित्वेनाऽसङ्गत्वस्यासम्भवादिति चेन्न । आकाशवन्निरवयवत्त्वेनात्मनो ऽसङ्गत्वसम्भवादिति वक्तुं घटाकाशमुदाह-

रन्ति। न ह्याकाशे घटसंयोगः सम्भवति। निरवयवे वस्तुन्यवच्छेदक-भेदालाभेनाव्याप्यवृत्तिसंयोगविरोधादिति मत्वाह—

निरुपाधिरहङ्कारो रज्जुसर्पवदिष्यते।
आत्मासङ्गत्वसिद्ध्यर्थं घटाकाशो ऽप्युदाहृत इति॥

नन्वात्मनो ऽसङ्गत्वे प्रमातृत्वानुपपत्तिः। तथा च प्रमातृत्व-पूर्वकः सर्वो व्यवहारो लुप्येतातः सङ्गशीलः कर्तृत्वादिरूप एवात्मेति न कर्तृत्वादेरध्यासः। न चान्तःकरणं प्रमातृ जडत्वात्। न च स्वरूपज्ञानवत्त्वमेवात्मनः प्रमातृत्वमिति वाच्यम्। सर्वदा सर्वार्थज्ञानापत्तेः। अत्राह वैतण्डिकः। कर्त्रात्मवादे ऽपि विषयविशेषप्रमातृत्वं न युक्तमिति। तथा हि। घटचक्षुःसंयोगाद्यज्ज्ञानं विश्वात्मनि जातं तत्किमालोकरूपवद्यावदाश्रयव्यापि उत देहावच्छिन्नात्ममात्रवृत्ति? आद्ये आलोकसंयुक्तसर्वार्थप्रकाशवदात्मसंयुक्तसर्वार्थभानं स्यात्। न च स्वजनकेन्द्रियनिरूपितसन्निकर्षाश्रय एव विषयो नान्य इति व्यवस्थेति वाच्यम्। अस्मिन् ज्ञाने घटसन्निकर्षजन्यतावच्छेदकस्य ज्ञानान्तरा[illegible]वृत्त[illegible]धा ऽभावेन जन्यजनकभावस्य दुर्ग्रहत्वात्। न द्वितीयः। देहावच्छिन्नात्मनो घटाद्यसम्बन्धेन ज्ञानस्यार्थेन स्वाश्रय[illegible]कसम्बन्धस्याभावात्। असम्बन्धार्थभाने सर्वभानापत्तेः। एतेनाणुपरिमाणात्मवादे ऽप्यव्यवस्था दर्शिता। तस्मान्न कस्याऽपि मते ज्ञानस्य विषयव्यवस्थेति।

अत्रोच्यते। अविद्याप्रतिबिम्बचैतन्यं जीवः बिम्बचैतन्यमीश्वर इत्युक्तम्। तत्र घटादयो बिम्बचैतन्यविवर्तत्वादीश्वरेण नित्यसम्बद्धाः न तु जीवेन तेषां सम्बन्धो ऽस्ति। तेषु जीवस्यानुपादानत्वादन्तःकरणेन तु जीवस्य स्वभावविशेषात्सम्बन्धो ऽस्ति। यथा गोत्वादेर्दण्डायमानत्वेन सर्ववस्त्वव्यवहितत्वे ऽपि सास्नादिमत्पिण्डेनैव सम्बन्धो नान्येन; तद्वत् जीवस्यान्तःकरणं प्रत्युपादानत्वाच्च तेन सम्बन्धो युज्यते। तथा च यदा घटादयश्चक्षुरादीन्द्रियैः संयुज्यन्ते तदा जीवाध्यस्तान्तःकरणस्य विपुलावस्थारूपा विषयसं-कैव वृत्तिर्जायते। तया वृत्त्या विषयावच्छिन्नबिम्बचैतन्यमवच्छिद्यते। एवं जीवो ऽन्तःकरणेनावच्छिन्नविषयाधिष्ठानचैतन्यं तेनावच्छिन्नं न भवतीति अन्तःकरणावच्छेदाऽनवच्छेदकृतो भेदो यः पूर्वं स्थितः स वृत्त्यवच्छेदान्निवर्तते। वृत्तिवृत्तिमतोरभेदेन वृत्तिद्वारा ऽन्तःकरणेन विषयचैतन्यस्यावच्छेदात्। एवमन्तःकरणोपहित-

जीवचैतन्यस्य साक्षिणो विषयावच्छिन्नेश्वरचैतन्यस्याऽऽविद्यकभेदे सत्येवैकान्तःकरणोपाध्यवच्छेदादभेदे जाते सति विषयस्य साक्ष्यभिन्नचैतन्यतादात्म्यरूपः सम्बन्धो भवति । एवं स्वतो ऽपरोक्षसाक्षिसम्बद्धो ऽर्थो ऽपरोक्ष इत्युच्यते । तादृशापरोक्षार्थविषयतया वृत्तिरपरोक्षेत्युच्यते । तया वृत्त्या वृत्तिसंसृष्टविषयेण वा विषयावच्छिन्नचैतन्यस्थमावरणमभिभूयते । एकाविद्यावरणवादे ब्रह्मज्ञानं विनाऽऽवरणस्य निवृत्त्ययोगात् । न च कार्येण कारणस्य कथमभिभवः ? इति वाच्यम् । अग्नेरिन्धनाभिभावकत्वदर्शनात् । अवस्थाज्ञाननानात्वपक्षे त्वावरणं निवर्तते । तथा च विषयापरोक्षत्वव्यवहारप्रतिबन्धकावरणनिवृत्तौ सत्याम् अनावृतं चैतन्यमज्ञानं नाशयति । न तु वृत्तिः । ज्ञानस्यैवाज्ञाननाशकत्वात् । एवमावरणाज्ञाननिवृत्तिरूपाभिव्यक्तियुक्तं विषयावच्छिन्नचैतन्यं फलं स्फुरणं प्राकट्यमिति चोच्यते । ननु अन्तःकरणस्थाया घटविषयाया वृत्तिरूपक्रियायाः साक्षिभेदेनाभिव्यक्तं स्फुरणं कल्पितभेदेन साक्षिस्थं कथं फलम् ? भिन्नाश्रयत्वात् । लोके गमनादिक्रियाफलस्य ग्रामप्राप्त्यादेः कर्तृस्थत्वदर्शनात् । स्फुरणस्य घटो न विषयः । वृत्त्यैव तद्व्यवहारोपपत्तेः । अतो वृत्त्यवच्छिन्नान्तःकरणादिरेव स्फुरणस्य विषय इति भिन्नविषयत्वाच्च तन्न तस्याः फलमिति चेन्न । साक्ष्यन्तःकरणयोरैक्याध्यासेन वृत्तेः साक्षिस्थत्वेन स्फुरणसमानाश्रयत्वाद्व्यवहारे व्यवहर्तव्यप्रकाशस्यैव हेतुतया व्यवहर्तव्यो घटः स्फुरणस्य विषय इति समानविषयत्वाच्च ।

केचित्तु विषयसंसृष्टवृत्तिस्थप्रतिबिम्बचैतन्यं फलमित्याहुः । तत्र टीकायां चैतन्यविवर्तत्वाद्वृत्तिसंसृष्टो विषयो ऽन्तःकरणावच्छिन्नचैतन्याभेदेन स्वावच्छिन्नचैतन्यरूपामपरोक्षतामभिव्यनक्तीत्युक्तिविरोधात् । तत्र हि विषयस्यास्वच्छस्य कथं चैतन्यव्यञ्जकत्वमित्याशङ्क्यान्तःकरणस्य स्वस्मिन्निव स्वसंसर्गिण्यभिव्यक्तियोग्यताहेतुत्वाद्वृत्तिसंसर्गाद्विषयस्यावरणाभिभावकत्वरूपं व्यञ्जकत्वमित्युपपाद्य विषयेण व्यङ्ग्यस्य चैतन्यस्याभावमाशङ्क्य चैतन्यविवर्तत्वाद्विषयस्याधिष्ठानत्वेन चैतन्यमस्तीति प्रतिपादितम् । तस्माद्विषयावच्छिन्नमेव चैतन्यमज्ञातं सत्प्रमेयम् । अभिव्यक्तं सत्फलं वृत्त्यवच्छिन्नं चैतन्यं प्रमावृत्तिमदन्तःकरणावच्छिन्नं प्रमातृ इति व्यवस्था सिद्धा । यद्यप्यज्ञानोपाधिना शुद्धचिन्मात्रमेव

सर्वसाक्षि तथाऽपि देवदत्तादिप्रमातुरसङ्कीर्णव्यवहारहेतुत्वमन्तः-करणोपाहितत्वेनैव वाच्यमित्यन्तःकरणोपहितो ऽसङ्कीर्णव्यवहाराङ्गसाक्षीत्युच्यते। सर्वसाक्षिणः सर्वव्यवहारहेतुत्वयोग्यस्य परिच्छिन्नव्यवहारहेतुत्वायोगात्। एवं साक्षिणो विषयेण तदवच्छिन्नचैतन्याभेदद्वारा सम्बन्धार्थमावरणभङ्गार्थं वृत्तेर्निर्गमनमावश्यकमित्युक्तार्थं द्वाभ्यां संगृह्णाति—

जीवस्य व्यापिनः सङ्गसिद्धावावृत्तिभञ्जनं।
वृत्तिर्हेतुरभेदार्थो वेति पक्षा उदाहृताः॥
धीनित्यसङ्गी विषयव्यक्तचिद्बिम्बसङ्गि यत्।
अपरोक्षं तदेवेति प्रतिकर्मव्यवस्थितिः॥ इति।

यदन्तःकरणवृत्तिसंसृष्टो यो विषयः तस्यैव तदन्तःकरणविशिष्टप्रमात्रपेक्षया तदुपहितसाक्ष्यपेक्षया वा ऽभेदेनाभिव्यक्तबिम्बचैतन्यरूपस्फुरणतादात्म्यादपरोक्षता नान्यस्येति प्रतिविषयव्यवस्था। अपरोक्षविषयव्यवस्था तु वक्ष्यते। ननु साक्ष्यभिन्नबिम्बचैतन्यस्थत्वेन घटस्यैव पूर्णानन्दत्वसर्वज्ञत्वादीनामपरोक्षता स्यादिति चेन्न। तदंशावरणनिवर्तकतदाकारापरोक्षवृत्त्यभावात्। तस्माद्वृत्तिमदन्तःकरणतादात्म्यादात्मनि प्रमातृत्वाद्यध्यास इत्यनवद्यम्॥

ननु साक्ष्यभिन्नसंविदभिन्नत्वेन नीलाद्यर्थानामापरोक्ष्ये विज्ञानातिरिक्तो ऽर्थो नास्तीत्युक्तं स्यात्तथा च बौद्धराद्धान्तापत्तिरिति चेन्न। वैषम्यात्। ते हि क्षणिकविज्ञानातिरेकेणाऽर्थक्रियासमर्थत्वरूपसत्वाक्रान्तो ऽर्थो नास्तीत्याहुः। वयं तु अनाद्यनन्ताद्वितीयसंविदतिरेकेण तादृशसत्त्वाक्रान्ता अर्थाः स्थायिनः सन्तीति ब्रूम इति न सिद्धान्तसङ्करः। ननु संविद्विषययोर्भेदे किं मानमिति चेदुच्यते। संवित्तावदेका नीलाद्यर्थभेदे ऽपि संवित्संविदित्येकाकारप्रत्ययात्। न चाऽयं जातिगोचरः संविद्व्यक्तिभेदे मानाभावात्। नीलसंवित् पीतसंविन्न भवतीति प्रतीतेरौपाधिकभेदगोचरत्वात्। तथा च संवित् व्यावृत्तार्थेभ्यो भिन्ना अनुवृत्तत्वात् घटमठादिभ्य आकाशवत्। किञ्चाऽहं नीलं पश्यामीति कर्तृकर्मभावेनालयसंविदो नीलाद्भेदः प्रत्यक्षः त्वया ऽङ्गीकृतश्च। तथा च नीलसंविन्नीलाद्भिन्ना संवित्त्वात्। आलयसंविदभिन्नत्वाद्वा आलयसंविद्वत्। न च द्वितीयहेत्वसिद्धिः। संविदैक्यस्य साधितत्वात्। न च नीलस्य स्वसंविदा भेदे तद्विषयत्वं न स्यात्पीतवदिति वाच्यम्। अत्यन्ताभेदे ऽहं नीलं पश्यामीति

ग्राह्यग्राहकभावेन भेदानुभवविरोधात् । ननु कथं तर्हि नीलसंविद्दो नीलमात्रं विषयः ! भिन्नस्याऽसाधारणसम्बन्धाभावात् । न च संविदः इन्द्रियव्यापारेण यस्मिन् वस्तुनि असाधारणसम्बन्धो भवति स एव तद्विषय इत्युक्ता व्यवस्थेति वाच्यम् । क्षणिकविज्ञानानां तादृशसम्बन्धानुपपत्तेः । अतो यद्यद्ज्ञानाभिन्नं तदेव तस्य विषय इत्यभेद एव सम्बन्धो ऽभ्युपेय इति । भेदानुभवो विभ्रम इति चेन्न । आत्मरूपविज्ञानस्य क्षणिकत्वे मानाभावात् । नन्विदानीं जानामीति वर्तमानक्षणावच्छिन्नतया भासमानं विज्ञानं क्षणान्तरावच्छिन्नविज्ञानाद्व्यावृत्तं प्रत्यक्षमिति चेन्न । वर्तमानत्वेनानुभूयमाने विज्ञाने विज्ञानान्तराद्भेदस्याप्रत्यक्षत्वात् । न चातिसादृश्याद्विज्ञानानां भेदो न स्पष्टमवभासते दीपज्वालानामिवेति वाच्यम् । भेदासिद्ध्या सादृश्यासिद्धेः । तथा हि । किं विज्ञानं विज्ञानान्तराद्भेदो धर्म्यतिरिक्तो वा धर्मिरूपो वा ? आद्ये ऽपि भेदः किं विज्ञानान्तरग्राह्य उत धर्मिज्ञानग्राह्यः ? नाद्यः । धर्मिप्रतियोगिरूपविज्ञानयोर्भेदग्राहिविज्ञानान्तरग्राह्यत्वापातात् । तथा च स्वप्रकाशत्वभङ्गः तयोर्ग्राहकज्ञाने कल्पितत्वमभिन्नत्वं च स्यात् । ज्ञाने ज्ञेयस्य कल्पितत्वाभिन्नत्वयोस्त्वयाङ्गीकारात्तथा च कस्य कुतो भेदग्रहः । न द्वितीयः । स्वातिरिक्तस्य ग्राह्यत्वानङ्गीकारात् । नाऽपि धर्मिरूपः । सादृश्यात्तस्याभाने विज्ञानस्वरूपमेव न भासते इत्युक्तं स्यात्तथा च जगदान्ध्यप्रसङ्गः । अपि च सो ऽहमित्यालयविज्ञानैक्यप्रत्यभिज्ञाविरोधान्न सादृश्यं कल्पयितुं न च सादृश्यादियं भ्रान्तिरिति वाच्यम् । भ्रान्तित्वे ज्ञाते भ्रान्तिहेतुत्वेन सादृश्यज्ञानं भिन्नयोरैक्यभ्रमे सादृश्यस्य हेतुत्वात् । एवं सादृश्ये ज्ञाते तेन तिरोहितभेदनिश्चयादैक्यप्रत्यभिज्ञाभ्रान्तित्वज्ञानमित्यन्योन्याश्रयात् । न हि गोसदृशो गवय इतिवद्विज्ञानानां सादृश्यं प्रत्यक्षं येनान्योन्याश्रयो न भवेत् । तस्मात् ज्ञानानां स्वतः प्रामाण्याद्बाधकानुपलम्भाच्च प्रत्यभिज्ञा प्रमेति न क्षणिकत्वमित्याह—

संविद्विषययोरैक्ये बौद्धवादो भवेदिति ।
आशङ्क्यैक्यं निरस्तं च तथा क्षणिकता तयोः ॥ इति ।

ननु कथं प्रत्यभिज्ञा नाम ? ननु पूर्वानुभवसंस्कारसहितादिदानीन्तनकारणाज्जातं पूर्वापरकालद्वयोपलक्षितं वस्तुगोचरमेकज्ञानमिति चेन्न । तर्ह्यात्मनि सा सम्भवति स्वप्रकाशात्मरूपानुभवस्य नित्यत्वेन तन्नाशजन्यसंस्काराभावात् । स्वप्रकाशस्यानुभवकारणाभा-

वाच्च। सामग्र्यभावात्सो ऽहमित्यत्र स इत्यहमित्याकारभेदेन विषयभेदात् ज्ञानैक्यासम्भवाच्च । स्वप्रकाशस्याविषयत्वेन विषयाभावाच्च। अतो युक्तिबाधात्प्रत्यभिज्ञाभ्रान्तिरिति चेत् उच्यते । अन्तःकरणविशिष्टात्माहङ्कारस्तस्या विषयः। न च सुषुप्तौ तस्य नाशान्न प्रत्यभिज्ञाविषयत्वमिति वाच्यम्। तदापीतेरिति न्यायेन तदानीमपि सूक्ष्मजडांशसत्त्वेनान्तःकरणरूपधर्मिमात्रविशिष्टचैतन्यस्यामोक्षं स्थायित्वात्। अहमाकारवृत्तिनाशजन्यसंस्कारसहितान्तःकरणं तस्याः सामग्रीत्याह—

आत्मनि प्रत्यभिज्ञा या सामग्रीविषयस्थितेः।
सवासनाधीः सामग्री विषयो ऽहं मनोयुतः॥

या प्रमेत्यर्थः। तत्र हेतुः सामग्रीति । ननु पूर्वानुभवसंस्कारप्रत्यभिज्ञा एकविषया वाच्या। न ह्यात्मा वृत्त्यवच्छिन्नचैतन्यरूपस्य पूर्वानुभवस्य विषयः जडांशस्यैव तद्विषयत्वात्। तस्मान्न चिदंशस्य प्रत्यभिज्ञाविषयत्वमिति चेन्न । पूर्वानुभवे भासमानस्यैव स्मृताविव प्रत्यभिज्ञायां विषयत्वप्रयोजकत्वात्। भासमानत्वं चानुभवप्रयुक्तः संशयाद्यभाव इत्युक्तम्। जडविशिष्टत्वेन चिदंशस्याऽपि विषयत्वोपपत्तेश्च। एतेन प्रत्यभिज्ञाविषयत्वमात्मनो व्याख्यातम्। नन्वहङ्कारस्य प्रत्यक्षप्रत्यभिज्ञायां कर्मत्वं कर्तृत्वं च विरुद्धमिति चेन्न। स्वतो ऽनावृत्ताहङ्कारे वृत्तिरूपप्रत्यभिज्ञाकृतातिशयाभावेन कर्मत्वाभावात् । भावे वा चिदंशविशिष्टान्तःकरणत्वेन कर्तृत्वं पूर्वापरकालोपलक्षितजडविशिष्टचिदंशत्वेन विषयत्वमित्यविरोधात् । वृत्त्यवच्छिन्नचैतन्यरूपप्रत्यभिज्ञायां तु चित्प्राधान्येनाश्रयत्वं जडप्राधान्येन विषयत्वमित्यनवद्यम् । यदुक्तमाकारभेदान्न ज्ञानैक्यं तन्न । विज्ञानं क्षणिकमिति विज्ञानस्याकारभेदे ऽप्येकत्वात् अन्यथा ज्ञाने क्षणिकत्ववैशिष्ट्यं न सिध्येत्। विशिष्टज्ञानाभावात्। तच्चैकं प्रत्यभिज्ञानं तत्रांशे संस्कारातिरिक्तहेत्वभावात् स्मृतिरूपं द्रष्टव्यम्। यत्तु प्रत्यभिज्ञाश्रयत्वेनैवात्मनः स्थायित्वमिति प्राभाकरोक्तं तदयुक्तम्। ज्ञानान्यस्य ज्ञानविषयत्वनियमात्। अन्यथा सो ऽहमिति ज्ञानस्य निर्विषयत्वापत्तेः। किञ्च क्षणिकप्रत्यभिज्ञा ह्याश्रयं तत्कालीनं साधयति। न तु तस्य स्थायित्वमनपेक्षितत्वात्। ननु सो ऽहमिति व्यवहारमात्रं, न ज्ञानं न च स्थायित्वासिद्धिः, इदानीन्तनस्मृत्या घटो ऽनुभूत इत्येवंरूपया तद्विषयानुभवेन च पूर्वकालीनेनात्मनस्तदाश्रयत्वे-

न पूर्वापरकालीनत्वसिद्धेरिति चेन्न । स्मृत्यनुभवाभ्यां तत्तत्कालीनात्मसिद्धावप्यैक्यासिद्धेः । न चानुभवस्मृत्योर्भिन्नाश्रयत्वानुपपत्त्याऽऽश्रय आत्मैक इति ज्ञायते इति वाच्यम् । अर्थापत्तिज्ञानस्याप्यात्माविषयत्वायोगात् । तद्विषयत्वे च सर्वजनसिद्धप्रत्यभिज्ञाविषयत्वं दुर्वारमित्यलम् । तस्माद्विज्ञानात्मनः प्रत्यभिज्ञाप्रमया स्थायित्वं सिद्धम् । एवं घटादिविषयस्यापि स्थायित्वम् । यत्तु घटोत्पत्त्यव्यवहितानन्तरक्षणे एतद्घटध्वंसवान् एतदुत्पत्त्यनन्तरक्षणत्वात् एतद्ध्वंसक्षणवदित्यनुमानात्क्षणिकत्वमिति, तन्न । एतद्ध्वंसक्षणा एतद्घटवन्तः कालत्वादुत्पत्तिक्षणवदिति प्रत्यनुमानात् । न च ध्वंसानुभवविरोधः । उत्पन्नो घटो ऽनन्तरमस्तीत्यनुभवेन तदनुमानस्यापि बाधितत्वात् । घटस्योत्पत्त्यनन्तरं सर्वसम्मतनाशक्षणात्पूर्वक्षणा एतद्घटाधारा एतद्घटप्रागभावस्य सम्मतध्वंसस्य चानाधारक्षणत्वात् उत्पत्तिक्षणवदित्यनुमाने बाधाभावाच्च । अथ सर्वे भावाः क्षणिकाः अर्थक्रियाकारित्वाद्यतिरेकेण नरशृङ्गवत् । न चाप्रयोजकत्वं, स्थायिनो ऽर्थक्रियाकारित्वासम्भवात् । तथा हि । किं तस्य क्रमेण कार्यकारित्वम्, उत सकृदेव यावत्स्वकार्यकारित्वम् ? नाद्यः । अनेकानि कार्याणि कर्तुं शक्तश्चेद्युगपदेव कुर्यान्निरपेक्षहेतौ सति कार्यक्रमायोगात् । न द्वितीयः । एकस्मिन् क्षणे यावज्जीवकृत्यसमाप्तौ क्षणान्तरे सत्त्वायोगादर्थक्रियाकारित्वरूपत्वात् सत्त्वस्येति । अत्रोच्यते । न तावत्सकृत्कृत्वा तूष्णीम्भूतस्यासत्त्वप्राप्तिः । प्रमाणाबाधितत्वरूपसत्त्वानपायात् । न चार्थक्रियाकारित्वमेव सत्त्वमिति वाच्यम् । तथा हि । किं स्वविषयकज्ञानमर्थक्रिया उत समानजातीयकार्यान्तरम् अथ वा यत्किञ्चित्कार्यान्तरम् ? नाद्यः । स्वप्रकाशसंविदामसत्त्वापातात् । नन्वेकधीसन्तानसंविदां परस्पराविषयत्वे ऽपि सर्वज्ञेश्वरसन्तानसंविदं प्रति विषयत्वेन जनकत्वमस्ति, प्रत्यक्षज्ञाने विषयस्य हेतुत्वादिति चेन्न । सर्वज्ञसंविदो ऽसत्त्वापातात् । किञ्च सर्वज्ञविशुद्धसंविदः सोपप्लवजीवसंविद्विषयकत्वे सोपप्लवत्वापत्तिः । ज्ञानस्य त्वन्मते ज्ञेयाभेदात् । न च सर्वज्ञसंवित् जीवस्य शोकाद्युपप्लवान्विहाय ज्ञानमात्रं विषयीकरोतीति वाच्यम् । ज्ञानाभिन्नोपप्लवविषयताया दुर्वारत्वात् । उपप्लवाज्ञाने तन्निवृत्त्युपायोपदेष्टृत्वायोगाच्च । न द्वितीयः । चरमक्षणस्यासत्त्वप्रसङ्गात् । तथा हि । सांसारिकज्ञानानि स्थायित्वादिभिरुपप्लवैरुपेतानि हेतुहेतुमद्भावेन स-

न्तन्यमानानि भवन्ति। तत्र सर्वं क्षणिकमिति सर्वं स्वलक्षणं शुद्ध-मिति सर्वं दुःखमिति सर्वं शून्यमिति चतुर्विधभावनाभिः क्रमेण स्थायित्वं नामजात्यादिसम्बन्धः शोकफलकप्रवृत्तिहेतुरागादिः विज्ञानानां सविषयत्वं चेति चतुर्विधा उपप्लवाः क्षीयन्ते। ततो निरुपप्लवो विशुद्धविज्ञानरूपस्तत्त्वबोधापरनामा चरमक्षण उपजायते। तस्य कार्यान्तराभावाच्चरमत्वमिति परस्य मतम्। तथा चार्थक्रिया-शून्यत्वात्तस्यासत्त्वप्रसङ्गः। ततः पूर्वविज्ञानस्यापि कार्यासत्त्वाद-सत्त्वमिति क्रमेण सर्वमसदेव मन्दबुद्धेर्बोधस्य प्राप्नोति। एतेन तृतीयः कल्पो निरस्तः। न च चरमक्षणो ऽपि सर्वज्ञविज्ञानं विशुद्ध-त्वेन सजातीयं जनयतीति वाच्यम्। सर्वज्ञसन्तानस्यपूर्वक्षणादेव निरपेक्षात्तदुत्पत्तेरस्याजनकत्वात्। न च विषयतया सो ऽपि जनक इति वाच्यम्। चरमत्वव्याघातात् सन्तानविच्छेदात्मकमुक्त्यभावप्र-सङ्गाच्च। न च संसारसन्तानापेक्षया चरमत्वं सर्वज्ञसन्तानैक्य-रूपमुक्तिश्चेति वाच्यम्। विषयविषयिणोरेकसन्तानत्वायोगात्। तु-ल्ययोः प्रदीपयोरिव विषयविषयिभावासम्भवाच्च। स्वप्रकाश-संविद्भेदे मानाभावाच्च। तस्मान्नार्थक्रियाकारित्वं सत्त्वं; किं तु बाधाभावोपलक्षितस्वरूपत्वमित्यर्थक्रियाशून्यस्यापि सत्त्वमुपपन्नम्। यदुक्तं स्थायिनः क्रमकारित्वायोग इति तन्न। सहकारिसन्निधि-क्रमात्कार्यक्रमोपपत्तेः। ननु शक्तस्यान्यापेक्षा न युक्ता। अशक्तत्वे तु सुतरां न युक्तेति चेन्न। शक्तस्यैव मृदादेः प्रधानकारणस्य दण्ड-चक्रादिसहकार्यपेक्षानुभवादित्याह सार्द्धेन—

न कार्यकारिता सत्ता किन्त्वबाधस्वरूपता।
स्थायिनः क्रमकारित्वं सहकारिक्रमाद्भवेत्॥
शक्तस्याऽपि सहापेक्षा त्वन्वयव्यतिरेकत इति॥

न चात्रैव मृद्घटं प्रति शक्तसामग्रीक्षणसिद्ध्ये सहकारिणमपेक्षते इति वाच्यम्। सामग्र्यां मृदः शक्तत्वे ऽन्यापेक्षा न युक्ता अशक्तत्वे तु न सुतरामिति त्वदुक्तदोषानपायात्। तस्मादन्वयव्यतिरेकाभ्यां कार्यकारणभावमभ्युपगच्छता प्रधानकारणस्य शक्तस्यैव सहकार्य-पेक्षा ऽन्वयव्यतिरेकानुभवबलादभ्युपेया। ननूपकारादर्शनात्सह-कारिष्वपेक्षा न युक्ता। न चाङ्कुरे शक्तस्य बीजस्य जलादिभिरुच्छू-नत्वरूपो विशेष उपकारो दृष्ट इति वाच्यम्। तं विशेषं यदि जला-दयो बीजे विशेषान्तरं कृत्वा कुर्युस्तदा विशेषानवस्थाप्रसङ्गात्।

यदि विशेषान्तरमकृत्वैव निर्विशेषे बीजे विशेषाख्यं कार्यं कुर्युस्तर्ह्य-स्मिन्कार्ये बीजस्य स्वास्मिन्ननुपकारकेषु तेषु अपेक्षा न युक्ता किन्तु कार्यमेव स्वजनकत्वेन तानपेक्षते इति चेत्तर्हि स्थायिकारणाज्जायमानं कार्यमेव सहकारिसन्निधिमपेक्ष्य क्रमेण जायतामिति तुल्यम् । नन्वस्त्यत्र वैषम्यम् । क्षणिको भावः स्वसमकालैः क्षणिकैः सहकारिभिरुत्तरकार्यक्षणं जनयति । सोऽपि तथा कार्यान्तरमिति कार्यक्रमः क्षणिकवादे युज्यते । स्थायिवादे तु प्रधानहेतोः सहकारिणां च स्थायित्वेन तत्कृतसन्निधेरपि सदा सत्त्वात्तत्कार्याणां सदा जन्मप्रसङ्गे नक्रमो न युज्यते इति । मैवं विषमं मंस्थाः । साम्यस्य सत्त्वात् । तथा हि । न तावत्त्वन्मते व्यक्त्योः कार्यकारणताग्रहः सम्भवति । क्षणिकयोरन्वयव्यतिरेकबुद्धिक्षणद्वयस्थित्यभावात् । न चान्वयमात्रात्कारणताग्रहः । पूर्ववर्तिमात्रस्य सर्वस्य हेतुतापत्तेः । तथा च धूमार्थिनः कारणविशेषाज्ञानाद्वन्हौ प्रवृत्तिर्न स्यात् । तस्माद्विज्ञानात्मसन्तानो द्रष्टा धूमाग्निसन्तानयोर्धूमत्वादिसामान्येनान्वयव्यतिरेकाभ्यां हेतुतां गृहीत्वा प्रवर्तते इति वक्तव्यम् । तत्राप्यग्निसन्तानमत्तदङ्गारावस्थायां धूमानुपपत्तेः । काष्ठस्वलक्षणसन्तानः सहकार्यभ्युपेयः । तथा चाग्निकाष्ठसन्तानयोर्नित्यत्वेन तत्संयोगस्य नित्यत्वात्तव सदा धूमजन्मप्रसङ्गः । यदि संयोजकसन्तानकृतः संयोगो न नित्य इत्युच्यते तर्ह्यस्मिन्मते स्थायिहेतुसहकारिसन्निधेः कादाचित्कत्वात् क्रमेण कार्यक्रम इति तुल्यम् । इयान्विशेषः । सन्तानातिरिक्तसन्तानाभावात्तव कार्यकारणताग्रहो दुर्लभः । प्रत्यभिज्ञाबाधश्चातिदारुणो न स्थायिवादिनामित्यलमतिप्रसङ्गेन । एवमनाद्यनन्ताद्वितीयसंविन्नो ऽन्ये ऽर्थक्रियासमर्थाः स्थायिनो ऽर्थाः सन्तीत्यङ्गीकारान्न सर्वक्षणिकत्ववादिना वेदबाह्येन वैदिकशिरोमणीनां वेदान्तिनां सिद्धान्तसाङ्कर्यम् । यदि पुनः संविदभेदेनार्थापरोक्षोक्तिमात्रेण वेदान्तिनां बौद्धसाम्यं तदा सर्ववादिनां बाह्यसिद्धान्तसाङ्कर्यं स्यादित्याह—

यत्किञ्चिद्बौद्धसाम्यं चेत्सर्वसिद्धान्तसङ्कर इति ।

मन्त्रार्थवादेतिहासपुराणानां स्वार्थे प्रामाण्यानङ्गीकाराद्विग्रहवद्देवतेश्वरप्रसिद्धस्वर्गलोकवेदान्तसिद्धतत्त्वानामनङ्गीकाराच्च लौकायतबौद्धसाम्यं प्राभाकरस्य भेदाभेदाभ्युपगमाच्च वार्तिककारस्य क्षपणकसाम्यं च परिमाणभेदेन द्रव्यस्य क्षणे क्षणे नाशं वदन्तस्तार्किका वैनाशिकतनया एव । बन्धमोक्षादीनां साङ्कर्यं भेदा-

भेदाभ्यां वदतः सर्वसङ्करवादिनः क्षपणकांशपरिणतत्वं स्फुटमेव। एतेन विज्ञाने परिकल्पितत्वं पदार्थानां बौद्धवेदान्तिनोस्तुल्यमिति प्रलापो ऽपि कस्य चिन्निरस्तः। विज्ञाने प्रतिभास्यत्वं वदतस्तस्याऽपि बौद्धतुल्यत्वापत्तेः। तस्मात्कल्पितमत्यन्तासदिति वदता बौद्धेन वेदान्तिनां कल्पितस्यासद्वलक्षण्यं यथानुभवं कार्यकारित्वं स्थायित्वं च वदतां साम्यं ब्रुवाणो विवेकिभिः संप्रदायशून्यः 'परमहंसप्रद्वेषीत्युपेक्षणीयः। एवमुक्ता तावदपरोक्षविषयव्यवस्था। परोक्षे तु विषयस्य वर्तमानत्वानियमेन वृत्तिं प्रति कारकत्वाभावान्न स्वावच्छिन्नचैतन्यव्यञ्जकत्वं कर्मकारकस्यैव वृत्तिसंसृष्टस्यावरणनिवृत्तिरूपाभिव्यक्तिहेतुत्वात्। तस्मादभिव्यक्तचैतन्यतादात्म्यरूपं फलव्याप्यत्वाख्यमपरोक्षत्वमनुमेयादेर्नास्तीत्याह—

परोक्षे वृत्त्यसम्बन्धान्नापरोक्ष्यमिति स्थितिरिति।

वृत्तिविषयत्वं तु वृत्त्याकारतया विद्यते। न चासाधारणसम्बन्धाभावे कथं कश्चिदेव वन्ह्यादिरनुमितावाकारो नान्य इति व्यवस्थेति वाच्यम्। अभावासम्बद्धस्यापि घटस्य तन्निरूपकत्ववद्वन्ह्यादेरनुमितिनिरूपकत्वरूपाकारत्वसम्भवात्। या ऽनुमितिर्यद्व्याप्यत्वज्ञानजन्या सा तदाकारेति व्यवस्थोपपत्तेश्च। एवं शक्तिसादृश्यादिसम्बन्धमहिम्नोपमित्यादेर्विषयव्यवस्था ज्ञेया। वस्तुतस्त्वविद्यैवासम्भाविताविभासनचतुरा वृत्त्यवच्छिन्ने साक्षिणि विषयावच्छिन्नचैतन्ये च दण्डायमानतया स्थिता सती तयोर्विषयविषयिभावं घटयतीति मायावादे न क्वाऽप्यनुपपत्तिः। सा चावस्था ज्ञानाख्या विद्यासाक्ष्यात्मस्थत्वेन वन्ह्यादिव्यवहारप्रतिबन्धिका सुषुप्तिरित्युच्यते। विषयावच्छिन्नचैतन्यस्थत्वेन संशयभ्रमादिहेतुरिति स्थितिः। तन्न परोक्षवृत्त्या ऽप्यात्मस्थाज्ञानांशो नश्यति। तदुक्तम्। अनुमेयेषु सुषुप्तिर्व्यावृत्तिरिति। तथा च विषयावच्छिन्नचैतन्यावरकाज्ञानांशसत्त्वे ऽपि तदाकारवृत्त्यवच्छिन्नसाक्षिणा ज्ञानांशनाशवता वस्तुत एवाभिन्नचैतन्यद्वारा विषयस्य सम्बन्धाद्वह्निं जानामीत्यादिव्यवहारो युज्यते। वृत्तिनिर्गमनाभावेनावरणानिवृत्तेर्विषयस्याऽऽपरोक्ष्याभावश्चेत्यनवद्यम्। एवमन्तःकरणोपाधिना परोक्षापरोक्षविषयप्रमातृत्वमसङ्गचिदात्मन उपपन्नम्। तत्पूर्वकं च कर्तृत्वादिकमहमित्यनुभवे भासमानात्मन्यध्यस्तमिति सविकल्पकाधिष्ठाने सविकल्पकाध्यासस्य सम्भवो दर्शितः अस्मत्प्रत्ययविषयत्वादिति भाष्येण। वस्तुतस्तु निर्विक-

ल्पके ऽपि स्वप्रकाशत्वेनाऽपरोक्षे चिदात्मन्यहङ्कारादिसविकल्पकाध्यासः सम्भवति । अपरोक्षत्वं चात्मनः पुनः सर्वलोकानुभवसिद्धम् । न च स्वप्रकाशत्वं विना तत्सम्भवति । न च घटादिकर्मकस्वप्रकाशसंविदाश्रयत्वेनात्मनो ऽपरोक्षत्वं सम्भवतीति वाच्यम् । संविदो ऽन्यस्य संवित्कर्मत्वं विना ऽपरोक्षत्वायोगात् । न च संवित्कर्मत्वेनात्मत्वापत्तिः । संविदन्यत्वे ऽपि तदापत्तेरपरिहारात् । अस्तु ज्ञानकर्मत्वेनापरोक्षत्वमिति चेन्न । कर्तृकर्मत्वविरोधात् । किञ्च घटानुभवकाले तदाश्रयात्मानुभवो ऽस्ति न वा? न चेन्मया ऽनुभूतो घट इत्यात्मानुभवयोः सम्बन्धज्ञानं न स्यात् । सम्बन्धिज्ञानाभावाद् । न च पश्चादात्मनि ज्ञाते अनुभवसम्बन्धज्ञानमिति वाच्यम् । अनुभवस्य नष्टत्वेन तत्सम्बन्धप्रत्यक्षायोगात् । घटानुभवकाले ऽनुभवस्य स्वात्मसम्बन्धाऽनिश्चये घटो मया परेण वा ऽनुभूत इत्यग्रे संशयापत्तेश्च । अथ तत्काले स्वात्मानुभवो ऽस्तीति चेन्न । युगपदात्माऽनात्मज्ञानद्वयानुपपत्तेः । शालग्रामादिध्यानकाले ध्यानतदाश्रययोर्ज्ञानासम्भवाच्च । तज्ज्ञाने ध्यानविच्छेदादज्ञाने च मया ध्यातमिति स्मरणाविशिष्टव्यवहारयोरसम्भवः । तस्माद्ध्यातृध्यानध्येयसाक्ष्यात्मा स्वप्रकाशत्वेनैवाऽपरोक्ष इति युक्तस्तत्रापरोक्षाहङ्काराध्यास इत्याह —

आत्मनस्त्वपरोक्षत्वं स्वयं भात्वान्न चान्यथा । इति ।

ननु त्वपरोक्षाध्यासे ऽधिष्ठानारोप्ययोरेकेन्द्रियग्राह्यत्वानियमादिन्द्रियाग्राह्यात्मनि प्रत्यक्षाध्यासो न सम्भवतीति,तन्न । अचाक्षुषे ऽप्याकाशे प्रत्यक्षनैष्फल्याद्यध्यासदर्शनान्नियमासिद्धेः।नन्वाकाशज्ञानं कथमिति चेदुच्यते । शब्दलिङ्गात्तस्यानुमितिरिति कणभक्षाक्षपादपक्षपातिनः । मूर्तद्रव्यानुपलब्धिलिङ्गानुमेयो मूर्ताभाव आकाश इति बौद्धा लौकायताश्च । भावरूप एवाकाशो मूर्ताभावत्वेनोक्तलिङ्गानुमेय इति प्राभाकराः । चाक्षुष इति क्षपणका भाट्टाश्चाहुस्तन्न । नीरूपद्रव्यस्य चाक्षुषत्वायोगात् । नाप्यभाव आकाशः शब्दगुणत्वेन श्रुतिस्मृत्यादिषु द्रव्यत्वावगमात् । सिद्धान्ते तु के चिच्छब्दलिङ्गानुमेयत्वमिच्छन्ति । अन्ये तु लिङ्गज्ञानं विनैव चक्षुर्व्यापारान्वयव्यतिरेकाभ्यामालोकवृत्त्यभिव्यक्तचैतन्याभेदेन साक्षिवेद्यत्वमाहुरित्याह —

अक्षाग्राह्यमपि व्योम साक्षिवेद्यमितीरितम् । इति ।

तस्मादात्मन्यध्यासः सम्भवतीति सिद्धम् । एवं कर्तृत्वाद्यनर्थ-

स्याध्यस्तत्वान्निवृत्तिः फलं सिध्यति। तथा च भाष्यम्। यत्र यदध्यासस्तत्कृतेन गुणेन दोषेण वा ऽणुमात्रेणाऽपि स न सम्बध्यते इति।

इत्थमध्यासस्य लक्षणसम्भावने कथिते अधुना प्रमाणमुच्यते। साक्षिप्रत्यक्षं तावदहंममाध्यासे प्रमाणम्। अनुमानमपि। तथा हि। देहेन्द्रियादिष्वहंममाभिमाने सति लौकिकशास्त्रीयसर्वव्यवहारः अभिमानाभावे सुषुप्तौ व्यवहाराभाव इत्यविवादम्। तथा च व्यवहारो ऽभिमानजन्यः तदन्वयाद्यनुविधायित्वात्। यदित्थं तत्तथा यथा दण्डजन्यो घट इति। यद्वा देवदत्तस्य जाग्रत्स्वप्नकालौ देवदत्तस्य देहादिष्वभिमानवन्तौ देवदत्तस्य व्यवहारकालत्वात् व्यतिरेकेण तस्य सुषुप्तिकालवत्। देवदत्तसुषुप्तावन्येषां जाग्रत्काले बाधनिरासाय पक्षे देवदत्तस्येति, यज्ञदत्तस्याध्यासेन शुक्तिरूप्याध्यासेन चार्थान्तरतानिरासाय देवदत्तस्य देहादिष्विति क्रमेण पदद्वयम्। अन्यव्यवहारकाले देवदत्तसुषुप्तौ व्यभिचारवारणाय हेतौ देवदत्तस्येति। न च साध्याप्रसिद्धिः प्रत्यक्षत्वात्। न चानुमानस्य व्यर्थता अभ्युच्चयार्थत्वात्। यो यस्य व्यवहारकालः स तस्याभिमानवान्यथा व्याघ्रभीतयज्ञदत्तपलायनव्यवहारकाल इति अन्वयव्यतिरेकी वा ऽस्तु। एवं प्रमातृप्रमाणादिव्यवहारानुपपत्तिरप्यध्यासे प्रमाणम्। केवलासङ्गात्मनो जडान्तःकरणमात्रस्य वा प्रमाश्रयत्वायोगात्। अतो जडतादात्म्याध्यासरूपाविद्यावानेवात्मावृत्तीद्धबोधात्मकप्रमाश्रयः प्रमातेति व्यवह्रियते। तत्कारणानि प्रमाणानीत्युच्यन्ते। तदाह भगवान् भाष्यकारः। अविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति। यत्तु देहादेरात्मना स्वस्वामित्वस्वेच्छानुविधायित्वस्वभोग्यत्वादिसम्बन्धेनैव व्यवहारोपपत्तेः किं तादात्म्याध्यासेनेति तन्न। असङ्गचिदात्मनः स्वामित्वादेरध्यासं विना ऽनुपपत्तेः। ननु स्वर्वशरीरव्यापिजीवात्मनः कथं शरीरविशेषे ऽध्यासनियम? इति चेदुच्यते। एकजीववादे तावत् नाऽयं नियमो ऽस्ति। एकस्यैव सर्वदेहाभिमानित्वात्। मनोभेदेन प्रमातृभेदान्न प्रमातृत्वादिसाङ्कर्यम्। नानाजीववादे तु यदविद्योपाधिको यो जीवस्तदविद्याकार्यलिङ्गशरीरे एव तस्याभिमानः। यल्लिङ्गतादात्म्याभिमानी यस्तस्य तल्लिङ्गस्थकर्मारब्धे तल्लिङ्गसंसृष्टे श्लिष्टो स्थूलशरीरे ऽभिमान इति नियम इति। नन्वविद्यावदाश्रयत्वे प्रमाणानां प्रमाण्यं विरुद्धम्, आश्रयगताविद्यादोषादप्रमाण्यापातादिति चेत् उच्यते। अबाधितार्थकत्वं हि प्रामाण्यम्

तथाविद्यावदाश्रयत्वे ऽप्यविरुद्धम् । तत्र वेदान्तानां बाधायोग्यब्रह्मार्थकत्वात्तत्त्वावेदकत्वंलक्षणं प्रामाण्यम् । प्रत्यक्षादीनां तु व्यवहारसमर्थवस्तुबोधित्वाद्व्यावहारिकं प्रामाण्यं व्यवहारकाले प्रपञ्चनाशकबाधाभावाच्च । नन्वाश्रयदोषजन्यत्वेनाप्रामाण्यापत्तिरित्युक्तमिति चेदुच्यते । वस्तुतत्त्वबोधके प्रमाणे सति तत्त्वावभासप्रतिबन्धभ्रान्तिप्रयोजको दोष इत्युच्यते । यथा काचादिः । अन्तःकरणाध्यासस्तु न क्वापि दोषः प्रमातृत्वेन ज्ञानसामान्यकारणत्वात् अविद्याध्यासस्तु साक्षिचैतन्येन स्वाभिन्नाद्वितीयपूर्णानन्दब्रह्मावभासं प्राप्तं प्रतिबध्याहङ्कारादिप्रपञ्चभ्रान्तिप्रयोजकत्वाच्चैतन्यरूपप्रमाणापेक्षया दोष इत्युक्तं विद्यते एवमाग्रहणाविद्यात्मको दोष इत्यत्र टीकायां नत्वियं चैतन्याद्भिन्नवेदान्तजब्रह्मावभासं प्रति दोषः । प्रमात्रादिद्वारा ब्रह्मप्रमाहेतुत्वात् । चक्षुरादिभिः प्रपञ्चज्ञाने तु भवत्येवा ऽयं दोषः । परं तु नैसर्गिकदोषजन्यत्वाद्व्यवहारकाले न भ्रान्तित्वव्यवहारः । तस्मादविद्यावदाश्रयाणि प्रमाणानीत्यनवद्यम् । ननु व्यवहारानुपपत्तिरध्यासे न प्रमाणं विवेकिव्यवहारस्याध्यासं विना ऽपि दर्शनेनानुपपत्त्यभावादिति चेन्न । विवेकिव्यवहारो ऽध्यासमूलः व्यवहारत्वात् पश्वादिव्यवहारवदित्यनुमानात्पश्वादीनां च स्वप्रकाशात्मानात्मवस्तुद्वयाज्ञानवतामाविवेकादध्यासो ऽस्तीति निश्चीयते सामग्र्यसत्त्वात् । न हि तेषामात्मानात्मविवेको ऽस्ति उपदेशं विना विवेकासम्भवात् । नराणां तु विवेके सत्यप्यध्यासविरोध्यपरोक्षज्ञानाभावादध्यासः सम्भवति । देहनिन्दादिना शोकादिदर्शनाच्च । एतेन शास्त्रीये व्यवहारे यागादौ देहान्तरोपभोगफलके देहातिरिक्तात्मनिश्चयं विना बहुवित्तव्ययायाससाध्ये प्रवृत्त्ययोगान्नाध्यासमूलत्वं व्यवहारमात्रस्येति निरस्तम् । देहातिरिक्तात्मनि कर्तरि निश्चिते ऽपि अध्यासविरोधिनिश्चयाभावात् । अत्र लब्धावसरश्चार्वाकः प्रत्यवतिष्ठते । देहातिरिक्तात्मानं विना ऽपि कर्मचोदनाप्रामाण्यमुपपद्यते । तथा हि । स्वर्गकामो यजेतेति चोदनायां कः स्वर्गः? न तावल्लोकविशेषजं सुखं कार्यार्थकचोदनामात्रप्रमाणवादिना सिद्धार्थकमन्त्रार्थवादादीनां स्वार्थे प्रामाण्याभावेन मानाभावात् । अथ सुखमात्रं स्वर्गस्तर्हि तत्फलकचोदना न देहाद्भिन्नमात्मानमपेक्षते । अस्मिन्नेव देहात्मनि सुखसम्भवात् । यस्तु विध्यर्थापूर्वरूपस्थायिकार्यानुपपत्त्यैव देहान्तरभोग्यालौकिकस्वर्गसिद्धौ तद्भोक्तुर्देहाति-

रेकसिद्धिरिति तत्रालौकिकस्वर्गो स्थिते: प्रागनुपपत्त्यभावेनापूर्वस्यानुपस्थितस्य सङ्गतिग्रहासम्भवेन विध्यर्थत्वासिद्धेः। तथा च प्रथममलौकिकस्वर्गोपस्थितिस्ततः क्षणिकयागस्य तद्धेतुत्वानुपपत्तिज्ञानं ततः स्थाय्यपूर्वोपस्थितिः ततः सङ्गतिग्रहस्ततो विधिप्रत्ययेन तज्ज्ञानं तद्बलादलौकिकस्वर्गसिद्धिरिति षट्चक्रकापत्तिः। एतेनान्त्येष्ट्याद्यपूर्वस्य देहस्थत्वानुपपत्त्या तद्भिन्नात्मसिद्धिरिति प्रत्युक्तम्। उक्तरीत्या क्रियातिरिक्तापूर्वासिद्धेः। नाऽपि नित्यनैमित्तिकविधिबलाद्देहाद्भिन्नात्मसिद्धिः निष्फलविधेर्भोक्त्रनपेक्षत्वात्। पापनाशादिफलं तु देहमात्रे युज्यते। अत एव न प्रायश्चित्तविधितोऽपि भिन्नात्मसिद्धिः। पापफलभोगायापि न भिन्नात्मापेक्षा अत्रैव दुःखानुभवसम्भवात्। सिद्धार्थकवाक्याप्रामाण्येन नरकलोकासिद्धेरिति। सत्यं नास्त्येवात्रोत्तरं चोदनामात्रप्रमाणवादिनां मीमांसकंमन्यानामस्माकं तु सिद्धार्थकमन्त्रार्थवादादेरप्यपौरुषेयत्वेन मानान्तरानपेक्षत्वेन प्रामाण्यात्। तत्सिद्धालौकिकस्वर्गफलकविधिसामर्थ्याद्देहातिरिक्तात्मसिद्धिः। सिद्धे वाक्यप्रामाण्यं समन्वयसूत्रे विस्तरेण वक्ष्यत इत्यलं प्रपञ्चेन। तथा चार्थवादैकवाक्यतापन्नचोदनाप्रयुक्तकर्मणि व्यवहारेऽपेक्षित एवाऽतिरिक्तात्मनिश्चयस्तथापि वेदान्तवेद्याशनायाद्यतीताद्वितीयासंसार्यात्मबोधस्य कर्ममूलाध्यासविरोधित्वान्नापेक्षित इत्यध्यासमूलत्वं शास्त्रीयव्यवहारस्याऽविकलम्। तथा ब्राह्मणो यजेतेत्याद्यागमोऽपि ब्राह्मणादिशब्देन देहतादात्म्याध्यासवन्तमधिकारिणं तमनुवदन्नध्यासे प्रमाणम्।

अधुना प्रमाणसिद्धोऽध्यासो विभज्यते। तत्र शुद्धचैतन्येऽनादिरज्ञानाध्यासः। तद्वति चैतन्ये जीवाख्ये मनस्तद्धर्मकामादीनामध्यासः। मनोवच्छिन्नचैतन्ये देहतद्धर्मकार्श्यादीनामिन्द्रियधर्मकाणत्वादीनां चाध्यासः। देहावच्छिन्नचैतन्ये पुत्रादीनां वृद्धिहानिज्ञाननिमित्तकः साकल्यवैकल्याध्यास इति विभाग इत्यभिप्रेत्याह—

प्रत्यक्षमनुमानं चाप्यर्थापत्तिस्तथागमः।
मानान्यध्याससत्तायां स विभज्य प्रदर्शित इति॥

यत्तु कामादय आत्मधर्मा एव न तेषामध्यास इति, तन्न। अखण्डकूटस्थात्मनः कामादिपरिणामित्वायोगात्। मनसि सत्येव कामादीनां भावादसति च सुषुप्तावभावात्। कामः सङ्कल्प इत्यादिश्रुतेश्च मन एव कामादिधर्मि तत्तादात्म्यादात्मनि कामादीनाम-

ध्यासः । यद्यपि साक्ष्यात्मतादात्म्यं विना कामादीनामपरोक्षत्वा-योगात्तादात्म्यमस्ति तथाऽप्यहं काम इति तादात्म्येन भानं न भवति। किन्तु सत्यपि तादात्म्ये रूपी घट इतिवदहङ्कारेऽपि अनादिवासनया सम्बन्धित्वेनैवाध्यासः । तत्रैक्यकल्पितभेदांशद्वयरूपे तादात्म्यं भेदांशमात्रभानमिति यावत् । एवमहमिति चिदचितोरैक्यमात्रभानं द्रष्टव्यम् । तच्च कामादिधर्मि मनो मध्यमपरिमाणं साक्षिप्रत्यक्षवेद्यं च। "अगमन्मे मनोऽन्यत्र सांप्रतं च स्थिरीकृतम् । दुःखितं हृष्टमित्येवं स्वापरोक्षानुभूतितः" । तार्किकास्तु सर्वेन्द्रियेषु स्वस्वाविषयसम्बद्धेषु युगपत् ज्ञानानुत्पत्त्यन्यथानुपपत्त्या क्रमेणेन्द्रियसंयोगशाल्यणु मनः सिध्यतीत्याहुस्तन्न । समनस्कचक्षुःसन्निकृष्टे घटे युगपदनेकज्ञानप्रसङ्गात् । न च मनसः क्रमज्ञानजननसामर्थ्यं कल्प्यते इति वाच्यम् । ज्ञानकर्तृव्यतिरिक्तं मनस्तस्य क्रमेणेन्द्रियसंयोगायाणुत्वं क्रमसामर्थ्यमित्यनेककल्पनागौरवात् । अतो लाघवाज्ज्ञानकर्तर्येव क्रमसामर्थ्यमात्रं कल्प्यमित्यनन्यथासिद्धानुपपत्त्या न कर्त्रतिरिक्तमनःसिद्धिः । तस्मात्साक्षिवेद्यं मन इति सिद्धमित्याह ।

मनः कामादिधर्मे स्यात्साक्षिप्रत्यक्षमेव चेति ॥

एवं प्रत्यगात्मन्यहङ्कारादीनां स्वरूपतः संसर्गतश्चाध्यास उक्तः। आत्मनोऽप्यहङ्कारादिषु संसर्गतोऽध्यासो वाच्यः।अनध्यस्तस्य भ्रमे भानायोगात् । रजतभ्रमे तादात्म्यसम्बन्धेन रजतेऽध्यस्ताधिष्ठानसामान्यस्य भानादनध्यस्तशुक्तित्वस्याभानादहमुपलभे इत्यहङ्कारे चैतन्यभानात्संसर्गाध्याससिद्धिः । नन्वात्मनश्चैतन्यरूपाविशेषभाने कथमध्यास इति चेन्न।विशेषस्यात्मन्यभानात् । जडाहङ्कारादौ तद्भानं त्वध्यास एव । वस्तुतस्तु पूर्णानन्दब्रह्मत्वमेव विशेषः । चैतन्यं तु शुक्तेरिदंत्ववत्सामान्यमिति मन्तव्यम् । चैतन्यस्य स्वरूपाध्यासानङ्गीकारात् न शून्यतापातः। तत्र चिदात्मनोऽन्तःकरणेऽध्यासस्तदुपहितस्य तत्संसृष्टे देहेऽध्यासः मनोविशिष्टस्य देहेऽध्यासे चार्वाकस्य देह आत्मेति भ्रमायोगात्। आत्मतादात्म्यं ह्यनात्मनि अहङ्कारे वादिनामात्मभ्रमहेतुः क्लृप्तः । विशिष्टस्त्वनात्मेत्युपहित आत्मैव देहेऽध्यस्यते इति देहात्मत्वभ्रमो युक्तः । एवमन्योन्याध्यासः कर्तृत्वादिसर्वानर्थहेतुः सिद्धस्तस्य हेतुरनाद्यविद्येत्युक्तं पुरस्तात्तस्यास्तत्त्वमस्यादिवाक्योत्थापरोक्षतत्त्वज्ञानात्तन्निवृत्तौ सर्वानर्थनिवृत्तिरात्यन्तिकी प्रयोजनमस्य शास्त्रस्य सिद्धं भवति । नन्वनादेभावस्य कथं

निवृत्तिरिति चेदनादिप्रागभावस्येव। निवर्तकसन्निपाते सति अनादिभावस्याऽपि निवृत्तिरिति ब्रूमः। अतो ऽन्यदार्तं यदल्पं तन्मर्त्यमिति सद्विलक्षणस्य सर्वस्य नाशश्रवणात्। नन्वनर्थनिवृत्तिवदानन्दावाप्तिरपि फलं श्रुतं तरति शोकमात्मवित् ब्रह्म वेद ब्रह्मैव भवतीति श्रुतेः। पूर्णानन्दात्मकं ब्रह्म भवतीत्यर्थः। तत्कथं भाष्ये तस्यानर्थहेतोः प्रहाणायात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते, इत्यनर्थनिवृत्तिमात्रं फलमुक्तमिति। उच्यते। आत्मन आनन्दरूपब्रह्मैक्यं विषय इत्युक्तावर्थादभिव्यक्तानन्दः फलमित्युक्तं भवति। अनर्थनिवृत्तिस्तु तत्त्वज्ञानान्तरीयकतया जायमाना शास्त्रविषयाऽभिन्नेति मत्वा पृथगुक्तेत्याह—

एवमध्याससंसिद्धौ तन्निवृत्तिः प्रयोजनम्।
विषयश्चापि शास्त्रस्य ब्रह्मात्मैक्यं सुखं भवेदिति॥

नन्वस्थूलादिवाक्यैः प्रपञ्चाभावरूपं ब्रह्म प्रतिपाद्यते तदैक्यं तत्त्वमस्यादिशास्त्रविषय इति कथं निवृत्तिर्विषयाद्भिन्नेति? सत्यम्। प्रपञ्चात्यन्ताभावः शास्त्रविषयः। ब्रह्माभेदान्नतु निवृत्तिर्ब्रह्माभिन्ना प्रपञ्चसमानकालीनस्य ब्रह्मणस्तन्निवृत्तित्वायोगात्। ध्वंसस्य प्रतियोगिभिन्नकालत्वादिति मतेन विनिवृत्तेर्विषयात्पृथङ्निर्देशः। भवतु कल्पितस्याभावः सर्वो ऽप्यधिष्ठानमेवेति मते नेत्यनवद्यम्। सा चानन्दावाप्तिप्रतिबन्धकाभावत्वेन पुरुषार्थः। आनन्दावाप्तिस्तु मुख्यं फलमित्यन्ये। ननु प्रपञ्चाभावत्वेन ब्रह्मनिषेधवाक्यैः प्रमातुमशक्यम्। सप्रपञ्चत्वानुभवविरोधादिति चेन्न तावत्प्रत्यक्षेण सप्रपञ्चं ब्रह्मेत्यनुभवः सम्भवति ब्रह्मणो ऽतीन्द्रियत्वात्। नाप्यनुमानेन तस्य कारणमात्रगोचरत्वान्न चागमः सप्रपञ्चपरः कश्चिदस्ति। इदं सर्वं यदयमात्मेति वाक्यं तु ब्रह्मण उपादानत्वश्रुतिसामर्थ्यप्राप्तमात्मत्वं नेति नेतीति निषेधायानुवदति। न प्रतिपादयति यच्छब्दयोगात्। द्वैतप्रतिपादने फलाभावादनर्थदर्शनाच्च। द्वैताभावे सुषुप्तौ सुखदर्शनात्। "अशब्दमस्पर्शमरूपमव्ययं तथा रसं नित्यमगन्धवच्च यत्। अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते"। इति निषेधज्ञानान्मुक्तिश्रवणाच्च निषेधवाक्यं फलवदज्ञातार्थत्वाद्बलवदिति निष्प्रपञ्चमेव ब्रह्मेत्याह—

ब्रह्म तन्निष्प्रपञ्चं स्यान्निषेधबलवत्त्वत इति॥

सृष्टिवाक्यं तु न मुख्यतः सप्रपञ्चतां बोधयति। किं त्वन्यत्र प्र-

पञ्चसत्ताभ्रान्तिनिरासार्थं ब्रह्मोपादानकत्वमुक्त्वा तत्र निषेधेनाद्वितीयं ब्रह्म प्रतिपादयति । अर्थात्प्राप्तं सप्रपञ्चत्वमुपासनार्थमनुवदत्सर्वकर्मा सर्वकामः सर्वगन्ध इत्यादिवाक्यमप्यनन्यशेषनिषेधवाक्यविरोधाच्च तत्परम् । एवं जीवो ऽपि कर्तृत्वादिसंसारशून्य एव । न चाऽनुभवविरोधः । इच्छाकृतिदुःखादिग्राहकप्रमाणाभावेनानुभवस्य भ्रमत्वात् । मनसस्तदुपादानत्वेनाप्रमाणत्वात् । यत्तु दुःखादीनां स्वसत्तायां प्रकाशाव्यभिचारात्स्वप्रकाशत्वमिति बौद्धैः प्राभाकरैश्चोक्तं तन्न । ज्ञानान्यस्य घटवदस्वप्रकाशत्वात्स्वप्रकाशत्वस्यैकात्मवृत्तित्वे लाघवाच्च । तस्माच्छुक्तिरूप्यादिवत्साक्षिवेद्यः कर्तृत्वादिसंसार इति । वस्तुतो ऽसंसार्येव जीव इति निष्प्रपञ्चब्रह्मैक्यमेवाबाधितं शास्त्रस्य विषय इति सिद्धमित्याह—

असंसारी तथा जीवो न दुःखादिः स्वयंप्रभ इति ।

नन्वनर्थनिवृत्तेः शास्त्राविषयत्वे कथं सिद्धिरिति चेदुच्यते । अहं ब्रह्मास्मीति ज्ञानाद्वाक्योत्थादनर्थमूलाज्ञाननिवृत्त्या तज्ज्ञानार्थस्य निवृत्तिर्जायते । शुक्तिज्ञानादिव प्रत्यक्षाद्रजतनिवृत्तिः । सा च प्रतियोग्यनुपलम्भसहकृतेनाधिष्ठानसाक्ष्यनुभवेन ज्ञायते इति नान्तरीयकतया सिद्धा ऽनर्थनिवृत्तिः । तथा चाऽधिष्ठानज्ञानादर्थसिद्धरजतनिरासं यथा नेदं रजतमिति वाक्यमनुवदति । यथा वा देवतोद्देशेन द्रव्यत्यागरूपक्रियावाचिना यजतिना क्रियाज्ञानाऽनान्तरीयकतया सिद्धयोर्द्रव्यदेवतयोराज्यविष्ण्वादिशब्दविशेषे नियमार्थमनुवादः । तदुक्तम् । यजतिचोदना द्रव्यदेवताक्रियासमुदाये कृतार्थत्वादिति । यजतिशब्दः शक्त्या क्रियांवदस्तदविनाभूतं द्रव्यं देवतां च बोधयति । त्रयाणां समुदाये ज्ञाते सति आकाङ्क्षाशान्तेरिति सूत्रार्थः । तथानर्थनिवृत्तिं विद्वदनुभवसिद्धां तरति शोकमात्मविदिति वाक्यमनुवदतीति शास्त्रविषयाद्बहिर्भूतानर्थनिवृत्तिरिति मन्वानो भगवान् भाष्यकारस्तां पृथगभाषयत् । अस्याऽनर्थहेतोः प्रहाणायेति मत्वाह—

ज्ञानादनर्थनाशस्तु न श्रुत्यर्थो ऽर्थसिद्धित इति ।

नन्वत्र भाष्ये विद्याप्रतिपत्तये इत्यत्र प्रतिपत्तिशब्दार्थः क इति चेत्, उच्यते । अविचारितवेदान्तवाक्यज्ञाताया विद्याया अपरोक्षप्रत्यग्ब्रह्मगोचरत्वेनापरोक्षाया अपि चित्तस्यैकाग्रवृत्त्ययोग्यतादोषाद्विपरीतभावनादोषाच्चाऽज्ञानावरणनिवृत्तिरूपविषयस्यापरोक्षत्वं

प्रत्यक्षविषयत्वं(१) भवति। यथेदं फलमत्र न सम्भवतीति विषयाऽसम्भावनाबुद्धिदोषादाप्तवाक्योत्थस्य सन्निकृष्टार्द्रमरीचफलज्ञानस्य। तथा च तर्कादिना दोषप्रतिबन्धनिवृत्तौ यत्तत्क्षमत्वं साविद्यायाः स्वविषये प्रतिष्ठाप्रतिपत्तिशब्दार्थ इति। एतेन वेदान्तवाक्यस्य तर्कापेक्षत्वे प्रामाण्यस्य स्वतस्त्वभङ्ग इति प्रत्युक्तम्। न हि वयं वाक्यप्रमाणस्य तर्कापेक्षया प्रमितिहेतुत्वं ब्रूमः। किन्तु तर्केण प्रतिबन्धे निरस्ते निरपेक्षं वाक्यमेवार्थनिश्चायकमिति न स्वतस्त्वहानिः। एतच्च मानानां स्वतस्त्वं प्रथमतन्त्रे निरूपितम्। तथा हि। प्रामाण्यमप्रामाण्यञ्च स्वत इति साङ्ख्याः। तन्न दोषोत्कर्षे भ्रमोत्कर्षदर्शनादप्रामाण्यस्य ज्ञानसामान्यस्य सामग्र्यतिरिक्तदोषप्रयोज्यत्वेनोत्पत्तौ स्वतस्त्वायोगाद्दोषस्य भ्रमाऽहेतुत्वे सर्वज्ञानानाम्भ्रमत्वापातः सामान्यसामग्र्या एव भ्रमहेतुत्वात्। एवं प्रामाण्यस्य ज्ञानग्राहकमात्रग्राह्यत्वे क्वाऽपि निष्कम्पा प्रवृत्तिर्न स्यात्। भ्रान्तप्रवृत्त्युच्छेदश्च। अतो दोषजन्यम्बाधग्राह्यमप्रामाण्यम्परतः॥

एतेनाप्रामाण्यं स्वतः प्रामाण्यम्परत इति सुगतोक्तमपास्तम्। उभयम्परत इति तार्किकास्तन्न। दोषाऽजन्यज्ञानमात्रस्य प्रमात्वदर्शनेन ज्ञानसामान्यहेत्वतिरिक्तहेतुगुणजन्यं ज्ञानम्प्रमेत्यत्र मानाभावात्। जन्यप्रमा न गुणजन्या प्रमात्वात्। ज्ञानत्वाद्वा ईश्वरप्रमावत्साद्दश्यादिदोषवद् गुणस्य प्रमामात्रहेतोर्दुर्निरूपत्वाच्च। न तावद्विशेषणसन्निकर्षो गुणः। तस्य जन्यप्रत्यक्षमात्रे साधारणहेतुत्वात्। न च तद्वति तत्सन्निकर्षः प्रमायामेव हेतुरिति वाच्यम्। तस्याऽपि विशेषणसन्निकर्षत्वेन प्रत्यक्षभ्रमसाधारणत्वात्। जन्यप्रत्यक्षत्वेन यावद्विषयसन्निकर्षत्वेन कार्यकारणभावे सम्भवति तद्वति तत्सन्निकर्षत्वेन जन्यविशिष्टप्रत्यक्षप्रमात्वेन कार्यकारणभावान्तरकल्पने गौरवात्। अत एव साध्यवति हेतुज्ञानमनुमितौ गुण इत्यपास्तम्। हेतुज्ञानत्वेनाऽनुमितित्वेन तद्भावे लाघवात्। एवं वक्तृयथार्थज्ञानत्वेन शब्दप्रमाणत्वेन तत्तद्भावदोषाऽजन्यत्वेनैव शब्दप्रामाण्योपपत्तेः। अतो दोषाभावे ज्ञानहेतुमात्रादेव प्रमोत्पत्तिरित्युत्पत्तौ स्वतः प्रमात्वम्। यत्तु दोषाभाव एव प्रमाहेतुर्गुण इति, तन्न। तस्य प्रमायां प्रतिबन्धकाभावत्वेनाऽन्यथासिद्धत्वात्। धर्म्यंशप्रमायां केवलान्वयिधर्मप्रकारकप्रमायाञ्च दोषाप्रसिद्ध्या तदभावासम्भवाच्च।

---

(१) प्रत्यक्षत्वमिति पाठान्तरम्।

न हि तत्र कस्याऽपि भ्रमो ऽस्ति । येन तद्धेतुर्दोषः प्रसिद्धः स्यात् । एवं ज्ञानग्रहे तद्विशेष्यं प्रकारवत्तारूपप्रामाण्यस्य ग्रहात् ज्ञप्तौ स्वतस्त्वम् । न हि निर्विषयज्ञानमात्रं ग्रहीतुं शक्यम् । न च तद्वत्तारूपविषयातिरिक्तं प्रामाण्यं नाम किञ्चिदस्ति । तद्वद्विषयकत्वस्य ज्ञानमात्रत्वात् । तत्प्रकारकत्वस्याऽपि तथात्वात् । भ्रान्तिसाधारणत्वाच्च । अत एव भ्रान्तो ऽपि पुरोवर्तिनि तद्वत्तारूपप्रामाण्यनिश्चयान्निष्कम्पम्प्रवर्तते । दूरस्थजलज्ञानादौ त्वनभ्यासदोषात्प्रामाण्यग्रहस्यानिश्चयत्वमिति तत्संशयो युज्यते इत्यनवद्यम् । मीमांसकानां स्वतः प्रामाण्यमप्रामाण्यं परत इति संक्षेपः । ननु वाक्यादेवाऽपरोक्षज्ञानमुत्पन्नं प्रतिबन्धनिरासे सति विषयाऽऽवरणनिवर्तकमित्युक्तं तदयुक्तम् । शब्दस्य परोक्षज्ञानजनकत्वस्वाभाव्यादिति चेत्सत्यम् । साक्ष्यभिन्ने प्रत्यक्षे वस्तुनि शब्दादपि अपरोक्षज्ञानं भवति । अपरोक्षार्थकत्वस्यैव ज्ञानिष्ठाऽपरोक्षताशब्दार्थत्वात् । न चेन्द्रियजन्यत्वेन ज्ञानस्य प्रत्यक्षता मनोजन्या । अनुमितेस्तत्प्रसङ्गात् नित्यस्य सुखादिज्ञानस्य तदभावप्रसङ्गाच्च । मनसः प्रमातृत्वेनानिन्द्रियत्वात् । दशमस्त्वमसि, शुक्तिरियमित्यादिवाक्याद्भ्रमनिवर्तकाऽपरोक्षज्ञानदर्शनाच्च तन्त्वौपनिषदं वेदान्तविज्ञानसुनिश्चितार्था इति च श्रुत्या वेदान्तवाक्यजसाक्षात्कारस्यैव मुक्तिहेतुत्वावगमाच्च । तस्मात्कर्मभिर्निरस्तसमस्तकल्मषस्य भगवदनुग्रहाच्छमादिसंपत्त्या ऽनात्ममात्रे रागादिदोषनिबन्धनप्रवृत्तिविमुखस्याऽऽत्मप्रेप्सोः श्रवणेनाऽवधृतशक्तितात्पर्याच्छब्दान्मनननिदिध्यासनाभ्यां प्रमेयाऽसम्भावनादिदोषप्रतिबन्धनिरासे सत्येकाग्रचित्तेन्द्रिये ब्रह्मात्मत्वसाक्षात्कारो जायते । चित्तस्याऽपरोक्षधीहेतुत्वमात्रेणाऽऽचार्यैरिन्द्रियत्वोपचारः कृतः । एकत्र विजातीयकरणद्वयाऽयोगादिति मन्तव्यम् । अन्ये तु श्रुताच्छब्दाद्ब्रह्मात्मनि परोक्षधीरुदेति । शब्दस्वाभाव्यात्पश्चादुक्तैकाग्रचित्तसहकृतादपरोक्षधीरित्याहुः ।

ननु श्रवणमनननध्यानानां न तावदाग्नेयादीनामिव समप्राधान्यं ज्ञानान्यस्य कस्य फलस्याभावात् । ज्ञानस्य च शब्दमात्रफलत्वात् । फलैक्याभावादेव नाऽङ्गाङ्गिभावो ऽपि । यदि परम्परया ज्ञानफलकत्वेनाऽङ्गाङ्गिभावस्तर्हि ध्यानस्याऽनन्तरमेवाऽपरोक्षज्ञानहेतुत्वेन प्राधान्यम् । इतरयोस्तत्स्वरूपोपकारित्वेनाङ्गत्वमिति चेदुच्यते । श्रवणेनावधृतशक्तितात्पर्यविशिष्टवाक्यस्यापरोक्षज्ञानं प्रति करणत्वात् । करणस्य फलं प्रत्यव्यवहिततया प्राधान्यात्कर-

णकोटिनिविष्टत्वेन श्रवणं प्रधानम् । मननध्याने तु करणफलापेक्षितायाश्चित्तैकाग्रतायाः प्रतिबन्धकासम्भवनादिनिवृत्तिद्वारा सम्पादकत्वेन फलोपकार्यङ्गतामश्नुवाते । अकरणं चित्तसंस्कारकत्वेन व्यवधानात् । न चाव्यवधानात् ध्यानमेव करणमिति वाच्यम् । ध्यानस्य क्वाऽपि प्रमाकरणत्वादर्शनात्तज्जन्यज्ञानस्य नष्टपुत्रसाक्षात्कारवद्भ्रान्तित्वापत्तेः । न च वेदान्तविषयसत्तानिश्चयात् ध्यानकरणकज्ञानस्य प्रमात्वमिति वाच्यम् । ध्यानजज्ञानस्य परतः प्रामाण्यापत्तेर्ध्यानाख्यप्रमाणान्तरकल्पनागौरवाच्च । नाऽपि ध्यानसंस्कृतं चित्तं करणं प्रमातृत्वात् । ब्रह्मण औपनिषदत्वविरोधाच्च । मनसैवाऽनुद्रष्टव्यमिति तृतीया मनस उपादानत्वेन हेतुत्वादविरुद्धा । तस्माद्विचारितवाक्यमेव करणमिति मननध्याने तदङ्गे इति सिद्धमित्याह—

प्रमाणानां स्वतो मात्वं शाब्दादर्थोऽपरोक्षधीः ।
मतिध्याने श्रुतेरङ्गे न ध्यानात्स्यात्प्रमोद्भवः ॥ इति ।

ननु वाक्योत्थस्याऽहं ब्रह्मेत्यपरोक्षज्ञानस्य देहाद्यध्यासाऽनर्थमूलाविद्यानिवर्तकत्वे ज्ञानिनः सद्यः शरीरपातः स्यात् । तथा च जीवन्मुक्तिशास्त्रविरोधः । देहादिभिन्न आत्मेति विवेकज्ञानवदनिवर्तकत्वे फलाभावाच्छास्त्राऽनारम्भ इति चेन्न । विवेकज्ञानस्याऽविरोधादज्ञानाऽनिवर्तकत्वेऽपि वाक्योत्थाधिष्ठानतत्त्वगोचरज्ञानस्याऽज्ञानसमानाश्रयविषयतया विरोधादस्त्येव निवर्तकत्वम् । शरीरधारणन्तु नष्टाऽज्ञानसंस्काराद्युज्यते । रज्जुतत्त्वज्ञानिनो ऽपि अहिभयाद्यनुवृत्तिवत् । अस्ति हि विनश्यद्वस्तुमात्रस्य संस्कारः ज्ञानक्रिययोरिव भावनावेगादिसंस्कारः । अन्यथा प्रलयानन्तरभाविसर्गस्य पूर्वसर्गसमानत्वायोगात् । स चाज्ञाननाशजसंस्कारोऽप्यज्ञानवदात्माश्रितो जगदपरोक्षभ्रान्तिहेतुः अपरोक्षभानहेतुस्थदोषत्वात्काचादिवत् । स च निरुपादानः । तत्त्वज्ञानसंस्कारनाश्यज्ञानसंस्कारस्तु दग्धेन्धनाग्निवत्स्वयं शाम्यतीति जीवन्मुक्तिशास्त्रबलात् कल्पनीयम् । अथ वा ज्ञानादावरकाऽज्ञानांशस्यैव नाशः । विरोधात् । विक्षेपकांशस्तु प्रारब्धाऽवसाने पूर्ववृत्त्यभिव्यक्तचैतन्यान्नश्यतीत्यविद्यालेशाद्देहधारणम् । तन्नाशे विदेहे कैवल्यमिति रमणीयमित्याह—

संस्कारादनुवृत्तिः स्यात्संसृतेर्ज्ञानिनोऽहिवदिति ।

ननु सर्वे वेदान्ता आत्मैकत्वविद्यार्थमारभ्यन्ते इति भाष्योक्तमयुक्तं तेषूपासनापरवाक्यानां बहुलमुपलब्धेरिति । उच्यते ।

अध्यारोपापवादाभ्यां निष्प्रपञ्चप्रमित्यर्थं ब्रह्मणि रश्मिवाक्यः प्रपञ्चो ऽध्यारोपितस्तस्याऽपवादात्प्राप्तनिष्प्रपञ्चनिर्गुणप्रमितिशेषमाश्रित्य चित्तैकाग्र्यद्वारा ज्ञानहेतुत्वाऽभिप्रायेण वेदान्तेषूपासनानि विधीयन्ते । न चाश्रित्य विधाने ज्ञानाधिकारिण एवोपासनेष्वधिकारो गोदोहनइव स्यादिति वाच्यम् । दर्शपूर्णमासाङ्गत्वेन तदधिकारिण एव प्रासाप्प्रणयनोद्देशेन गोदोहनविधेरधिकृताऽधिकारत्वे ऽपि सर्वसाधारणप्रत्यक्षादिसिद्धस्य प्रपञ्चस्य श्रुत्या ऽनूद्यमानस्य ज्ञानार्थिनं प्रत्येव प्राप्तत्वाभावात्सर्वान् प्रति प्राप्तप्रपञ्चाश्रितोपासनेषु अमुमुक्षोरपि तत्तत्फलार्थिनो ऽधिकारोपपत्तेः । न हि ज्ञानं विहितं येन प्रपञ्चस्तदङ्गत्वेनासाधारणः स्यादपि तु रजतारोपस्याऽरजतशुक्तिज्ञानहेतुत्ववत्प्रपञ्चारोपस्य निष्प्रपञ्चब्रह्मधीहेतुत्वमात्रम् । तदाश्रितोपासनाविधीनां वेदान्तेषु ज्ञानाथप्रपञ्चारोपप्रसङ्गादागतानां ब्रह्मण्येव महातात्पर्यं चित्तैकाग्र्यद्वारे ऽपि भाष्ये सर्वशब्दो युक्त इत्याह—

ज्ञानार्थत्वादुपास्तीनां वेदान्ता ऐक्यगोचराः । इति ।

एवं च सर्वेषां वेदान्तानां ब्रह्मात्मैक्यं विषयो ऽनर्थनिवृत्तिः फलमिति तद्विचारात्मकशास्त्रस्य सूत्रसन्दर्भस्याऽपि ते एव विषयप्रयोजने सिद्धे । ते च प्रथमसूत्रेणार्थात्सूत्रिते इति मत्वा तयोः सिद्धये भाष्यकारो ऽध्यासमादौ वर्णयित्वा ते दर्शितवानस्याऽनर्थहेतोरित्यादिना । तस्मादार्थिकसूत्रार्थस्पर्शित्वादस्य भाष्यत्वेन व्याख्येयता सिद्धा ॥

ननु विषयप्रयोजनयोः कथमार्थिकत्वमिति ? उच्यते । मुमुक्षुणा ब्रह्मज्ञानार्थं विचारः कर्तव्य इति सूत्रस्य श्रौतो ऽर्थ इत्युक्तम् । तत्र विधिप्रत्ययेन हितसाधनत्वोक्तौ हितविशेषाकाङ्क्षायामधिकारिविशेषणं मोक्षः सम्बध्यते इति प्रयोजनत्वबुद्धिर्मोक्षस्यार्थिकी । ब्रह्मज्ञानस्य जीवगतबन्धनिवृत्तिरूपमोक्षहेतुत्वाऽन्यथाऽनुपपत्त्या तदैक्यमर्थात्सूत्रितमिति । अत्र प्राभाकरः । न हि विधिप्रत्ययात् हितसाधनताबोधः । किन्तु विधिबोधितनियोगात्तद्विषये धात्वर्थे नियोज्यहितसाधनत्वरूपविनियोगं विना ऽनुपपद्यमानात्तद्बोध इति ब्रूते । तन्निराकरोति—

ज्ञाप्यते हितहेतुत्वं विधिना न नियोगत इति ।

अयं भावः । नियोगे सिद्धे हितहेतुत्वधीः । तस्यां ज्ञातायां चणि-

कभावार्थस्य कालान्तरभाविहितहेतुत्वाऽनुपपत्त्या स्थायिकार्योपस्थितौ तत्र शक्तिग्रहाल्लिङादिना तद्बोध इति चक्रकापत्तेः। किञ्च विनियोगाभावे नियोगस्य नानुपपत्तिरस्ति। निष्फलनित्यादिकर्मणि नियोगाङ्गीकारात्। न च फलकामिनं यागे फलहेतुत्वमनापाद्य नियोगः प्रवर्तयितुं न शक्नोतीति कामिप्रवर्तकत्वानुपपत्त्या नियोगाद्विनियोगधीरिति वाच्यम्। तथा सति ज्ञातो नियोगो हितहेतुत्वधियं विना न प्रवर्तक इत्यावश्यकत्वेन तस्या एव प्रवर्तकत्वापातात्। यत्तु काम्यत्वेन साध्यस्य स्वर्गादेः कामनाद्वारा नियोगाधिकारिविशेषणत्वानुपपत्त्या नियोगविषयस्य यागादेस्तत्साधनताबोधो न विधित इति, तन्न। अध्येतुकामो भैक्षमाचरेदिति नियोगविषयस्य भैक्षस्य काम्याध्ययनहेतुत्वबोधापत्तेः। तस्मादध्ययनवद्विधेयधात्वर्थासाध्यत्वे ऽपि स्वर्गस्य तदधिकारिविशेषणमुपपन्नम्। किञ्च स्वर्गकामपदेन साध्यस्वर्गबोधे तस्य नियोगरूपसाध्येनान्वयाभावे स्वतन्त्रसाध्यभेदाद्वाक्यभेदः। अन्वये तु नियोगस्य स्वर्गं प्रति साधनत्वेनैवान्वय इति नियोगप्राधान्यभङ्गः। किञ्चेदं स्वर्गकामपदं न साध्यस्वर्गविशिष्टाधिकारिपरम्। येन तद्विशेषणत्वेन स्वर्गस्य नियोगविषयसाध्यताबोधः स्यात्। न तावदिदं स्वर्गकामत्वविशेषणं पुरुषस्य दर्शादिनियोगेनासम्बन्धनिरासार्थं, नित्यविधिनैव तन्निरासात्। नाऽपि नित्यनियोगाधिकार्यपेक्षया। काम्यनियोगाधिकारिणो भेदज्ञानार्थं नित्यकाम्यनियोगवैजात्यासिद्धेः। न चाधिकारिभेदात्तत्सिद्धिः परस्पराश्रयात्। ज्ञाते ऽधिकारिभेदे नियोगयोर्वैजात्यज्ञानम् वैजात्यज्ञाने विशेषणमर्थवदित्यधिकारिभेदज्ञानमिति। तस्मात्स्वर्गकामपदं हितसाधनत्वबोधिविध्यपेक्षितहितविशेषमात्रपरम्। तथा च स्वर्गकामो यजेतेति पदाभ्यां यागः स्वर्गसाधनमिति बोधिते सति तत्कामो ऽधिकार्यर्थाल्लभ्यते। तस्माद्विधिप्रत्ययादेवेष्टसाधनताबोधः।

अन्ये तु स्वर्गविशिष्टाधिकारिणो नियोगविषयभावार्थेनाऽन्वये सति विशेषणस्याऽपि तेनान्वयः सिध्यति। विशिष्टान्वये विशेषणस्याप्यन्वयनियमात्। स चान्वयः स्वर्गस्येप्सितत्वेन भावार्थसाध्यत्वरूप इति विशिष्टाधिकार्यन्वयलभ्यः साध्यसाधनभावो न लिङर्थ इत्याहुः। तन्न। विशेषणस्य विशेष्यपुरुषक्रियां प्रति हेतुत्वेनाऽन्वयाद्विशिष्टान्वयोपपत्तेः।

काम्ये कर्मणि कामनैवाधिकारिविशेषणम् । सा च भावार्थेन हेतुतया ऽन्वेति नित्यादौ जीवनादिवत् । यदि स्वर्गं विशेषणं कृत्वा तस्य भावार्थेन साध्यतयार्थान्वय उच्येत तर्हि जीवनादेरपीप्सितरूपस्य तद्विशिष्टाधिकारिकभावार्थसाध्यताप्रसङ्गः । तस्मात्साक्षात्कृतिसाध्यस्य भावार्थस्यानन्यलभ्यामिष्टसाधनत्वं विध्यर्थमिति युक्तं कृतिसाध्यत्वमाख्यातलभ्यमिति न तत्र लिङादीनां शक्तिः । ननु ज्योतिष्टोमेन यजेतेत्यत्र लिङाऽकरणत्वे ऽभिहिते तृतीया न स्यात् । तिङ्कृत्तद्धितसमासैरनभिहिते इत्यधिकृत्य कर्तृकरणयोस्तृतीयेति सूत्रेण तृतीयाविधानादिति चेन्न । यागे करणत्वाभिधाने ऽपि जोतिष्टोमाख्ययागविशेषे करणत्वानभिधानात् । लिङा साधनत्वाभिधाने ऽपि करणत्वानभिधानाच्चेत्यनवद्यम् ॥

तस्माद्भगवान् भाष्यकारः प्रवृत्त्यङ्गतया सूत्रस्याऽऽर्थिकार्थं विषयप्रयोजनरूपमादौ व्याख्याय पदव्याख्यामारभते तत्राऽथशब्द आनन्तर्यार्थ इत्यादिनेत्युपपन्नम् । तस्मान्मुमुक्षुणा ब्रह्मजिज्ञासाख्यवेदमीमांसा कर्तव्या विषयप्रयोजनयोः सद्भावादित्युपसंहरति—

मुमुक्षुणा ऽतो जिज्ञासा कर्तव्या विषयार्थयोः ।
सद्भावादित्यर्थजातं प्रथमे वर्णके स्थितम् ॥ इति ।

श्रीरामप्रपदप्रसादकलितश्रीमद्गुरुश्रीपद-
श्रद्धायुक्प्रणतिप्रभाकरहतस्वान्ध्यान्धकारत्वतः ॥
श्रीमच्छङ्करपद्मपादकृतवाग्गुम्फातिगम्भीरके
सिद्धो न्यास उपप्रकाशयति वाक् सङ्ग्रादिमे वर्णके ॥ १॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविन्दानन्दभगवत्पूज्यपादशिष्यरामानन्दसरस्वतीकृतौ विवरणोपन्यासे प्रथमसूत्रे प्रथमवर्णकं समाप्तम् ॥ रामार्पणमस्तु ॥

———o———

भक्तानुग्रहकृद्देवं ढुण्ढिराजं परात्परम् ।
कर्णवायुचलद्विघ्नहारिशुण्डमहं भजे ॥ १ ॥
अशोकं परमानन्दं गोविंदं भक्तवत्सलम् ।
वेदान्तवेद्यं श्रीरामं भूयो भूयो नमाम्यहम् ॥ २ ॥

श्रोतव्य इति विध्यपेक्षितयोर्ब्रह्मात्मैक्यविषयानर्थनिवृत्तिप्रयोजनयोः सत्त्वाद्वेदान्तविचारः कर्तव्य इत्युक्तम् । पुनरत्र गतार्थत्वाऽगतार्थत्वाभ्यां सन्दिह्यते स विचारः कर्तव्यो न वेति । तत्र गतार्थ-

त्वाञ्च कर्तव्य इति प्राप्तम्। तथा हि। विचारविधेरव्यवहितो विचार-विषयः विचार्यः। वेदान्तप्रतिपाद्यस्तु व्यवहितो विषय इति स्थितिः। तत्र सर्ववेदस्य कार्यपरत्वाद्वेदान्तानामपि द्रष्टव्य इति ज्ञानविधौ तात्पर्ये न ब्रह्मणि विध्यपेक्षितं चोत्पत्तिविनियोगप्रयोगफलादिकं सर्वं पूर्वतन्त्रे जैमिनिसूत्रन्यायैर्विचारितमतो वेदान्तानां पूर्वतन्त्रेणाऽवगतार्थत्वात्तद्विचारः कृत एवेति व्यवहितविषयाभावाच्छास्त्रमनारम्भणीयमित्याह—

सर्वो वेदो विधिपरो विधिः पूर्वं विचारितः।
अनारभ्यमिदं शास्त्रम्। इति।

ननु विधिपरत्वेऽपि द्वादशाध्यायानां यथा तत्तदभ्यधिकाऽऽशङ्कोत्तरत्वेनारम्भः। तद्वच्छङ्कायमिस्य शास्त्रस्यारम्भोऽस्तु। तथा हि। शब्दप्रामाण्यस्य मानान्तरदृष्टार्थकत्वेन नियमाद्धर्मे मानान्तरादर्शनान्न वेदस्य प्रामाण्यमित्यप्रामाणिकत्वाद्धर्मो न विचार्य इत्याऽऽशङ्क्यापौरुषेयत्वेन वेदस्य स्वार्थे मानान्तरानपेक्षत्वादबाधिताज्ञातफलवदर्थकत्वेन चोदनायाः प्रामाण्यम्। अर्थवादानां विधिस्तुत्यर्थकत्वेन मन्त्राणां धर्मोपयोगिस्मृतिहेतुत्वेन नामधेयानामनुष्ठेयधात्वर्थपरिच्छेदकत्वेन स्मृतीनां श्रुतिमूलकत्वेन प्रामाण्यं प्रथमाध्याये निरूपितम्। ननु वेदादिष्टसाधनत्वेन भावनाया नियोगस्य वा ज्ञानादनुष्ठानसिद्धेः किं द्वितीयेनेत्याशङ्क्य? उत्पत्तिविधीनां भेदाभेदनिर्णयं विना ऽनुष्ठानायोगात् शब्दान्तराभ्याससंख्यागुणप्रक्रियानामधेयैर्भेदः अन्यत्र त्वभेद इति निर्णयाय द्वितीयारम्भः। तत्र यजेत दद्याज्जुहुयादिति प्रकृतिशब्देन तदर्थक्रियाभेदात् तत्तक्रियानुविद्धभावनादिविधिभेदः। समिधो यजतीत्यादौ गुणविधिं विना यजत्यभ्यासादुत्पत्तिविधिभेदः। तिस्र आहुतीर्जुहोतीत्यत्र होमस्यानुवादेन संख्याविधावावृत्त्यापत्तेः संख्याविशिष्टहोमविधौ कर्मभेदः। वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनमित्यत्र द्रव्यदेवतारूपगुणभेदाद्भेदः। कुण्डपायिकर्मप्रकरणे मासमग्निहोत्रं जुहोति, मासं दर्शपूर्णमासाविति श्रुतमग्निहोत्रादि प्रसिद्धाग्निहोत्रादेर्भिन्नं प्रकरणान्तरस्थत्वात्। अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरित्यत्रापूर्वनामधेयात्सहस्रदक्षिणादियुक्तं कर्म ज्योतिष्टोमाद्भिन्नमित्युक्तम्। ननु शेषत्वस्य दुर्निरूपत्वाच्छेषत्वज्ञानं विना ऽप्याधानवदुपकारकत्वमात्रेण प्रोक्षणाद्यनुष्ठानसम्भवात्किं तृतीयेनेत्याशङ्क्य स-

मीहितविध्यन्तराधीनप्रवृत्तिविषयत्वं शेषत्वमिति लक्षणाच्च । तत्र श्रुत्यादीनां मानत्वात् उपलभ्यमानोपकाराणां प्रयाजादीनां फलवत्कर्मशेषत्वज्ञानं विना ऽनुष्ठानायोगाच्छेषशेषिभावरूपविनियोगाय तदारम्भः । तत्र कदाचन स्तरीरित्यृचो गार्हपत्योपस्थाने ऐन्द्र्येति श्रुत्या शेषत्वं बर्हिर्देवसदनं दामीति मन्त्रस्य लिङ्गाद्बर्हिर्लवनाङ्गत्वं इमामगृभ्णन्निति मन्त्रस्येत्यश्वाभिधानीमादत्ते इति वाक्येनाऽश्वरशनादानाङ्गत्वम् प्रकरणात् प्रयाजादीनां दर्शादिशेषत्वं पारिप्लवस्य राजसूयाङ्गत्वम् शुन्धध्वं दैव्यायेति मन्त्रस्य सान्नाय्यपात्रशुन्धनशेषत्वं सन्निधानात् । आध्वर्यवादिसमाख्यया पुरोडाशं प्रथयतीत्यादिमन्त्राणामाध्वर्यवादिकर्माङ्गत्वमिति निरूपितम् । नन्वेवं विनियोगज्ञानादङ्गाङ्गिनोरनुष्ठानसिद्धेः किञ्चतुर्थेनेत्याशङ्क्याऽनुष्ठानमात्रसिद्धावपि तयोरेककाले ऽनुष्ठानस्याऽङ्गवाक्यैरेकवाक्यतामापन्नप्रधानविधिरूपमहावाक्यात्मकप्रयोगविधिमन्तरेणाऽसिद्धेस्तदर्थं चतुर्थारम्भ इति सिद्धान्तितम् ? ननु व्युत्क्रमेणाऽप्यनुष्ठानसम्भवात्किं पञ्चमेनेत्याशङ्क्य साङ्गप्रधानस्य प्रयोगविधिना युगपदनुष्ठाने प्राप्ते नियतः क्रमो वाच्यः । अन्यथा किमादौ कार्यमिति चित्ताविक्षेपापत्तेः । सन्ति हि क्रमनियमं श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्याख्यानि प्रमाणानि । दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत वाजपेयेनेष्ट्वा बृहस्पतिसवेनेत्यादौ क्त्वाश्रुत्या क्रमः । अग्निहोत्रयवागूपाकयोः साध्यसाधनयोरर्थात्सामर्थ्यात्क्रमः । प्रयाजादीनां पाठाक्रमः । ज्योतिष्टोमे प्रकृतौ प्रथमो ऽग्नीषोमीयः पशुः पश्चादाश्विनग्रहानन्तरं सवनीयः । तदनन्तरमानुबन्ध्यः पशुरिति क्रमो ऽवगतः । तद्विकृतौ साद्यस्के कर्मण्याश्विनग्रहानन्तरं "सह पशुना लभते" इति सहत्वश्रुत्या प्राकृतक्रमबाधे सति क्रमाकाङ्क्षायामाश्विनग्रहानन्तरकालस्य सवनीयपशुस्थानत्वेन प्रकृतौ क्लृप्तत्वात् तत्स्थाने सहत्वश्रुत्या तस्य पशोः स्वस्थानाच्चलनायोगात्प्राथम्ये सति द्वितीयो ऽग्नीषोमीयस्तृतीय आनुबन्ध्य इति स्थानक्रमः । सारस्वतौ मेषौ भवत इति सरस्वती सरस्वानिति स्त्रीपुंदेवताकयोर्होमयोः प्रधानत्वेन मुख्ययोः क्रमो याज्यापुरोनुवाक्यायुगलयोरङ्गयोः क्रमपाठादवगतः सन् अन्येषां निर्वापादीनां क्रमं नियमयति । स्त्रिया हविर्निरूप्य पुंसो निर्वपेदिति मुख्यक्रमात् क्रमः । वाजपेये सप्तदश प्राजापत्यान् पशूनालभते इति श्रुतानां पशूनां प्रोक्षणादिसंस्कारेष्वेकैकशः कर्तव्येषु प्राथमिकसंस्कारे नियामकाभावादिच्छया

प्रवृत्तिः । अन्येषां संस्काराणां प्राथमिकसंस्कार[illegible] क्रम इति निरूपणार्थं पञ्चमारम्भ इत्युक्तम् ।

नन्वधिकारिनिर्णयफलः षष्ठोऽध्यायो नारब्धव्यः । कर्मणि निष्फलत्वेन तदङ्गीकृत्वलक्षणाधिकारासम्भवात् । स्वर्गकामो यजेतेत्यत्र प्रत्ययाभिहितभावनाया भाव्याकाङ्क्षायामेकपदोपात्तयागस्य भाव्यत्वेनान्वये सति सुखहेतुद्रव्यस्य स्वर्गशब्दार्थस्य पुत्रादेः साधनत्वेनान्वयादित्याशङ्क्य श्रेयःसाधनत्वावच्छिन्नभावनायाः प्रत्ययार्थत्वात्प्रत्ययस्य श्रेयोविशेषज्ञानं विना स्वार्थाबोधकत्वात्स्वर्गपदेनैकपदत्वं बोधकं पदमित्यङ्गीकारात् । एवमेकपदोपात्तस्वर्गो भाव्यो न यागो भिन्नपदोपात्तत्वात् क्लेशात्मकत्वाच्चेति सफलत्वात्कर्मण्यधिकारिचिन्तारम्भ इत्यभिहितम् । एवं पूर्वषट्केन प्रकृतिविध्यपेक्षितमुत्पत्तिविनियोगप्रयोगाधिकारचतुष्टयं निरूप्य विकृतिविचारार्थमुत्तरषट्कमारब्धम् । समग्राङ्गं श्रूयमाणं कर्म प्रकृतिः । यथा दर्शपूर्णमासाविष्टीनां सौर्यं चरुं निर्वपेदित्यादीनां प्रकृतिः सोमः । स यूपानां क्रतूनां दैक्षः पशुः पशुबन्धानामहर्गणानां द्वादशाह इत्यादि ।

ननु येजेतेत्यादिसामान्यश्रुत्या यागादिधात्वर्थसामान्योद्देशेन विहितानामङ्गानां प्रकृताविव विकृतावप्युपदेशेन प्राप्तेः किमतिदेशार्थकसप्तमेनेत्याशङ्क्य तत्तत्प्रकरणविशिष्टभावनाया विधेयायाः कथंभावाकाङ्क्षया विहितानामङ्गानां साक्षाद्भावनान्वयानुपपत्त्या फलशिरस्कप्राकरणिकभावनाकरणीभूतधात्वर्थान्वयस्य व्यवस्थितत्वादश्रुताङ्गविकृतीनामतिदेशं विना ऽङ्गालाभात्तदर्थं सप्तमारम्भ इत्यभाणि । ननु तर्हि सर्वप्रकृतीनां यान्यङ्गानि तेषां सर्वेषां विकृतावतिदेशापत्तिः । ननु करणस्योपकारद्वारा ऽङ्गान्वयः । न हि सर्वाङ्गानामेककरणोपकारकत्वं कचित्क्लृप्तम् । न चाक्लृप्तस्यातिदेशो ऽस्ति । अतः कथं सर्वाङ्गातिदेश इति चेत्तर्हि यस्याः कस्याश्चित्प्रकृतेरुपकारकत्वेन क्लृप्तानां धर्माणां यत्र कुत्रचिद्विकृतावतिदेशः स्यात् नियामकाभावादित्याशङ्क्य सौर्येष्टावाग्नेयेष्टिधर्माणां पशुबन्धेषु द्रव्यसाम्याद्दैक्षपशोरित्येवं द्रव्यमेकदेवतात्वसादृश्याद्तिदेशः । ऐन्द्राग्ने चरौ द्विदेवताकत्वसाम्यादग्नीषोमीयेष्टिधर्माणां देवतासामान्यस्य नियामकत्वाद्विशेषातिदेशार्थमष्टमारम्भ इत्युक्तम् । नन्वाग्नेयादिकरणस्वरूपाकाङ्क्षया ऽन्वितानामग्नये

जुष्टं निर्वपामीत्यादिमन्त्राणामवघातादिसंस्काराणां च सौर्यादिषु प्रसक्त्यभावात्कस्योहार्थं नवमारम्भ इत्याशङ्क्य भावनाया भाव्यमूलसिद्धये करणत्वमाग्नेयादीनामङ्गान्वयप्रयोजकम् नत्वाग्नेयादिस्वरूपत्वं प्रथमं सफलभावनाकाङ्क्षया ऽन्वितानामङ्गानां फलकरणत्वप्रयुक्त्यैव धात्वर्थेनान्वयस्य वक्तव्यत्वात् । फलं चापूर्वद्वारा भाव्यमिति अपूर्वमेव साक्षाद्भाव्यम् ।

तथा च यस्य फलापूर्वहेतुत्वं तस्याङ्गान्वय इति स्थिते विकृतीनामपि तद्धेतुत्वेनास्ति प्राकृताङ्गमन्त्रादिप्रसक्तिः । ततश्च सौर्ये कर्मण्युक्तमन्त्रप्राप्तौ तत्प्रकाशनापकारायाग्नये इति पदं त्यक्त्वा सूर्यायेति पदप्रक्षेपो मन्त्रोहः कृतः । गिरा गिरा च दक्षसइति साम्नि इरेति पदप्रक्षेपः सामोहः कृतः । न गिरा गिरेति ब्रूयादिति निषेधात् । व्रीहिसम्बद्धस्यावघातादेर्नीवारद्रव्येण व्रीहिपदस्य सतुषद्रव्यपरत्वं कल्पयित्वा सम्बन्धः संस्कारोहः इत्यादिनिरूपणार्थं तदारम्भ इति स्थापितम् । ननु प्राकृताङ्गानां विकृतौ लुप्तोपकाराणामननुष्ठानलक्षणबाधो न युक्तः । अतिदेशप्राप्तानां तेषामवघातादीनां कृष्णलादौ वैतुष्यादिदृष्टोपकाराभावे ऽपि अदृष्टोपकारकल्पनया ऽनुष्ठानोपपत्तेः । घृते श्रपयतीति श्रुतपाकवदिति किं दर्शमनेनेत्याशङ्क्य वैकृतभावनया करणस्योपकारमाकाङ्क्षमाणया प्रथममुपकारमाक्षिप्य तद्द्वारा ऽऽक्षिप्यमाणानामङ्गानां द्वारस्य लोप ऽन्यथासिद्धौ वा बाधः ? यथा कृष्णलेषु वैतुष्यरूपद्वारलोपादवघातलोपः । घृते श्रपणं तु श्रुतत्वाददृष्टार्थमनुष्ठीयते । तथा ऽभिचारे शरमयबर्हिषा प्रत्यक्षोपदिष्टेन वेद्यास्तरणाद्युपकारस्य सिद्धत्वात्प्राकृतानां कुशानां बाध इति सिद्धान्तितम् । नन्वनेकशेषिविधिप्रयुक्तस्य शेषस्य सकृदनुष्ठानादेवानेकशेष्युपकारकत्वं नाम तन्त्रम् । तन्न युक्तम् । दर्शाद्यर्थमनुष्ठिताङ्गानां सोमाद्युपकारकत्वोपपत्तेः । न चैकप्रयोगावच्छिन्नत्वं शेषिणा विशेषणमिति वाच्यम् । आग्नेयादीनामपि पृथक् वाक्योत्पन्नानां प्रयोगैक्यासिद्धेरिति किं तन्त्रार्थकेनैकादशेनेत्याशङ्क्य पौर्णमास्यां पौर्णमास्या यजेतामावास्यायाममावास्ययेति श्रुत्या दर्शयागत्रयस्य पूर्णमासत्रिकस्य च पृथक् प्रयोगैक्यश्रवणाद्दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्येकफलत्वश्रवणाच्चैकफलकानामेकस्मिन्प्रयोगे श्रवणात् यागे तदुद्देशेन सकृदनुष्ठितस्य प्रयाजादेरुपकारकत्वं तन्त्रं युक्तमिति राद्धान्तितम् ।

नन्वन्यशेषिविधिप्रयुक्त्या ऽनुष्ठितस्य शेषस्यानुद्दिष्टशेष्यन्तरोपकारकत्वाख्यः प्रसङ्गो न युक्तः मानाभावात्तथा च किं द्वादशेनेत्याशङ्क्य जामात्रुद्देशेन स्थापितस्य प्रदीपस्यानुद्दिष्टतरं प्रति उपकारकत्वदर्शनादग्नीषोमीयपशुमात्रोद्देशेनानुष्ठितप्रयाजादीनां तत्प्रयोगमध्यवर्तिनि पशुपुरोडाशाख्ये ऽनुद्दिष्टे ऽपि कर्मण्युपकारकत्वं युक्तमित्युक्तम्। तदेवं प्रत्यध्यायमाशङ्कानिरासेन विधिव्यापारभेदनिरूपणार्थं द्वादशाध्यायारम्भवद्वेदान्तानां ज्ञानविधिपरत्वं न युक्तम्। ज्ञेयस्य प्रत्यगभिन्नस्य ब्रह्मणः प्रत्यक्षादिविरोधादसिद्धेरित्यभ्यधिकाशङ्कानिरासार्थमध्यायचतुष्टयस्यास्य शास्त्रस्यारम्भो युक्त इति चेन्न। वाचि धेनुत्वज्ञानवदारोपितविषयस्यापि ज्ञानस्य विध्युपपत्तेः शङ्कानुत्थानादिति। एवं शास्त्रस्यानारम्भे प्राप्ते सत्येकदेश्युक्तमारम्भप्रकारमनुवदति—

इति प्राप्ते ऽत्र केचन ॥

विधेरभावाद्वेदान्ता न मानमिति शङ्किते।
आरब्धमूचुः शास्त्रं तज्ज्ञानविध्यर्थसिद्धये ॥ इति।

अयमर्थः। वेदस्य हि विधिपरत्वेन प्रामाण्यं प्राचि तन्त्रे स्थापितमतो वेदान्ता न प्रमाणं तेषु विध्यभावात्। नन्वात्मा द्रष्टव्य इत्यस्ति विधिरिति चेन्न। अस्य व्यर्थकर्मप्रधानत्वेनाविधित्वात्। तथा हि। तयोरेव कृत्यक्तखलर्था इति सूत्रेण भावे धात्वर्थे कर्मकारके च कृत्यप्रत्ययान् विधाय कृत्याश्चेति सूत्रेण विधावपि तान् विहितवान् पाणिनिः। यथा ग्रामं प्रति गन्तव्यमिति भावे कृत्यः। स च स्वातन्त्र्येण क्रियाविधायकः। क्रियाविषयं च नियोगाख्यमतिशयं कारकासमवेतं पुरुषगतं बोधयतीति यावत्। स्वाध्यायो ऽध्येतव्य इति कर्मणि कृत्यः। स च कारकं प्रति गुणत्वेन क्रियां विधत्ते। कर्मस्यातिशयवाचीति यावत्। तथा चात्मा द्रष्टव्य इत्यस्य कृत्याविधित्वे कर्मस्यातिशयो वाच्यः। न ह्यनादिकूटस्थात्मनि निर्गुणे निर्दोषे उत्पत्तिविकाराप्तिसंस्काराः सम्भवन्ति। नन्वात्मनि कल्पितमलापकर्षः संस्कारः सम्भवतीति चेत्, न। अनुपयोगात्। यथा ऽध्ययनसंस्कृतस्वाध्यायस्य सफलकर्मसूपयोगः, नैवं ज्ञानसंस्कृतात्मनः क्वचिदुपयोगं पश्यामः। अतो व्यर्थात्मकर्मकत्वात् ज्ञानमविधेयम्। नन्वस्तु तर्हि सक्तुन्यायेन ज्ञानप्राधान्यकल्पनया विधिः। तथा हि।

दर्शपूर्णमासप्रकरणे सक्तून् जुहोतीति श्रूयते इति सक्तुहोमस्तदङ्गमि-

त्यवगतम् । अङ्गानि द्विविधानि । अर्थकर्माणि संस्कारकर्माणि च । तत्र कारकमनाश्रित्य विहितानि प्रयाजादीन्यर्थकर्माणि । व्रीह्यादिकमाश्रित्य विहितानि प्रोक्षणादीनि संस्कारकर्माणि । संस्कारो द्विविधः । विनियुक्तगतो विनियोक्ष्यमाणगतश्चेति । यथा व्रीहिभिर्यजेतेति विनियुक्तव्रीह्युद्देशेन प्रोक्षणादिः । आहवनीये जुहोतीति विनियोक्ष्यमाणाग्निगत आधानसंस्कारः संस्कृताग्नेः पश्चाद्विनियोगावगमात् । अत्र च सक्तूनिति द्वितीयया सक्तुगतः संस्कारो होमकृतः प्रतीयते । स चानुपयुक्तः होमेन भस्मीभूतानां सक्तूनां विनियुक्तत्वविनियोक्ष्यमाणत्वयोरसम्भवात् । ततः सक्तूनां प्राधान्यं भङ्क्त्वा होमस्य प्राधान्यं कल्पयित्वा सक्तुभिर्जुहोतीत्यर्थकर्मता निरूपिता । तन्न्यायेनात्मनः प्राधान्यं भङ्क्त्वा आत्मना द्रष्टव्यमिति ज्ञानप्राधान्येन विधिरस्त्विति चेन्न । होमस्य कर्मापेक्षायां शब्दतः करणीभूतानां सक्तूनामेवार्थाद्भस्मीभावरूपातिशयशालितया कर्मत्ववत् ज्ञानं प्रति करणीभूतस्यात्मनो निरतिशयस्यार्थादपि तत्कर्मत्वायोगात् । अकर्मकज्ञानस्यात्यन्तासत्त्वेन विध्ययोगात्ततो विध्यभावाद्वेदान्ता न प्रमाणमित्यभ्यधिकाशङ्कायां तन्निरासार्थमिदं शास्त्रं ज्ञानविध्यर्थस्यात्मगतसंस्काररूपफलस्य सिद्धये आरब्धव्यमित्याहुरिति । स्वाध्यायोऽध्येतव्य इतिवदाप्तिरूपसंस्कारः तस्य स्वयं फलत्वान्नोपयोगापेक्षेति भावः । एवमनारम्भवादी केषांचिदारम्भप्रकारमनूद्य अपरेषामेकदेशिनामारम्भप्रकारमनुवदति—

ब्रह्मण्यमानशङ्कायामारम्भमपरे जगुः ।
ज्ञाने विधिमुपेत्यैवेति ।

वेदान्तानां विधिपरत्वात् ब्रह्मणि प्रमाणाभावशङ्कायां तन्निरासार्थं ज्ञाने विधिमङ्गीकृत्यैव विधेयज्ञानार्पितत्वाद्वयये ब्रह्मण्यपि वेदान्तानां प्रामाण्यं निरूपणीयमिति शास्त्रस्यारम्भं जगुरित्यर्थः । एवं पूर्वपक्षी मतद्वयमनूद्य दूषितवानित्युपन्यस्यति—

मते द्वे ते प्रसङ्गते ।
इत्युक्तं तत्प्रसङ्गेन सक्तुस्वर्णनयावपि ।
दर्शितौ चेति ।

तत्र तावत्प्रथम आरम्भप्रकारो नयुक्तः । लोके वेदे च कटः कर्तव्यः स्वाध्यायोऽध्येतव्य इति कर्माणि कृत्यस्य विधायकत्वदर्शनेनात्मा द्रष्टव्य इति कृत्यां न विधिरिति शङ्कानुत्थानात् । न च संस्कृतस्यात्मनो विनियोगदर्शनाच्छङ्केति वाच्यम् । अनर्थनिवृत्तिः संस्कार इत्युक्ते विनियो-

गाकाङ्क्षानुपपत्तेः। सक्तुन्यायेन ज्ञानस्य प्राधान्येन विधिसम्भवाच्च। न चात्मन्यतिशयाभावाज्ज्ञानं प्रत्यार्थिकमपि कर्मत्वं नास्ति। अकर्मकञ्च ज्ञानं नास्तीति शङ्केति वाच्यम्। मुक्त्यतिशयसत्त्वात्। तथा च कर्ता स्वस्य मुक्तये स्वात्मना ज्ञानं कुर्यादिति विधिर्युज्यते। नन्वहमित्यात्मज्ञानं प्राप्तं न तत्र विधिरिति शङ्केति वाच्यम्। प्राप्ते ऽपि ज्ञानसन्ताने पुरुषार्थाय नियमविध्युपपत्तेः। हिरण्यभरणविधिवत्। तथा हि। तस्मात् सुवर्णं हिरण्यं भार्यमित्यनारभ्याधीतं वाक्यम् तत्र हिरण्यभरणं किं क्रत्वङ्गम्? उत तदङ्गहिरण्यस्य संस्कारकम्? अहो पुरुषार्थमिति सन्देहे विधिवाक्ये फलाश्रुतेरङ्गसंस्कारो वेति प्राप्ते कस्य चित्प्रकरणे ऽनाम्नानान्नाङ्गत्वं नाऽपि जुहूद्वारा पर्णताया इव धारणस्य स्वसंस्कार्यहिरण्यद्वारा क्रत्वङ्गता। जुह्वा इव सुवर्णस्य लोके ऽपि सत्त्वेन क्रत्वव्यभिचाराभावात्। अनङ्गद्रव्यसंस्कारस्य च निष्फलत्वेनायोगात्। सुवर्ण एव भवति दुर्वर्णो ऽस्य भ्रातृव्य इत्यबाधितार्थवादिकफलाय सुवर्णभरणं रागतः पक्षे प्राप्तं नियम्यते इति राद्धान्तितम्। तद्वदात्मनि ज्ञानाभ्यासो नियम्यते मोक्षाय। यद्वा आत्माऽनात्मप्रत्ययेषु साधारणस्य मनस आत्मप्रत्ययेष्वेव नियमः परिसंख्या वा भविष्यति। मनसा ऽऽत्मैव द्रष्टव्य इति। एवं विधिसंभवाच्छङ्कानुत्थानात्तेषां पूर्वपक्षो ऽसंङ्गत इत्यर्थः। अधुना सिद्धान्तो ऽप्यसङ्गत इत्याह—

विधिज्ञानं लौकिकालौकिकात्मनाः।
नेत्यनारम्भवाद्युक्तौ इति।

यदुक्तं बन्धमूलाविद्यानिवृत्तिसंस्कारायात्मकर्मकज्ञानविधिरिति। तत्र न तावल्लौकिकसंसार्यात्मज्ञाने विधिः। अहमिति ज्ञानस्य नित्यप्राप्तत्वात् ततो मुक्त्ययोगाच्च। नाप्यलौकिकात्मज्ञाने विधिरप्रसिद्धत्वात्। यथा किञ्चिदुद्दिश्य द्रव्यत्यागत्वरूपयागसामान्यप्रसिद्धौ तदालिङ्गितव्यक्त्यन्तरस्य बुद्धिस्थस्य विध्यर्थनियोगादिविषयत्वबोधो भवति। नैवमलौकिकात्मज्ञानत्वावच्छिन्नं प्रसिद्धम्। तस्मादत्यन्ताप्रसिद्धत्वान्न विषयत्वबोधः।

एतेन द्वितीयो ऽप्यारम्भप्रकारो निरस्तः। विधेयज्ञानाप्रसिद्ध्या विध्यङ्गीकारेणारम्भसमर्थनायोगादित्येवमनारम्भवादिना पूर्वपक्षे कृते सति पुनरारम्भमेकदेशी शङ्कते इत्याह—

इदं सर्वं मदात्मकम्।
इति शब्दोत्थविज्ञाने विधिरुत्थापितः पुनरिति॥

द्वितीयारम्भवादिनेति शेषः । यथा रूपविषयकाच्चक्षुषो रूपस्पृष्ट-द्रव्यस्यापि प्रसिद्धिः, एवं विधिवराद्वेदान्तवाक्याद्विधिस्पृष्टत्वेनालौकिकात्मनः प्रसिद्धत्वसम्भवादिदं सर्वं यदयमात्मेति शब्दोत्थं ज्ञानं परोक्षं तद्विषयकं प्रसिद्धमिति तत्र विधिर्युज्यते इत्यर्थः । श्रुत्यर्थस्तु यदिदं सर्वमित्यनात्ममात्रं प्रसिद्धमुद्दिश्यायमात्मेति बोध्यते । एवं यश्चोरः स स्थाणुरितिवत्सर्वस्य बाधाददद्वितीय आत्मेति । नन्वस्मिन् वाक्यार्थे तज्ज्ञाने वा न विधिर्युक्तः । अस्मिन् वाक्ये विधिप्रत्ययाश्रवणादित्याशङ्क्याश्रुतो ऽपि कल्पित इति सदृष्टान्तमाह इदम्—

सर्वं यदयमात्मेति वाक्ये चेन्न श्रुतो विधिः ।
ज्ञातव्याख्यः प्रयोगाय कल्प्यः स्यात् पिष्टयागवत् ॥ इति ।

पूषा प्रपिष्टभाग इत्यत्र प्रपिष्टो भागो यस्येति स्वस्वामिभावरूपो द्रव्यदेवतयोः सम्बन्धः कालत्रयानवच्छिन्नो भाति । कालवाचिपदाभावात् । स च तदुद्देशेन त्यागरूपक्रियां कल्पयति । तां विना द्रव्यस्य देवस्वत्वायोगात् । सा च स्वप्रवर्तकं विनियोगं कल्पयति । तं विना प्रवृत्त्ययोगात् । तदनन्तरं यष्टव्यमिति पदं कल्प्यते । नन्वर्थज्ञानार्थं पदं पदात्पूर्वमेव क्रियानियोगयोर्ज्ञाने किं पदेन कृत्यमिति चेत्सत्यम् । न तयोर्ज्ञानायेदं विधिपदम् । किन्तु साङ्गप्रधानक्रियाप्रयोगज्ञानाय प्रधानविधिरङ्गविध्येकवाक्यतापन्नः प्रयोगं ज्ञापयतीत्यङ्गीकारात् । प्रकृते चेदं सर्वमिति वैदिकपदार्थसंसर्गो नियोगं कल्पयति । वैदिकार्थसंसर्गमात्रस्य साक्षात्परम्परया वा नियोगाविनाभावात् । स च नियोगः स्वाविनाभूतां क्रियां कल्पयति । तां विना सिद्धार्थसंसर्गमात्रान्नियोगानिष्पत्तेः । नन्वत्र का क्रिया कल्पनीया ? न च क्रियासामान्यं कृतिरिति सा कल्प्यते इति वाच्यम् । तथा सत्यनात्मप्रपञ्च आत्मा कर्तव्य इति स्यात् । न हि तच्छक्यं वक्तुम् । न हि सुनिपुणो ऽपि घटं पटयितुं शक्नोति । किञ्च कृतौ विधेयायामङ्गानि अक्लृप्तानि कल्पनीयानि क्लृप्तशमादीनां शान्तो दान्तः पश्येदिति ज्ञानाङ्गत्वात् । न च तर्हि ज्ञातव्य इति कल्प्यते इति वाच्यम् । अनात्मप्रपञ्चस्य सत्यत्वेन तत्प्रमायां सत्यामात्मत्वज्ञानायोगात् । प्रपञ्च आत्मेति ज्ञाने ऽपि तस्य योषिदग्निरिति ज्ञानवद्भ्रान्तित्वेनानर्थप्रपञ्चनिवर्तकत्वायोगाच्च । अतो निष्फलत्वाज्ज्ञानमपि न विधेयमिति । उच्यते । स्थाणुज्ञानेन चोरस्येवात्मज्ञानेनानात्मनः कल्पितत्वाङ्गीकारान्निवृ-

त्तिर्युज्यते। अतः सर्वमात्मेति ज्ञातव्यमिति विधिः परिणम्यते इत्यर्थः। ननु विधिकल्पनात्प्रागेव सत्यादिवाक्याज्ज्ञानस्य जातत्वात् सिद्धे ज्ञाने कथं विधिरित्यत आह—

सत्यादिवाक्यजज्ञानतुल्ये ज्ञानान्तरे विधिः।
अधीतिकालसंसिद्धमन्त्रार्थस्मरणे यथा॥ इति।

मन्त्राः किमदृष्टार्था उत दृष्टार्था इति सन्देहे मन्त्राणां सिद्धद्रव्यादिबोधकत्वेन प्रवृत्तिफलकत्वायोगादनुष्ठानोपयोगिद्रव्यादिज्ञानस्य ब्राह्मणवाक्यैरपि सिद्धेरदृष्टार्था इति प्राप्ते श्रुत्यादिभिर्विनियोगात्तेषां प्रधानापूर्वनिष्पादकत्वेन फलवत्त्वावगतौ किंद्वारा मन्त्रा अपूर्वनिष्पादका इत्याकाङ्क्षायामनुष्ठापकः प्रयोगविधिरङ्गभूतानां मन्त्राणां स्वापेक्षितमनुष्ठानोपयोग्यर्थप्रकाशनं दृष्टमेव। द्वारं कल्पयित्वा मन्त्रैरेव तदर्थाः स्मर्तव्या अनुष्ठानायेति नियमयतीति ब्राह्मणवाक्यव्यावृत्तिरिति दृष्टार्था मन्त्रा इति स्थापितम्। तत्राध्ययनकाले मन्त्रार्थज्ञाने सिद्धे ऽप्यपूर्वोपयोगित्वेन ज्ञानान्तरे यथा विधिरेवं मन्त्रे ऽपीत्यर्थः। ननु तत्र प्रयोगविधिबलात् ज्ञानान्तरे विधिर्युक्तः। अत्र तु तदभावान्न ज्ञानान्तरे विधिरित्याशङ्क्याऽत्रापि प्रयोगविधिरस्तीत्याह—

शमाद्यङ्गैर्विमोक्षार्थी वेदान्तैर्ज्ञानमाचरेत्। इति।

ज्ञानं कुर्यादित्युत्पत्तिविधिस्तावत्कल्पितः। ब्रह्मणे औपनिषदत्वश्रुत्या वेदान्ताः करणत्वेन संबध्यन्ते। स चोत्पत्तिविधिः स्वप्रकरणस्थशमादीनङ्गत्वेन गृह्णन् विनियोगविधिर्भवति। पुनः स एव विधिरभयं ब्रह्म भवति य एवं वेदेत्याद्यर्थवादादिकमोक्षकामिनो रात्रिसत्रन्यायेन मदिष्टसाधनमिदं कर्मेति कर्मस्वामित्वरूपाधिकारं बोधयन् अधिकारविधिर्भवति। तथा हि प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्तीत्यत्रापूर्वत्वादुपेयुरिति। विधित्वे सिद्धे सत्यधिकार्याकाङ्क्षायां विश्वजिन्न्यायेन स्वर्गकामो ऽधिकारी कल्प्यते इति प्राप्ते फलमात्रेयो निर्देशादश्रुतौ त्वनुमानं स्यादिति सिद्धान्तितम्। प्रतितिष्ठन्तीत्यर्थवादश्रुतफलं गृहीत्वा प्रतिष्ठाकामो रात्रिसत्रं कुर्यादिति विधिः परिणम्यते। विश्वजिता यजेतेत्यत्र तु फलार्थवादाश्रवणात्सर्वसाधारणः स्वर्गकामो ऽधिकारी कल्पित इति वैषम्यम्। स चाधिकारविधिः साङ्गं कर्मानुष्ठापयन् प्रयोगविधिः सम्पद्यत इत्यस्ति प्रयोगविधिरित्यर्थः। तथा च विधिसम्भवात्तदपेक्षिते ब्रह्मणि वेदान्तप्रामाण्यनिरूपणाय शास्त्रार-

ग्मसिद्धिरिति भावः । अनारम्भवादी दूषयतीत्याह—

इत्येवं विधिमुत्थाप्य वैरूप्यात्तं न्यवारयत् । इति ।

तं विधिं तज्ज्ञानं वेत्यर्थः । वैरूप्यं श्लोकद्वयेन स्फुटयति—

गुणप्रधानता सिद्धसाध्यता ज्ञातता तथा ।
अज्ञाततेति वैरूप्यमपूर्वब्रह्मधीविधौ ॥
वि[illegible]त्वाद् गुणत्वादिकमात्मनः ।
अपूर्वत्वेन मेयत्वात्प्राधान्यादित्रयं भवेदिति ॥

ब्रह्मात्मा ज्ञातव्य इत्यपूर्वस्य मानान्तराज्ञातस्य ब्रह्मात्मनो ज्ञानविधौ वैरूप्यं स्यात् । तथा हि । किं यदज्ञातब्रह्मसाधकं ज्ञानं तदेव विध्यर्थनियोगविषयतया विधेय उत ज्ञानान्तरम् ? आद्ये ब्रह्मणोऽपूर्वतया प्रमेयत्वेन ज्ञानजन्यातिशयशालित्वात्प्राधान्यं साध्यातिशयविशिष्टत्वात्साध्यत्वमाज्ञातत्वं चेति त्रयं प्राप्तम् । एवं यत् ज्ञानापेक्षया प्राधान्यं तज्ज्ञानं विधेयं प्रति विषयतया कारकत्वात् गुणत्वं प्राप्तं यत् ब्रह्मज्ञानं तत्कर्तव्यमिति विधानायोद्देश्यत्वात्सविषयस्य ज्ञानस्य विधेः प्रागेव ज्ञातत्वं वाच्यम् । अज्ञातस्योद्देश्यत्वायोगात् । विषयस्य विशेषणत्वात् । स्वविशिष्टज्ञानज्ञानात्पूर्वं ज्ञातत्वं वक्तव्यम् । ज्ञातत्वं नाम सिद्धज्ञानविशिष्टत्वम् । तथा च ब्रह्मणो विधेयज्ञानापेक्षया सिद्धज्ञानविशिष्टत्वेन कारत्वेन वा सिद्धत्वं ज्ञातत्वं चेति पूर्वत्रयविरुद्धं धर्मत्रयं प्राप्तम् तदेवमज्ञातब्रह्मसाधकज्ञानस्यैव विधेयत्वे मिथो विरुद्धत्रिकद्वयरूपं वैरूप्यं दुर्वारं स्यादित्यर्थः । ननु प्रथमं ज्ञानमात्मा ज्ञातव्य इति वाक्योत्थं ब्रह्मात्मार्थसाधकं ज्ञानान्तरं विधेयमिति न वैरूप्यमिति चेन्न । एकमेव वाक्यं पूर्वमर्थपरं पश्चाद्विधिपरमित्ययोगात् । ननु वैरूप्यं न दोषः अन्यथा व्रीहीन् प्रोक्षतीति संस्कारविध्युच्छेदापत्तेः । व्रीहीणां प्रोक्षणं प्रति कारकत्वात् गुणत्वं भाति उद्देश्यत्वात् सिद्धत्वं ज्ञातत्वं च । एवं तज्जन्यातिशयत्वात् प्राधान्यं साध्यत्वञ्च भातीति अज्ञातातिशयत्वादज्ञातता चेति वैरूप्यभानादिति चेन्न । व्रीहीनिति द्वितीयाया अतिशयवैशिष्ट्यवाचित्वाभावात् । अतो द्वितीयया तेषामीप्सितत्वेन कारकत्वकथनाच्छाब्दज्ञाने गुणत्वादित्रयमेव भाति । ईप्सितत्वान्यथानुपपत्त्या ऽतिशयभाने तद्वत्त्वेन प्राधान्यादित्रयमार्थिकमित्यविरोधः । प्रकृते तु व्रीहिवत् ब्रह्मणः प्रमाणान्तरसिद्धत्वाभावात् ज्ञानविधिवाक्येनैव ज्ञानशेषत्वेन प्रतिपाद्यमेकस्मिन्नेव शाब्दबोधे शेषत्वेन गुणत्वादिभानं प्रतिपाद्यत्वेन प्राधान्या-

दिभानमिति विरोधः। ननु विधिप्रत्ययशून्यैः सत्यादिवाक्यैः ब्रह्म प्रतिपाद्य पश्चाद्विध्येकवाक्यतया ब्रह्मज्ञानविनियोगः प्रतिपाद्यते;इति न वैरूप्यमिति चेन्न। त्वया विधिशून्यवाक्यस्य बोधकत्वानङ्गीकारात्। अङ्गीकारे वा, फलवदज्ञाताबाधितपरमानन्दनिर्विशेषप्रत्यग्ब्रह्मप्रतिपादनेन कृतकृत्यानां वाक्यानां विध्येकवाक्यत्वायोगात्। ननु वाक्यात्परोक्षज्ञानं जायते,तद्बन्धमूलाविद्यां न निवर्तयतीति निष्फलम्। ततः सत्यादिवाक्यानां मोक्षहेतुसाक्षात्कारे विध्येकवाक्यत्वं युक्तमित्यत आह—

साक्षात्कारे तथा ज्ञानसन्ततौ दूषितो विधिः।
साक्षात्कारो विना मानं दृष्टोऽभ्यासान्न हि क्व चित्॥ इति।

वेदान्यमानागोचरे ब्रह्मणि साक्षात्कारे विधिर्न युक्तः करणाभावात्। वेदस्य त्वया साक्षात्कारकरणत्वानङ्गीकारात्। ननु वेदवाक्यादवगते ब्रह्मणि साक्षात्काराय ज्ञानसन्ततिर्विधीयते इति चेन्न। ज्ञानसन्ततिविधेरश्रवणात्। तथा हि। न तावदात्मेत्येवोपासीतेति सन्ततिविधिः। तत्र लोकसिद्धाहम्प्रत्ययसन्ततिमुपासीतेत्यनूद्य आत्मेत्येवेत्यद्वयात्ममात्रस्य प्रतिपादनात्। तदुक्तम्—

यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्।
तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणम्॥ इति।

तद्वृत्तं तत्पदं नापि पश्येदिति सन्ततिविधिः। सन्तत्यभानात्। नापि निदिध्यासितव्य इति सन्ततिविधिः। तस्याद्वयात्मप्रकरणस्थत्वेन विधिपरत्वायोगात्। अस्तु वाऽवान्तरतात्पर्येण निदिध्यासनविधिः। नैवम्। न तावन्मात्रं साक्षात्कारकारणं; ध्यानस्याप्रमाणत्वात्। न हि प्रमाणं विनैव ध्यानमात्रादात्मसाक्षात्कारः प्रमारूपः क्व चिद्दृष्टः। क्व तर्हि ध्यानविधेरुपयोगः? एकाग्रतायामिति ब्रूमः। सूक्ष्मार्थसाक्षात्कारे हि चित्तस्य तदन्याकारत्वं प्रतिबन्धकं तदभावश्चित्तस्य प्रसाद एकाग्रतेति च गीयते। सा ध्यानसाध्यसाक्षात्कारे निमित्तम्। तथा च श्रुतिः। ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमान इति विशुद्धचित्तो ध्याता चित्तप्रसादेन तमौपनिषदं निष्कलमात्मानं गुरूपदिष्टमहावाक्यादेव साक्षादनुभवति। ततो मानान्तराग्राह्यत्वादित्यर्थः। अतो विध्यभावान्न विधिपरा वेदान्ताः। किञ्च यत्तवाभिमतं विधिपरैरेव वेदान्तैः ब्रह्मात्मानं साधयिष्यामीति शास्त्रारम्भ इति, तन्मनोरथमात्रमित्याह—

वेदान्ता विधिनिष्ठाश्चेद्ब्रह्माभावः प्रसज्यते । इति ।

एकस्योभयार्थत्वायोगादिति भावः । ननु शाल्यर्थं कुल्याः प्रणीयन्ते ताभ्यश्च पानीयं पीयते, उपस्पृश्यते चेति लोके एकस्यानेकार्थत्वं दृष्टमित्यत आह—

तात्पर्यापेक्षशब्दस्य ह्यर्थत्वासम्भवात्स्फुटमिति ।

अस्तु कुल्यादेरेकस्य स्थायिनो ऽन्यानपेक्षस्यानेकार्थत्वम् । वाक्यस्य त्वेकस्याध्रुवस्य तात्पर्यसापेक्षस्य तन्न सम्भवति । उभयत्र तात्पर्ये वाक्यभेदापत्तेरित्यर्थः । ननु समिधो यजतीत्यादीनां पञ्चानां वाक्यानां पञ्च यागास्तेषां क्रमश्चेति ह्यर्थत्वं दृष्टमित्याशङ्क्याह—

प्रयाजा एव चोद्यन्ते शब्दैरर्थात् क्रमप्रमेति ।

वाक्यैर्यागा एव विधीयन्ते तेषामङ्गत्वादेकेन कर्त्रा ऽनुष्ठापकः प्रयोगविधिरभङ्गमविहितमपि क्रमं कल्पयन् यागानां बोधकत्वेन सन्निहितानां वाक्यानां पाठक्रमं बोधक्रमं वा तेष्वारोप्यानुष्ठापयति । तथा चैकस्य कर्तुर्युगपदनेकेषां प्रयोगानुपपत्त्या क्रमप्रमावाक्यैरित्यर्थः । क्रमो नाम कश्चिन्नास्तीति वदन्तं प्रति प्रसङ्गात्तत्स्वरूपमाह—

अर्थान्तरं क्रमो यद्वा ह्यर्थाः कालाद्युपाधिकाः । इति ।

क्रमिकार्थद्वयवर्तिपदार्थान्तरं क्रमः । स च संयोगवद्व्यासज्यवृत्तित्वान्नैकत्र प्रतीयते । ननु द्वितीयस्यासतः आश्रयत्वं कथमिति चेन्न । अत्यन्तासत्त्वाभावात् । अन्यथा घटत्वादेर्भाविघटे भानं न स्यात् । यद्वा पूर्वकालावच्छुत्तरकालस्थः पदार्थ एव कालोपाधिकः सन् कालिकक्रमः कालस्य पूर्वोत्तरत्वमनिर्वाच्यम् । तत्स्वरूपमेव एकादिगवस्थितार्था एव दैशिकः क्रम इत्यर्थः । तस्मात्प्रमेयभेदे वाक्यभेदो दुर्वार इति स्थितम् । ननु भूयाद्विधिपराद्वाक्यात् ब्रह्मासिद्धिः; किन्तु क्रमवदर्थादित्याशङ्क्य निषेधति—

ननु ज्ञाने नियोगो ऽपि ब्रह्माख्यविषयं विना ।

न युक्तो ऽतो ब्रह्मसिद्धिरर्थाच्चेन्नानपेक्षते ॥ इति ।

अर्थात्सविषयज्ञानविध्यनुपपत्तेरित्यर्थः । विधेयज्ञानस्य विषयानपेक्षत्वे दृष्टान्तमाह—

वाचि धेनुत्वसन्दृष्टेस्तदभावे ऽपि दर्शनादिति ।

विषयाभावे ऽपीत्यर्थः । कस्तर्ह्यध्ययनविध्युपात्तानां वेदान्तानामर्थ इति चेदुच्यते । सर्ववेदस्य विधिपरत्वेन पूर्वतन्त्रे निरूपितत्वान्मुमुक्षुणा मेनायाहं ब्रह्मेत्युपासितव्यमिति वाक्यमेव वेदान्तानामर्थः ।

न प्रत्यग्ब्रह्मैक्यम्। मानान्तरविरोधेनान्यपराद्वाक्यात् तदसिद्धेरिति। तथा कार्ये विधेश्च सर्वात्मना निरूपितत्वादनारम्भ इत्युपसंहरति। ब्रह्माभावादतः शास्त्रमनारभ्यमिति। शास्त्रस्याऽऽरम्भं वक्तुं सिद्धान्ती विकल्पयति—

वेदराशेः कार्यगत्वं किं व्युत्पत्त्योत सद्गिरा।
व्युत्पत्तिर्भाविनी तेऽग्रे सतां गीस्तु विचार्यताम्॥ इति।

किं लोके सर्वेषां शब्दानां कार्यान्वितार्थव्युत्पत्त्या वेदस्य सर्वस्य कार्यपरत्वमुच्यते उत सतां जैमिन्यादीनां वचनबलेन? तत्राद्ये तव व्युत्पत्तिः समन्वयसूत्रे सिद्धार्थे भविष्यति। तथा निरूपयिष्यमाणत्वात्। द्वितीये सतां वचनं सर्ववेदस्य कार्यपरत्वबोधकं विचार्यतामित्यर्थः। तादृशं वचनं नास्तीति भावः। नन्वथातो धर्मजिज्ञासेति साङ्गवेदाध्ययनानन्तरं धर्मो विचार्य इत्युक्त्वा वेदस्य कार्यपरत्वं भातीत्याशङ्क्य सूत्रतात्पर्यं तत्रत्यं पूर्वपक्षमाह—

अदृष्टार्थोऽधीतिविधिर्वेदो न स्यान्निरर्थकः।
मानाभावादतो धर्मो न विचार्य इतीरिते॥ इति।

धर्ममीमांसा कर्तव्या न वेति धर्मे प्रमाणं भावाभावाभ्यां सन्देहे नेति तावत्प्राप्तम्। तथा हि। धर्मे मीमांसा नाम प्रमाणविचारः। न हि धर्मे प्रत्यक्षादिकं मानम्, नापि वेदः। निरर्थकत्वात्। तथा हि। किमध्ययनविधिर्दृष्टार्थः उताऽदृष्टार्थ? इति संशये वाक्यादर्थबोधस्य दृष्टस्य सिद्धये विध्ययोगादध्ययनकरणया भावनया विध्यर्थशब्दभावनाभाव्यया भाव्यमदृष्टमिति युक्तम्। यद्यपि तददृष्टं स्वाध्यायोऽध्येतव्य इति कर्मणि कृत्येन स्वाध्यायगतं भाति संस्कारादिरूपं, तथाऽपि व्रीहीणामिव स्वाध्यायस्य सफलकत्वङ्गत्वे मानाभावात्स्वतो निष्फलत्वात्सक्तुन्यायेन कर्मकारकप्राधान्यं भङ्क्त्वा ऽर्थवादस्थघृतकुल्यादिकामस्वाध्यायेनाधीयीतेति कर्तृस्थस्वतन्त्रफलापूर्वमेव भाव्यम्। नन्वहरहः स्वाध्यायमधीयानो यदृचो ऽधीते पयसः कुल्या अस्य पितॄन् स्वधा अभिवहन्ति यद्यजूंषि घृतस्येत्यादिना ब्रह्मयज्ञाध्ययनस्य फलार्थवादः श्रुतो न ग्रहणाध्ययनस्येति चेत्सत्यम् अध्येयत्वसाम्यात् ग्रहणाध्ययनस्यापि तत्फलं कल्प्यते। तस्मादध्ययनस्य होमवददृष्टार्थत्वात्तत्र स्वाध्यायस्य सक्तुवाक्विनियुक्तस्याध्ययननिर्वर्तकत्वेन कृतकृत्यस्य स्वार्थे विवक्षाशून्यत्वान्निरर्थकत्वेनाप्रमाणात्ततो मानाभावाद्धर्मो न विचार्य इति प्राप्ते सिद्धान्तमाह—

जैमिनिः सूत्रयामास जिज्ञासां धर्मगोचराम् ।
सफलक्रत्वपेक्ष्यस्य स्वार्थबोधस्य कारणम् ॥
वेदो ऽतो नियमाधीत्या संस्कार्यो वा ऽऽप्य एव च ॥ इति ।

एवं विवक्षितार्थत्वाद्वेदो मानमिति स्थितमिति धर्मो विचार्यः वेदप्रमाणकत्वात् । तथा हि । अध्येतव्य इति स्वाध्यायगतातिशय एव नान्यः । स चाध्ययनस्याक्षरावाप्तौ नियमविधेर्दृष्टानुविद्धाऽदृष्टार्थत्वात् । अवाप्तिर्नाम स्वाधीनोच्चारणक्षमत्वमम् । अध्ययनस्य दृष्टफलसंस्कारस्तु विधिसामर्थ्याल्लभ्यते । स चापूर्वरूपो विध्यर्थ इति कार्यवादिनः । अस्माकं तु कर्मार्थकतव्यप्रत्ययेन विधिना कर्मविशेषसमर्पकस्वाध्यायपदेन सह बोधकेन बोधकं पदमिति व्युत्पत्त्या तदेकपदेन समानपदोपात्तस्वाध्यायरूपेष्टं प्रति साधनत्वमध्ययनगतं बोध्यते । अवाप्तिसंस्काराभ्यां विशिष्टत्वेन स्वाध्यायस्य साध्यत्वोपपत्तिरिति मतम् । भावनावादिनां कर्मार्थकतव्यप्रत्ययेन भावनाविध्यनुपपत्त्या भाव्यमपूर्वं सिध्यत् कर्मणि सिध्यति । स चाध्ययनसंस्कृतः स्वाध्यायः आधानसंस्कृताग्निवत् क्रतूपकारकः । न चोपकारकत्वे मानाभावः ।क्रतुविधीनामनुष्ठेयबोधं विना ऽनुपपत्त्या बोधकस्वाध्यायस्योपकारकत्वावगमात् । ननु तर्हि स्वाध्यायमात्रस्यैव बोधकत्वादुपकारकत्वमागतं न संस्कृतस्येति चेन्न । अध्ययनविधिसामर्थ्येन संस्कृतस्वाध्यायजन्यबोधस्यैव क्रत्वपूर्वहेतुत्वकल्पनात् । असंस्कृतवेदस्यापूर्वोपयोगित्वे ऽध्ययनविधिवैफल्यापत्तेः । न च सक्तुन्यायेन तत्साफल्यं यथाश्रुतिस्वाध्यायस्य सफलक्रत्वपूर्वहेत्वनुष्ठानानुकूलदृष्टाबाधितार्थबोधकारणस्य प्राधान्येन दृष्टद्वारा व्रीह्यादिवत् संस्कार्यत्वेनावाप्यत्वेन च भाव्यत्वसम्भवे श्रुतिभङ्गायोगात् । तस्मात्सफलार्थबोधहेतुत्वाद्वेदो विवक्षितार्थत्वेन प्रमाणमिति तत्प्रमाणकत्वाद्धर्मस्य विचारः सालम्बनः कर्तव्य इति स्थितम् । तथा चाऽस्य सूत्रस्य धर्मे प्रमाणं वेद इत्यत्र तात्पर्यम । नैतावता कृत्स्नस्य वेदस्य धर्मपरत्वं ज्ञातुं शक्यम् । न हि नीलरूपे चक्षुः प्रमाणमित्युक्ते चक्षुषस्तदेकप्रमेयता सिध्यति । पीतादेरपि तत्प्रमेयत्वात् । अतो धर्मशब्दाद्वेदार्थैकदेश एव विचारितो न सर्ववेदार्थ इति गम्यते । ननु धर्माय वेदवाक्यानि विचारयेदिति भाष्यकारवचनात्सर्वो वेदार्थो विचारित इति भातीत्याशङ्क्याह—

सामान्यतः प्रसिद्धिं च विवादं च विशेषतः ।

श्रेयःसाधनधर्मस्य भाष्यकारो ऽप्यभाषत ॥
पूर्वतन्त्रे च वेदार्थः सम्पूर्णो न विचारितः ।
इति प्रतीयते यस्माद्धर्मे यत्नो महान् कृतः ॥ इति ।

अयमर्थः । धर्मो नाम कर्तुः कालान्तरभाविश्रेयःसाधनो लौकाऽप्यप्रमाणाभासेन सामान्यतः प्रसिद्धः । स किमग्निहोत्रादिरुत चैत्यवन्दनादिरिति विशेषतो विवादे सत्याद्ये मानाभावात् द्वितीयस्य बुद्धादिवाक्यसिद्धत्वाददृष्टार्थमध्ययनं कृत्वा गुरुकुलान्निवर्तितव्यं विचारयितव्याभावादिति धर्मविषय एव पूर्वपक्षो दर्शितः । अथातो धर्मजिज्ञासेति वेदस्यार्थविवक्षां विचारस्यावसरं च दर्शयन् सूत्रकारो ऽपि धर्मो विचार्य इत्यग्निहोत्रादिरूपधर्मस्यैव विचारं सिद्धान्तितवान् । एवं सूत्रभाष्यकृतोर्धर्मे यत्नाधिक्यदर्शनात्सर्वो वेदार्थो न विचारित इति निश्चीयते । न च धर्मान्यवेदार्थाभावात् धर्मे विचारिते सर्वं विचारितमिति वाच्यम् । धर्मवत् ब्रह्मणो ऽप्यज्ञाताबाधितफलरूपस्य वेदात्प्रतीतेः । अतो धर्माय वेदवाक्यानीति भाष्यं वेदैकदेशविषयमिति भावः । धर्मस्यैव वेदार्थत्वे सूत्रमन्यथा स्यादित्याह—

विवक्षितार्थो वेदो ऽतो वेदार्थस्तु विचार्यताम् ।
इति ब्रूयाद्यदा धर्मः सर्ववेदस्य गोचरः ॥ इति ।

वेदार्थजिज्ञासेति सूत्रं जैमिनिः कुर्यादित्यर्थः । फलितमाह—

हेतुं वेदविवक्षां च कुर्वन् धर्मं च सूत्रयन् ।
अस्त्वन्यो ऽपि च वेदार्थ इति वक्त्यत्र जैमिनिरिति ॥

अत्र प्रथमसूत्रे द्वादशलक्षण्यां धर्मो विचारितो न ब्रह्मेत्यविवादम् । तथा चाथाध्ययनानन्तरमतः वेदस्य विवक्षितार्थत्वाद्वेदार्थो विचार्य इति वक्तव्ये धर्मो विचार्य इति वदन् अन्योपि वेदार्थो ऽस्तीति सूचयति जैमिनिः । तस्यायं भावः । यद्यहं वेदार्थो विचार्य इति प्रतिज्ञां कुर्यां तदा ऽग्रे मया धर्मस्यैव विचार्यमाणत्वाद्धर्मादन्यो वेदार्थो नास्तीति मन्दबुद्धीनां भ्रमः स्यात्स माभूदिति । ननु धर्मो विचार्य इति प्रतिज्ञायां वेदस्य विवक्षितार्थत्वादिति हेतुरसङ्गत इति धर्मपदं वेदार्थपरमिति चेन्न । फलवदर्थबोधकत्वेनाध्ययनविधिभाव्यवेदस्य स्वार्थे तात्पर्यसत्त्वेन प्रमाणत्वाद्धर्मस्यापि तदर्थत्वात् विचारः कर्तव्य इत्यन्वयसम्भवात् । यद्यप्यध्ययनानन्तरं सर्ववेदार्थविचारस्यावसरस्तथापि धर्मस्यैव

श्रेयःसाधनत्वेन लोके प्रसिद्धत्वात्प्रायेणाध्येतॄणां श्रेयोऽर्थित्वान्मुमुक्षाया दुर्लभत्वात् तस्मिन्नवसरे धर्मो विचार्य इत्युक्तमित्यविरोधः । एवं प्रथमसूत्रतात्पर्यालोचनया पूर्वतन्त्रे सर्ववेदार्थविचारो न कृत इति सिद्धम् । तथा द्वितीयसूत्रेऽपि चोदनां धर्मलक्षणं वदन्नचोदनाभागैः सिद्धलक्ष्यमसूसुचदिति । अयमर्थः । चोदनालक्षणोऽर्थो धर्म इति धर्मस्य लक्षणप्रमाणपरं द्वितीयसूत्रं चोदनागम्यत्वं लक्षणं मुखतः । अर्थाद्धर्मे प्रमाणं चोदनेत्युक्तमिति प्राभाकराः । मुखतः प्रमाणमुक्तमर्थाल्लक्षणमिति भट्टाः । वेदो हि चोदनाचोदनात्मकः प्रत्यक्षः । तत्र चोदनां धर्मस्य साध्यरूपस्य लक्षणं वदन्नचोदनाभागस्य सिद्धं प्रतिपाद्यमस्तीति सूचितवानिति । अन्यथा सर्ववेदस्य धर्मपरत्वे वेदलक्षणो धर्म इति सूत्रं स्यादित्याह—

अन्यथा लक्षणं वेदं ब्रूयाद्धर्मस्य जैमिनिः ।
इत्युक्तं तत्प्रसङ्गेन भावनापि निरूपिता ॥ इति ।

विवरणे इति शेषः । ननु चोदनापदं सर्ववेदस्य धर्मपरत्वं नास्तीति सूचनार्थं न भवति ; किन्तु धर्मस्य फलवत्त्वसूचनार्थम् । तथा हि । धर्मो नामार्थभावना तद्भाव्यकशब्दभावनावाचि लिङादिमद्वाक्यं चोदना । तत्र शब्दभावना नाम लिङादिशब्दनिष्ठः प्रेरणाख्यो व्यापारः शब्दो वा तद्गता शक्तिर्वा । अर्थभावना ऽभिधाख्या यज्ज्ञानात् पुरुषः प्रवर्तते, तस्याः शब्दभावनायाः स्तुतिनिन्दाज्ञानाङ्केन विधिशब्दजेन ज्ञानेन प्रवृत्तिं भावयेदित्याकारः । सा च प्रवृत्तिराख्यातत्वाकारेण लिङाद्यभिधया तत्तदङ्गकयागादिकरणिकार्थभावनेत्युच्यते । तस्यां भाव्याकाङ्क्षायामेकपदोपात्तो धात्वर्थो यागादिर्भाव्य इति शङ्का स्यात् । तथा च निष्फलो धर्मोऽननुष्ठेय आपद्येत । तत्र जैमिनिश्चुद प्रेरणे इति धातुजेन चोदनापदेन प्रवर्तकवाक्यगं धर्मलक्षणं वदन् प्रवृत्तिरूपं धर्मं सफलं सूचयति । फलं विना प्रवृत्त्ययोगात् । एवं भगवता जैमिनिना फलसूचनात् क्लेशात्मकं भावार्थं विहाय भिन्नपदोपात्तमपि स्वर्गादिकं भाव्यं गृह्यते इति चोदनापदमर्थवदिति । नैतत्सारम् । अध्ययनविधिना स्वाध्यायस्य भावस्य फलवदर्थे तात्पर्यमिति सूचयता प्रथमसूत्रेणैव स्वाध्यायार्थस्य धर्मस्य फलवत्त्वसिद्धेः ।

तस्माच्चोदनापदमचोदनाभागस्य धर्मपरत्वनिरासार्थम् । अत एवार्थवादानां सोऽरोदीदित्यादीनां स्वार्थे फलशून्यानां धर्मार्थत्वाभा-

वेनाप्रामाण्यमाशङ्क्य सफलविध्येकवाक्यत्वमुक्तम् । यदि चोदनासूत्रे सर्वो वेदो धर्मपर इत्यभिप्रेतं स्यात्तर्हि अतदर्थानामिति हेतुपदमसङ्गतं स्यात् । क्रियार्थतायाः सिद्धत्वात् । अतश्चोदनात्मकाम्नायस्य क्रियार्थत्वेन प्रामाण्ये चोदनासूत्रे स्थिते सत्यक्रियार्थानामानर्थक्यप्राप्तौ विध्येकवाक्यत्वं युक्तम् । तत्र चाम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामिति पूर्वपक्षोपक्रमे सो ऽरोदीदित्यादीनि स्वार्थफलशून्यानि वाक्यान्युदाहरता भाष्यकारेण स्वार्थे फलवतां वेदान्तानामनन्यशेषत्वं सूचितम् । ननु दृष्टो हि तस्यार्थः कर्मावबोधनं नाम तद्भूतानां क्रियार्थेन समाम्नायः आम्नायस्य क्रियार्थत्वादिति भाष्यसूत्रवचांसि कृत्स्नाम्नायस्य धर्मपरत्वं सूचयन्तीत्यत आह—

दृष्टो हीत्यादिवचसां वेदान्तार्थविरोधिता ।
कथितैवं भट्टपादमतेन न गतार्थता । इति ॥

तस्याम्नायस्य कर्मावबोधनमर्थः । तत्तत्र सिद्धार्थेषु भूतानां वर्तमानानां पदानां क्रियापदेनैकवाक्यतेति सामान्यवचनानि धर्मजिज्ञासोपक्रमबलात्कर्मकाण्डविषयाणि न कृत्स्नवेदविषयाणि । तेषु वचनेषु कृत्स्नशब्दाभावात् । अतो नैतैर्वचनैर्वेदान्तार्थापलापः कर्तुं शक्यः । एवं भावनावादिभट्टपादतन्त्रानुसारेण वेदान्तानां गतार्थता नास्तीति सिद्धम् । तथा नियोगशरणगुरुतन्त्रालोचने ऽपि तेषामगतार्थता । तथा हि । अधीतवेदस्य वेदार्थे आपाततो ज्ञाते संशयो भवति उद्भिदा यजेत पशुकाम इत्यादिवाक्येषु किमुद्दिश्य किं विधीयते इति । एवं संशये सति निर्णयार्थं वेदार्थविचारः कर्तव्यो न वेति संशये वेदस्याप्रमाणत्वात्तदर्थो न विचार्य इति पूर्वपक्षमाह—

वेदस्यध्यायने यद्वा ऽधीत्यपूर्वे समाप्तितः ।
द्वेधा ऽप्यमानो वेदार्थो न विचार्य इतीरितम् । इति ।

अयमर्थः । आचार्यत्वकामो ऽष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीतेति सफलाध्यापनविधिरध्ययनं विना ऽनुपपद्यमानः स्वाङ्गत्वेनाध्ययनमाक्षिपति । वेदश्चाध्ययनं प्रति कारकत्वेनाध्यापने विनियुक्तो न स्वार्थे प्रमाणं बटुवदित्येकं मतम् । अन्ये तु स्वाध्यायो ऽध्येतव्य इत्यध्ययनात्पूर्वं तव्यप्रत्ययार्थे प्रत्यङ्गत्वेन समाप्तो वेदो भूतं भव्यायेति न्यायात् अपूर्वाङ्गवेदाध्ययनमध्यापनोपकारकमतो तत्प्रयुक्तमित्याहुः । मतद्वये ऽपि वेदस्य स्वार्थे तात्पर्यहेत्वभावादप्रामाण्यमिति सिद्धान्तयति—

आद्यं मतं मानहीनं द्वितीये ऽर्थावबोधनम् ।
आवश्यकं फलेक्षित्वादपूर्वस्येति साधितम् ॥ इति ।

अयं भावः। अध्ययनस्याऽध्यापनप्रयुक्तत्वे ऽपि नाऽङ्गत्वं श्रुत्यादीनामङ्गत्वे मानानामभावात् । न च प्रयुक्तिमात्रेणाऽङ्गता । आधानस्य समूलक्रतुविधिप्रयुक्तत्वे ऽप्यनङ्गत्वात् । अतः स्वतन्त्राध्ययनसाध्यः स्वाध्यायो विवक्षितार्थः । द्वितीये मते कर्मणि कृत्ये भोक्ता ऽपूर्वस्य स्वाध्यायंगतस्य फलाकाङ्क्षायामर्थावबोधः फलत्वेन कल्प्यते । दृष्टे फले सम्भवत्यदृष्टकल्पनानुपपत्तेः । स च संस्कृतस्वाध्यायजन्यो ऽर्थावबोधः सफलक्रत्वपूर्वोपयोगीत्यध्ययननियोग एव वेदस्य स्वार्थे तात्पर्यं गमयति । तस्माद्वेदप्रमाणं 'को वेदार्थो विचार्य' इति। एवं गुरूणां शास्त्रारम्भप्रकारमनूद्य स्वाभिप्रेतं दर्शयति—

इदं प्राभाकरमतं तत्राऽपि न गतार्थता ।
वेदार्थत्वप्रकारो ऽपि विचारो धर्मगोचरः ॥
सामान्यविधिना ऽपीह विशेषग्रहसम्भवात् ।
सूत्रे धर्मपदात्कृत्स्नवेदार्थो न विचारितः ॥ इति ।

यद्यपि कृत्स्नवेदाध्ययनविधिना सामान्येन वेदार्थविचारः प्रयुज्यते तथा ऽपि प्रायेणाऽध्येतॄणां भोगार्थित्वं तत्साधनं धर्म एवादौ जिज्ञासित इति सामान्यविधिना वेदार्थविशेषस्य धर्मस्याऽऽदौ विचारः प्रयुज्यते। मुमुक्षायां तु वेदार्थविचारप्रयोग इति युक्ततरम् । एतदभिप्रेत्य सर्वज्ञजैमिनिना धर्मपदं प्रयुक्तम् । तथा च गुरूणां वेदार्थो विचार्य इति प्रतिज्ञासूत्रे धर्मपदसामर्थ्याद्वेदार्थैकदेशधर्मगोचरैव । अतः कृत्स्नवेदार्थो न विचारित इति वेदान्तानामगतार्थत्वं सिद्धमित्यभिप्रायः ।

ननु धर्मपदं न वेदार्थैकदेशवाचि । येन ब्रह्मविचारः परिशिष्टः स्यात् । किन्तु कृत्स्नवेदार्थवाचकम् । न च तर्हि सूत्रे वेदार्थपदं किमिति न प्रयुक्तमिति वाच्यम् । तत्पदेन पुरुषार्थाऽप्रतीतेरजिज्ञास्यत्वापातात् । अतो वेदार्थस्य सफलत्वप्रतीत्यर्थं धर्मपदेन ब्रह्मणमित्याशङ्क्याह–

वेदार्थे धर्मशब्दस्य वृत्तिः का चन नेष्यते । इति ।

न तावता वेदार्थे धर्मशब्दस्य रूढिः । अवेदार्थे ऽपि चैत्यवन्दनादौ बौद्धैः प्रयुज्यमानत्वात् । नाऽपि श्रेयःसाधारणाद्धर्म इति योगः । तथा सति श्रेयःसाधनस्यैव जिज्ञासा । प्रतिज्ञापत्तौ श्रेयोरूपस्य नित्याशांकानन्दस्य ब्रह्मणो विचाराविशेषापत्तेः । तथा च परिशिष्टब्रह्मविचारा-

रम्भसिद्धिः। न च श्रेयःसाधनधर्मातिरेकेण ब्रह्म नास्ति न प्रतीयते इति वा वक्तुं शक्यम्। सत्यादिवाक्यैरबाधितानुभवविरोधात्। न च तद्ब्रह्म द्वादशलक्षण्यां विचारितम्। येन कथं चिद्धर्मपदेन ब्रह्माऽपि सङ्गृह्येत। अतो न्यायोपेतसौत्रधर्मपदेन श्रेयःसाधनस्य साध्यस्य विचारः प्रतिज्ञातो न श्रेयोरूपस्य सिद्धस्य ब्रह्मण इति सिद्धम्।

तथा चोदनालक्षणोऽर्थो धर्म इति धर्मस्य लक्षणसूत्रमेकदेशविचारःप्रतिज्ञात इति दर्शयति। किं चोदनालक्षणो धर्मः उत बुद्धाद्यागमलक्षणः? इति संशयनिरासार्थं धर्मस्यैव लक्षणकथनात्। यदि किं चोदनालक्षणो वेदार्थः उत मन्त्रार्थवादलक्षण इति वेदार्थसंशये निरासार्थं लक्षणं स्यात् तदा चोदनालक्षणो वेदार्थ इति सूत्रं स्यात्। अतो वेदैकदेशचोदनाया धर्मलक्षणत्वोक्तेः कृत्स्नवेदार्थो धर्मो न भवतीति ज्ञायते। यथा चक्षुर्गम्यगुणो रूपमित्युक्ते प्रत्यक्षप्रमाणैकदेशप्रमेयं रूपं न कृत्स्नप्रत्यक्षप्रमेयमिति ज्ञायते तद्वत्। यदि च धर्मशब्दस्य वेदार्थपरत्वं कल्पयित्वा चोदनालक्षण एव वेदार्थ इत्युच्येत तर्हि सूत्रेऽर्थपदं व्यर्थम्। तथा हि। श्येनादिश्चोदनार्थो न वा? आद्ये तस्य वेदार्थत्वादर्थपदेन निरासः। द्वितीये चोदनापदेनैव श्येनादिनिरासादर्थपदवैयर्थ्यम्। श्रेयःसाधनधर्मस्य लक्ष्यत्वे तु श्येनादेश्चोदनार्थस्य धर्मत्वनिरासार्थमर्थपदं बलवदनिष्टाननुबन्धिश्रेयःपरमर्थवद्भवति। श्येनादेर्हिंसात्वेन तत्साधनत्वाभावान्न हिंस्यादिति निषिद्धत्वे बलवदनिष्टाननुबन्धित्वाभावादधर्मत्वासिद्धेः। किञ्च चोदनायाः सत्त्वे निरर्थकत्वेन च चोदनार्थस्य कृत्स्नवेदार्थत्वासिद्धिः। चोदनामात्रार्थस्य निरर्थकचोदनार्थत्वव्याघातात्। चोदनाशब्दस्य वेदपरत्वे वेदलक्षणो वेदार्थ इति स्यात्। तथा च चोदनाशब्दस्य लक्षणादोषः। किञ्च प्रथमसूत्रे सर्वात्मना प्रामाण्यं सिद्धं न वा? न चेच्चोदनासूत्रे त्वत्कृतस्य किं चोदनालक्षणो वेदार्थः, उतार्थवादादिलक्षण, इति विचारस्यानुपपत्तिः। वेदस्य प्रामाण्यनिश्चयं विना वेदार्थाश्रितविचारायोगस्य स्फुटत्वात्। आद्ये औत्पत्तिकसूत्रादौ प्रामाण्यचिन्तानुपपत्तिः। निश्चिते संशयायोगात्। न चाद्यसूत्रे निश्चितस्याऽपि प्रामाण्यस्य वेदार्थत्वाच्चिन्तेति वाच्यम्। सिद्धस्य वेदार्थत्वे सिद्धे वेदप्रामाण्यापातात्। किञ्चाऽऽद्यसूत्रे प्रामाण्यनिश्चये द्वितीयाध्यायारम्भे वृत्तं प्रमाणलक्षणमिति भाष्येण विरोधः। तेन कृत्स्नप्रथमाध्यायेन वेदप्रामाण्यस्य साधितत्वप्रतीतेः। किञ्च चोदनाप्रमाणक एव

वेदार्थ इति द्वितीयसूत्रे निश्चये मन्त्रार्थवादादीनामानर्थक्यस्य सिद्धत्वादाम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामित्यादिपूर्वपक्षो ऽयर्थः स्यात् । तस्मान्न वेदार्थविचारः प्रतिज्ञातः कृतो वा । किन्तु धर्म एव विचार्यत्वेन प्रतिज्ञातो विचारितश्च साध्यरूपः । ततः परिशिष्टस्य सिद्धब्रह्मपरस्य वेदस्य विचारार्थमथातो ब्रह्मजिज्ञासेत्यादिशास्त्रमारम्भणीयमित्याह—

एवं सत्यगतार्थत्वाज्जिज्ञासा ब्रह्मगोचरा
कार्या मुमुक्षुणेत्येवं द्वितीये वर्णके स्थितम् ॥ इति ।

एवं एकदेशविचारे कृते सति वेदान्तानामविचारितार्थत्वान्मुमुक्षुणा तेषां विचारः कर्तव्य इत्यर्थः ।

तन्त्वौपनिषदं देवं प्रत्यगात्मानमव्ययम् ।
श्रीरामं परमानन्दं चिन्तये ऽहं मुहुर्मुहुः ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविन्दानन्दभगवत्पूज्यपादशिष्यरामानन्दसरस्वतीकृते विवरणोपन्यासे द्वितीयं वर्णकं समाप्तम् ॥

———0———

पूर्वत्राऽऽगतार्थत्वाद्वेदान्तशास्त्रमारम्भणीयमित्युक्तं तथाऽपि नारम्भणीयमधिकार्यभावादित्याशङ्क्य तृतीयवर्णकतात्पर्यमाह —

अथाऽधिकारिसिद्ध्यर्थं वर्णकान्तरमुच्यते ।
आनन्तर्ये ऽथशब्दः स्यात् नार्थान्तरइतीरितम् ॥

अगतार्थतया वेदान्तानां विचार्यत्वोक्त्यनन्तरमित्यर्थः । इदं शास्त्रमारम्भणीयं न वेति सन्देहे मानाभावेनाऽधिकार्यभावान्नारम्भणीयमिति प्राप्ते सूत्रस्याऽथशब्दस्यानन्तर्यार्थकत्वसमर्थनेन, 'तद्यथेह कर्मचितो लोकः क्षीयते ब्राह्मणो निर्वेदमायात् । शान्तो दान्तः तरति शोकमात्मवि'दिति साधनचतुष्टयपरवाक्यप्रमाणको ऽधिकारी साध्यते इति भावः । नन्वर्थान्तरं किं न स्यात् इत्यत आह । आनन्तर्ये इति । किं जिज्ञासापदं यौगिकमाश्रित्याथशब्दस्यार्थान्तरमाशङ्क्यते उत विचारे रूढमथ लाक्षणिकम् ? आद्ये न तावदारम्भार्थता ऽथशब्दस्य युक्ता । ब्रह्मज्ञानेच्छाया अप्रतिपाद्यत्वात् । नाऽपि मङ्गलार्थता । इच्छा मङ्गलमित्युक्तेः फलाभावात् । नाऽपि प्रकृतादर्थादर्थान्तरस्वार्थकता । अर्थविशेषस्याऽप्रकृतत्वात् । यतः कुतश्चिदर्थान्तरतायाश्चावक्तव्यत्वात् । ननु तर्हि कुतश्चिदानन्तर्यमपि न वक्तव्यं

सिद्धत्वादिति चेन्न। स्वस्मिन् जिज्ञासां जानमतो ऽप्युक्तसाधनचतुष्टयानन्तर्यस्याज्ञातत्वात्। अथशब्देन तज्ज्ञापने त्वधिकारिविशेषणमेतावदेवेति निश्चित्य झटिति श्रवणादौ प्रवर्तते। तस्मादानन्तर्यार्थत्वमेवेति भावः। ननु जिज्ञासाविचारशब्दयोस्तुल्यार्थकतया शास्त्रकारव्यवहाराद्रूढं, पदम् तथा च विचारस्य कर्तव्यत्वादारम्भार्थो ऽथशब्दो ऽस्त्विति द्वितीयमाशङ्क्याह—

जिज्ञासापदमत्र स्याद्यौगिकं पङ्कजादिवत्।
इत्यर्थे वृत्तिभेदाश्च शब्दस्याऽत्र निरूपिताः॥

अत्र सूत्रे न रूढमिति शेषः। यस्मिन्पदे योगः क्लृप्तः तत्र रूढिर्न कल्प्या। ननु क्लृप्तयोगस्याऽपि पङ्कजादिपदस्य तामरसे योगरूढिर्नाम वृत्त्यन्तरं तार्किकैराश्रितमिति चेन्न। अलौकिकवृत्त्यन्तरकल्पने मानाभावात्। साधारणेनाऽपि योगेन प्रयोगप्राचुर्याद्विशेषार्थभानसम्भवात्। शास्त्रकारव्यवहारस्तु विचारलक्षणया ऽप्युपपद्यते इति भावः। ननु योगरूढिलक्षणानां को भेद इत्यत आह। इत्यर्थमिति। यौगिकत्वज्ञानार्थं वृत्तिभेदज्ञानार्थमिति यावत्। अखण्डपदप्रवृत्तिनिमित्तकः सङ्केतानपेक्षः शब्दस्यार्थेन सम्बन्धो रूढिः। एकस्मिन्पदे ऽवयवशक्तिसमुदायो योगः। इतीदं वृत्तिद्वयं मुख्यम्। मुख्यार्थसम्बन्धो लक्षणा। अत्र पूर्वप्राबल्यम्। ननु सिद्धान्ते जिज्ञासापदं विचारलक्षकमिति आरम्भार्थताशङ्कामनूद्य निराचष्टे—

अथेत्यारम्भवाचित्वे लभ्यते नाधिकार्यसौ।
मोक्षकामो न कल्प्यो ऽत्र प्रसज्यप्रतिषेधतः॥

असौ श्रौतसाधनसंपन्नः। तत्समर्पकाभावादिति शेषः। ननु विचारस्य ज्ञानद्वारा मोक्षः फलं, तत्कामः कल्प्यतामित्यत आह। मोक्षकाम इति। आरभ्यते विचार इत्युक्ते तत्र सर्वो ऽधिकारीति प्रसज्यते प्रतीतिः। सा मोक्षकामकल्पनया बाधनीयेति गौरवम्। आनन्तर्याभिधानद्वारा मोक्षकामाधिकारिज्ञानपूर्वकविचारविधिप्रतिपत्तौ लाघवम्। ननु रात्रिसत्रन्यायेन श्रोतव्यविधिप्रकरणस्थार्थवादवाक्यैरेवाधिकारिविशेषधीसम्भव इति चेत्सत्यम्। किन्तु ज्ञाते ऽधिकारिणि संशयनिरासार्थमथशब्देनोपादानम्। ननु विश्वजिन्न्यायेन स्वर्गार्थवन्मोक्षस्याऽपि सर्वान्प्रत्यविशिष्टत्वात्सर्वाधिकारप्रतीतेर्न बाध इत्यत आह—

सर्वो लोको न मोक्षार्थी नाधीतिविधिगोचरः।

अधिकारी भवेदत्र तत्प्रयुक्तेरभावतः ॥

विषयलुब्धानां निर्विषयमोक्षे भयमेव भवतीत्यर्थः ।

ननु वेदाध्ययनविधौ त्रैवर्णिको ऽधिकारीति स एव विधिना स्वफलार्थावबोधार्थमाक्षिप्ते विचारे ऽप्यधिकारी सिध्यतीत्यत आह । नाऽधीतीति । अत्र विचारे अधीतिविधिगोचरो ऽधिकारी न भवेत् । विचारस्याऽध्ययनविधिप्रयुक्तत्वाभावादित्यर्थः । इमं हेतुं साधयति—

अर्थबोधो यदाधीतिविधिभाव्यो भवेत्तदा ।

विचारस्तत्प्रयुक्तः स्यात्किं त्वसौ भाव्यवेदजः ॥

स्यान्नासौ विधिभाव्य इति शेषः । न तावदध्ययनस्यार्थबोधो ऽन्वयव्यतिरेकसिद्धं फलम् । अध्येतॄणां तददर्शनात् । नन्वध्येतव्य इति शब्दभावनाभाव्याथा अध्ययनकरणिकाया अर्थभावनाया अर्थावबोधो भाव्यः । स्वाध्यायस्याऽफलत्वेन भाव्यत्वानुपपत्तेः । दृष्टफले सति सक्तुन्यायेन गुणप्रधानताव्यत्ययस्य स्वाध्यायेनाधीयीत विश्वजिन्न्यायेन स्वर्गकाम इति कल्पनानुपपत्तेश्चेति शङ्कते किन्त्विति । यद्यधीतस्य वेदस्य व्याकरणाद्यङ्गाध्ययने सत्यर्थावबोधो दृष्टं फलं तर्हि चन्द्र इव[1] स्वयमफलत्वे ऽप्यनुष्ठानद्वारा सफलस्यार्थावबोधस्य फलस्य हेतुतया भाव्यो ऽस्तु । अध्येतव्य इति कर्मणि कृत्यप्रत्ययेन वेदस्य भाव्यत्वनिश्चयात् । फलहेतुपश्वादेर्भाव्यत्वाङ्गीकाराच्चेति समाधत्ते । असाविति । अध्ययनभाव्यस्य वेदस्यार्थावबोधः फलमित्यर्थः । नन्वध्ययने ऽधिकार्यश्रवणादृष्टफलार्थावबोधकाम एवाधिकारीत्यत आह—

अर्थावबोधकामस्य नाधीतौ स्यान्नियोज्यता ।

अर्थाज्ञाने तदज्ञानादज्ञाते कामना कुतः ? ॥

अध्ययनमर्थावबोधकाममुद्दिश्य न विहितम् । येनाधिकारिविशेषणतया बोधो विधिफलं भवेदित्यर्थः । तत्र हेतुमाह अर्थाज्ञाने इति । उद्देश्यस्य विशेषणस्यार्थावबोधेच्छाया अध्ययनात्प्रागेव सिद्धिर्वक्तव्या । इच्छा त्विष्टसाधनतया ज्ञाते सिध्यति । ततश्चाध्येतव्यानां सर्वेषां वाक्यानां विशिष्याग्निहोत्रादिरूपार्थज्ञानं विना ऽर्थावबोध इष्टसाधनमिति ज्ञातुमशक्यत्वादिच्छा न सिध्यतीत्यर्थः । उपदेशेन विशिष्टार्थज्ञानाङ्गीकारे फलस्य सिद्धत्वादध्यय[2]नांशे प्रवृत्तिर्न

(१) वेद एवेति पाठान्तरम् ।

(२) ऽध्ययनायासे इति पाठान्तरम् ।

स्यादिति भावः। नन्वर्थावबोधमुद्दिश्य वेदाध्ययनमिति यदि नोच्यते[1]? तदा कथं वेदे तात्पर्यग्रहः ग्राहकाभावादिति शङ्कते। उद्दिश्येति—

उद्दिश्योच्चारणाभावे कथं तात्पर्यधीर्भवेत्।

लोके वक्तुरिच्छा तात्पर्यमिति उद्दिश्योच्चारणमपेक्ष्यते। वेदे तु फलवदपूर्वार्थप्रमित्यनुरूपत्वं तात्पर्यमुपक्रमादिना ग्राह्यंनोद्दिश्योच्चारणेन वक्तुरभावादिति परिहरति—

उपक्रमादिलिङ्गैः सा भवेद्वेदे न चान्यथा।
अधीतावनियोज्यत्वे बोधकामे भवेन्न सा॥
कर्त्रभावादिति प्राप्ते जगुः प्राभाकरा इदम्।

तस्मादर्थावबोधस्याध्ययनविधिफलत्वाभावेन तदर्थविचारस्य तद्विधिं प्रत्युक्तत्वाभावान्नाध्ययनविधिना विचारे ऽधिकारिलाभ इत्यथशब्देनैवाधिकारी समर्पणीय इति भावः। इदानीमध्ययने ऽधिकार्यन्तरानिरूपणादगत्यार्थावबोधकामो ऽधिकार्येष्टव्य इति शङ्कते। अधीताविति। मम नियोग इति साक्षान्नियोगबोधानियोज्यः। ममाऽस्यां क्रियायां नियोग इति क्रियाद्वारा नियोगबोद्धा कर्ता अधिकारी स्वामीति भेदः। सा अधीतिक्रियाप्रवर्तको हि विधिः प्रवृत्तिसमर्थमधिकारिणमपेक्षते इति वस्तुगतिः। अध्ययनविधिरध्ययनेन प्रवर्तक इत्यधिकारिणं चापेक्षते। किं त्वध्ययनक्रियाध्यापनविधिप्रयुक्तेति गुरुमतेनादौ समाधत्ते। जगुरिति। ननु स्वाध्यायो ऽध्येतव्य इत्यध्ययनक्रियाध्यापनविधिप्रयुक्ता। अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीतेत्यध्यापनविधिः। उभयत्राऽधिकारी न श्रूयते। तत्र कथमेकेनान्यस्य प्रयुक्तिरिति शङ्कते। अध्यापनप्रयुक्तेति। ननु तुल्यमिदं द्वयम्। किञ्चाधिकारिकल्पनायामध्ययने एव स कल्पनीयः। तेनैवाध्यापनस्य प्रयोगो ऽस्तु। न च लिखितपाठेनाविहिताध्यापनेनाप्यध्ययनसिद्धेर्नाध्यापनाक्षेप इति वाच्यम्। आचार्याधीनो वेदमधीष्वेति नियमविधानाद्विहिताध्यापनस्यैवाक्षेपादिति वैपरीत्यमाह। अन्त्येनेति—

अध्यापनं चाध्ययनमन्त्येनाऽऽद्यं प्रयुज्यताम्।
इति चेत् साधिकारत्वादाद्यमन्त्ये प्रयोजकम्॥

अर्थतः पाठतो वान्त्यमध्ययनं आद्यमध्यापनं समाधत्ते। साधि-

(१) नोच्यत इति वा पाठः।

कारत्वादिति । अयमाशयः । 'संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु निञः' इति सूत्रेण संमाननादिषु साध्येषु नयतेर्धातोरात्मनेपदविधानादुपनयीतेत्युपनयनस्याचार्यकरणं फलं गम्यते। तदङ्गित्वादध्यापनस्याऽपि तेन फलं कल्प्यते। तत्कामनैवाध्यापनविधिना पुरुषस्य सम्बन्धे निमित्तमधिकारस्तेन साधिकारो ऽध्यापनविधिर्निरधिकारस्याध्ययनस्य प्रयोजक इति । ननु विधिः स्वविषयतदङ्गयोरेव प्रयोजकः। तत्र कथमध्ययनस्य विहितस्यानङ्गस्य विध्यन्तरप्रयोज्यता। नन्ववघातविधिना ऽवृत्तिरिवेति चेन्न। तस्याः फलानुपपत्तिलभ्यत्वेनाऽविहितत्वादित्याशङ्क्याह । साधिकार इति ।

साधिकारक्रतुविधिराधानस्य यथा तथा ।
नैतदेवं नयीतेति ह्युपनीतेः फलं श्रुतम् ॥

काम्य इत्यर्थः । ब्राह्मणो ऽग्नीमादधीतेत्याग्निसंस्कारार्थो विधिर्न स्वयमाधानस्यानुष्ठापकः । निष्फलत्वात् । किन्तूत्तरकाम्यविधिरग्न्यपेक्षः तत्सिध्यर्थमाधानमनङ्गमपि प्रयोजयति । तत्सिद्धेष्वग्निषु नित्यविधयः प्रवर्तन्ते। न स्वयमग्न्यपेक्षा अप्याधानस्य प्रयोजकाः। अग्नीनां संस्कार्यतयोद्देश्यत्वेनानुपादेयानामनाक्षेप्यत्वात् । कामस्तु विधेर्बलीयानग्नीनाक्षिप्याधानमनुष्ठापयति तद्वदिति भावः। इदं गुरुमतं दूषयति। नैतदेवमिति। अध्ययनमध्यापनविधिप्रयुक्तं न भवति। अध्यापनविधेः फलाश्रवणेनाप्रयोजकत्वात्। न हि प्रयोजककर्तृत्वरूपमाचार्यत्वं विधिं विना ऽपि लोकसिद्धं विधिशब्दितनियोगस्य फलमिति युक्तम् । अस्तु वा शास्त्रीयकर्मप्रयोजकत्वं विशिष्टमाचार्यत्वं विधिफलम् तथापि नाध्यापनस्य फलवत्ता। हि यस्मान्नयीतेति निञो धातोरात्मनेपदसामर्थ्यादाचार्यकरणमुपनीतेः फलं श्रुतमिति योजना । न चाङ्गफलेनाङ्गिनो ऽध्यापनस्य फलवत्तेति युक्तमङ्गे फलस्याविवक्षितत्वापातात् । ननु यो वेदमध्यापयेत्स आचार्य इति मनुवाक्यादध्यापकस्याचार्यत्वं फलमिति चेन्न । तद्वाक्ये ऽध्यापनानुवादेनाचार्यसंज्ञामात्रस्य विधानात् । अतो निरधिकारत्वादध्यापनविधिर्न प्रयोजकः । ननु तर्हि विधिप्रयुक्तत्वे ऽध्ययनस्याऽधिकारी वाच्य इत्याशङ्क्याह । तस्मादिति ।

आत्मनेपदसामर्थ्यादाचार्यकरणं निञः ।
नाध्यापनस्य तस्मात्स्यादुपनीताधिकारिता ॥

ब्रह्मचर्यमागामिति श्रुतौ सर्वस्मृतिषु चोपनयनानन्तरमध्यय-

नविधानादुपनीताधिकारिकत्वमध्ययनविधेरित्यर्थः। ननु बालस्याऽप्रबुद्धत्वात्कथमध्ययने ऽधिकारज्ञानमित्यत आह। अधीताविति।

अधीतौ विद्व्यभावे तु प्रवृत्तिर्न बटोर्भवेत्।
वृत्त्यर्थाध्यापनं नैव नित्याधीतिप्रयोजकम्॥

विद्व्यभावे प्रवर्तकाभावेन विफलायासे प्रवृत्तिर्न युक्ता। अधिकारज्ञानं तूपदेशेन समिदाहरणादाविव भवेदित्यर्थः। किञ्च।

षण्णां तु कर्मणां मध्ये त्रीणि कर्माणि जीविकेति

स्मरणादध्यापनस्य जीवनार्थत्वेन काम्यत्वावगमादनित्यत्वं गम्यते। तथा चाऽनित्येन नित्याध्ययनस्याऽनुष्ठानं न युक्तम्। नित्यानित्यसंयोगविरोधादित्याह। वृत्त्यर्थेति। अध्ययनस्य नित्यत्वे किं मानमित्यत आह—

नित्योपनयनाङ्गित्वादधीतेर्नित्यता भवेत्।
अङ्गत्वमुपनीतेः स्यादधीताविति साधितम्॥
अत ऊर्ध्वं त्रयो ऽप्येते यथा कालमसंस्कृताः। इति।

उपनयनसंस्कारस्याऽकरणे प्रत्यवायश्रवणान्नित्यत्वम्। तदङ्गित्वादध्ययनं नित्यम्, अङ्गिनो नित्यत्वाभावे तदधीनाङ्गस्य नित्यत्वानुपपत्तेरर्थापत्तिमानमित्यर्थः।

ननु श्रुत्यादिविनियोजकप्रमाणाभावादुपनयनस्याऽध्ययनाङ्गत्वं कथमित्यत आह। अङ्गत्वमिति। श्रुत्याद्यभावे ऽप्युपादानप्रमाणादङ्गत्वं सिध्यति। तथा हि। अनुष्ठानद्वारा स्वर्गादिफलकार्थावबोधहेतुवेदभाव्यकाध्ययनविधिः स्वतन्त्रः सन्नाचार्याधीनो वेदमधीष्वेति नियमविधानादाचार्योपगमनमुपनयनपदगृहीतमन्तरेणानुपपद्यमानोपादानाख्येन विध्यन्यथानुपपत्तिप्रमाणेन उपनयनमङ्गतयोपादत्ते। न च निराकाङ्क्षमुपनयनं कथमुपादीयतइति वाच्यम्। तस्य निष्फलतया शेषित्वसापेक्षत्वात्।

एवमङ्गत्वे सिद्धे प्रोक्षणादिवत्स्वरूपोपकारितया संस्कारकर्मत्वं सिध्यति। एवमुपनयनेन संस्कृतमाणवकनिर्वर्त्यमध्ययनं तदङ्गीति सिद्धं स्मृतिषु प्रकरणादिना ऽप्युपनयनाङ्गितया नित्यमध्ययनम्। अननुवाक्याः शूद्रसधर्माण इत्यादिना ऽनध्ययने प्रत्यवायश्रवणाच्च। नन्वध्यापनमपि जीवनार्थतया फलतो नित्यम्। तेन नित्याध्ययनं सिध्यतीति शङ्कते। नित्यापेक्ष्येति।

नित्यापेक्ष्यधनार्थत्वान्नित्यमध्यापनं न हि ।
प्रतिग्रहादिना ऽपीह धनलाभस्य सम्भवात् ॥

नित्यं प्रत्यहमपेक्ष्यं धनं तदर्थत्वादध्यापनं नित्यमिति शङ्कार्थः । काम्ये कर्मणि फलेच्छा प्रवृत्तिहेतुः; न तु नित्यकर्मणीव विधिः । येन विधिनित्यत्वेन काम्यानुष्ठानं प्रत्यहं नित्यं स्यात् । तत्र धनफलस्य नित्यमिष्टत्वे ऽप्युपायान्तरेण फलेच्छापूर्तौ नाध्यापने नित्यप्रवृत्तिः हेत्वभावादिति परिहरति न हीत्यादिना । ननु श्रुतौ भार्यामुपेयादिति पुत्रोत्पादनविधिर्नित्यः पितुः स्वपुत्रानुष्ठितकर्मद्वारा पितॄणां ऋणं पर्यवस्यत्ननुष्ठानार्थं पुत्रस्योपनयनपूर्वकाध्यापनार्थं ज्ञानात्मकमनुशासनमपेक्षते । तदनुशासनं नित्यविध्यङ्गतयेति । तस्मात्पुत्रमनुशिष्टं लोक्यमाहुस्तस्मादेवमनुशासतीति विधिना पित्रा नित्यमनुष्ठेयमिति तत्प्रयुक्त्या नित्याध्ययनमर्थज्ञानञ्च सिध्यतीति शङ्कते—

पुत्रोत्पादविधिर्नित्यः सो ऽनुशास्त्यङ्गकः स्मृतः ।
तदङ्गत्वेन नित्यत्वं नन्वध्यापनइष्यताम् ॥

अथातः सम्प्रत्तिरित्यादिश्रुतौ मरिष्यता पित्रा वेदयज्ञलोकानां स्वीयानां सुशिक्षिते पुत्रे समर्प्यमाणानां पुत्रेण स्वीकरणं सम्प्रत्तिनामकं कर्म विहितम् । तच्छेषत्वादिदमनुशासनं ते पुत्र त्वदीयं कर्माचार्योपगमनाध्ययनादि नित्यं त्वया ऽनुष्ठेयमित्यवश्यं कर्तव्यार्थोपदेशनमात्रम् । तस्मात्पुत्रमिति वाक्ये श्रुतमर्थवाद एव स्यात् । न तूपनयनादिरूपमनुशासनं पितुर्नित्यविध्यङ्गतया विधीयते नित्यविध्यधिकारिणः पितुरायुर्नियमाभावेन बहुकालसाध्याङ्गविधानायोगादिति परिहरति । नैवमिति—

नैवं सम्प्रत्ति शेषत्वादर्थवादो ऽनुशासनम् ।
उपदेशनमात्रं स्यात्तस्मात्पुत्रमिति श्रुतम् ॥

किं चोपनीयाध्यापयेदित्याचार्यस्य विधिप्रयुक्तमध्ययनं यदि तदा शिष्य उपनीय मृते आचार्ये अध्ययनं न स्यात् । शिष्याध्ययने विध्यनङ्गीकारादध्यापनाधिकारिणो मृतत्वादधिकारिणः प्रतिनिध्यभावादुपनयनरूपाङ्गस्य जातत्वेनाचार्यान्तरेणाध्यापयितुमयुक्तत्वात्स्वकर्तृकोपनयनस्यैवाङ्गत्वात् । तस्मादनित्यनाध्यापनेन नित्यस्याध्ययनस्यानुष्ठानमयुक्तमिति स्वविधिनैवानुष्ठानमित्युपसंहरति । तस्मादिति—

तस्मादनित्यसंयोगो नित्यस्येह विरुध्यते ।
नित्यमध्ययनं स्वेन विधिनैव प्रयुज्यते ॥

ननु तर्हि अध्ययनविधिनैवाध्यापनसिद्धेस्तमध्यापयीतेति विधिर्व्यर्थ इति चेत्सत्यम् । न ह्यत्राध्यापनं विधीयते । तस्य प्रयोजकव्यापारत्वाकारेण वृत्त्यर्थतया रागतो याजनवत् प्राप्तत्वात् । अध्ययनविधौ सत्यर्थादध्यापनत्वाकारेणाऽपि प्राप्तेरवश्यंभावित्वात् । तस्माद्रागतो ऽर्थतो वा प्राप्तमध्यापनं णिचा ऽनूद्यते । भाविप्राप्त्या ऽप्यनुवादसंभवात् । अध्ययनं तु विधीयते । विधिं विना प्राप्त्यभावात् । यथा ग्रामकामं याजयेदित्यत्र णिचा याजनमनूद्य यजनं विधीयते तद्वत् ।

ननु तमध्यापयीतेति शिष्यव्यापारे विधिर्न युक्तः । उपनयीतेत्याचार्यव्यापारविधानात् । न चाऽत्राऽप्युपगमनं शिष्यस्य विधेयम् । अप्राप्तत्वात् । न तूपनयनं रागतो ऽर्थतो वा प्राप्तत्वादिति वाच्यम् । उपगमनस्य वाचकाभावेनाप्रतीतेरिति चेत्तत्राह । लक्षयित्वेति । लक्षयित्वोपगमनमप्राप्तत्वाद्विधीयते—

णिजर्थो ऽनूद्यते वाक्ये तत्राधीतिर्विरुध्यते ।

उपनयीतेत्युक्ते नीयमानशिष्यव्यापारो ऽर्थाद्गम्यते । स एव तत्पदेन लक्षणया विधीयते । विधिं विना प्राप्त्यभावादित्यर्थः । उत्तरार्धस्थवाक्ये तत्रेति पदद्वयं पूर्वार्द्धे ऽपि सम्बध्यते । उपनयीत तमध्यापयीतेति वाक्ये इत्यर्थः । एवञ्चोपगच्छेत्सो ऽधीयीतेति विधिः परिणतो भवति । कस्तत्राधिकारी तत्राह । वय इति—

वयोजातियुगाद्ये ऽधिकार्यन्त्ये तूपनीतकः ।
स्वामित्वपूर्वकर्तृत्वं मतं तेषां नियोगिनाम् ॥

अष्टवर्षत्वं वयः । ब्राह्मणत्वं जातिः । इदं द्वयं मिथोविशिष्टमधिकारिविशेषणं न प्रत्येकमतिप्रसङ्गात् । तत्राद्ये ऽङ्गे उपगमने वयोविशिष्टजातियुक्तो ऽधिकारी । अन्त्ये ऽङ्गिन्यध्ययने स एव ब्राह्मणो ऽधिकारी अङ्गाङ्गिनोरेकाधिकारात् । वयस्तु नाऽत्र विशेषणमङ्गकालस्याङ्गिन्यनुपपत्तेः । अनुष्ठितपूर्वाङ्गस्यैवाङ्गयनुष्ठानमित्यभिप्रेत्योपनीतको ऽन्त्ये ऽधिकारीत्युक्तमिति विभागः ।

अत्र प्राभाकराः । वयोजात्योर्नाधिकारनिमित्तत्वम् उपादेयकर्तृविशेषणत्वादिति मन्यन्ते । तथा हि । विधितो ऽनुष्ठेयं क्रियाकारकं तद्विशेषणमिति त्रयमुपादेयमित्युच्यते । यथा व्रीहिभिर्यजेतेति यागो व्रीहयो बहुत्वं च यत्पुनरननुष्ठेयतया विधिसम्बन्धि तदनुपादेयमुद्दे-

श्यमुच्यते, यथा यः स्वर्गकामः स यजेतेत्यत्र स्वर्गकामः तत्र लिङर्थो नियोगः स्वरूपज्ञप्तये विषयमिवाधिकारिणमादावपेक्षते। अधिकारो नामात्र ममायं नियोग इति स्वामित्वेनान्वयस्तद्बोधे निमित्तमनुपादेयविशेषणं प्रधानमेव भवति यथा स्वर्गकामना तस्या उद्देश्यविशेषणत्वेन विध्यपेक्षया प्राधान्यान्न कर्तृविशेषणं तत्र निमित्तं कर्तृकारकस्य क्रियाद्वारा विधि नियोगं प्रति गुणत्वेन तद्विशेषणस्य सुतरां गुणतया स्वामित्वान्वयहेतुत्वायोगात् । प्रकृते च तमध्यापयीतेति द्वितीयया ऽध्ययनकर्तृत्वं गम्यते। धात्वर्थकर्तुरेव णिचि कर्मत्वात् । तत्र णिजर्थानुवादेन कर्तृव्यापारविधाने वयोजात्योरुपादेयविशेषणत्वात् नाधिकारनिमित्तत्वमिति। तदङ्गीकरोति स्वामित्वेति । स्वामित्वान्वयादनन्तरं मया क्रियया साध्यो नियोग इति कर्तृत्वान्वय इति येषां मतं तेषामधिकारे निमित्तमनुपादेयविशेषणं भवत्वित्यर्थः। कथं तर्ह्युपादेयविशेषणस्य जात्यादेस्तत्र निमित्ततेति चेत् भट्टमतेनेत्याह । कर्तृत्वेति—

अधिकारे निमित्तं स्यादनादेयविशेषणम् ।<br>
कर्तृत्वपूर्वं स्वामित्वं भावनावादिनां मतम् ॥

भावना हि विध्यर्थः क्रियात्वात् कर्तारमादावपेक्षते इति स्वर्गकामादिः कर्तृत्वेनैव प्रथमं सम्बध्यते। पश्चात्कर्तुः क्रियाफलमिति न्यायेन ममेदं कर्मेति भोक्तृतया ऽन्वेतीति कर्तृत्वान्वयपूर्वकस्वामित्वान्वयो ऽधिकारस्तत्र निमित्तं कर्तृविशेषणमेव कामनादिकं भवति। तथा च जात्यादेर्निमित्तत्वं युक्तमिति भावः। अस्माकं तु श्रेयःसाधनत्वं विध्यर्थः। तत्र यजेत यागः श्रेयःसाधनमित्युक्ते कस्य श्रेयो भोक्तुराकाङ्क्षितत्वात्स्वर्गकामादिस्वामित्वेनैव विधिना सम्बध्यते । पश्चान्मदिष्टसाधनत्वान्मया कर्तव्यं कर्मेति स्वामित्वान्वयपूर्वकः कर्तृत्वान्वयः न कामना। वयोजातिजीवनादिकमनुपादेयविशेषणमेवाधिकारहेतुर्भवतीत्याह । स्वामित्वेति—

तेषां तत्र निमित्तं स्यादुपादेयविशेषणम् ।<br>
स्वामित्वपूर्वं कर्तृत्वं श्रेयःसाधनवादिनाम् ॥<br>
अस्माकं तत्र हेतुः स्यादनादेयविशेषणम् ।

वयोजात्योरधिकारनिमित्तत्वसमर्थनस्य विधिनित्यत्वं फलमाह । एवं नित्य इति—

एवं नित्यो ऽधीतिविधिर्वेदावाप्तौ समाप्यते ।
कर्मणां विधयस्तत्र विचारस्य प्रयोजकाः ॥

अवाप्तिपर्यन्तमध्ययनं तस्यावृत्तिरर्थाल्लभ्यते । नन्वेवमध्ययनविधे-र्नित्यत्वे विचारप्रयोजकत्वाभावादधीतो वेदो विचारहेतुरिति भाष्य-विरोध इत्याशङ्क्य परम्परया प्रयोजकत्वान्न विरोध इत्याह। कर्मणा-मिति। अध्ययनविधिना ऽऽप्ते स्वाध्याये तत्र सन्दिग्धार्था विधय उपलभ्यमाना अवश्यानुष्ठेयार्थत्वादनुष्ठानहेत्वर्थनिर्णयाय स्वस्य वाक्यविचारं पृथक् पृथक् आक्षिपन्तीति परम्परया ऽध्ययनविधिविचारप्रयोजकाः। साक्षात्प्रयोजकास्तु नित्यादिविधयः। न च ते ब्रह्मविचारस्यापि प्रयोजकाः। ब्रह्मज्ञानस्य नित्यादिविध्यनपेक्षितत्वात्। तस्मादधीतवेदस्य धर्मविचारो विधिभिः प्राप्त इति शाबरभाष्यमविरुद्धमित्यर्थः। परमप्रकृतमुपसंहरति। श्रोतव्य इति—

श्रोतव्यविधिनैवातो वेदान्तार्थविचारणा ।
आनन्तर्यमुखेनास्यामधिकारी समर्प्यते ॥

अतो ऽध्ययनविधेर्नित्यत्वात्कर्मविधीनां स्वविचारमात्रहेतुत्वादित्यर्थः। मुखं द्वारं अथशब्देनेति शेषः। अस्य मङ्गलाद्यर्थत्वं नेत्युक्तत्वादानन्तर्यार्थकत्वं जिज्ञासायाः सामग्रीज्ञानाय वक्तव्यम्। पुष्कलकारणात्कार्यस्याव्यवधानेन नियतत्वादानन्तर्यं मुख्यमिति तदभिधाने भवत्येव सामग्रीज्ञानम्। प्रकृतादर्थान्तरत्वोक्तौ तु तन्न भवति। अकारणस्यापि प्रकृतत्वसम्भवात्। किञ्च कारणादानन्तर्योक्तौ प्रकृतादर्थान्तरत्वमन्तर्भवति; न कारणानन्तर्यमर्थान्तरत्वे ऽन्तर्भवति। तस्मादानन्तर्याऽभिधानद्वारा तदवधिसामग्रीसंपन्नाधिकारी समर्प्यते इति भावः। अधुना ऽऽनन्तर्यविधिः साधनचतुष्टयसंपत्तिरेव परिशेषादिति वक्तुमवध्यन्तरं दूषयति। आनन्तर्येति—

आनन्तर्यविधिस्तत्र नाधीतिर्नाऽपि कर्मधीः ।
न तन्न्यायो ऽथ कर्माऽपि शुद्ध्यन्यद्वारकं न च ॥

तत्र जिज्ञासायामानन्तर्यविधित्वेन पुष्कलकारणमेव वक्तव्यं तदानन्तर्यस्यैव मुख्यत्वादधिकारिसिद्धिहेतुत्वाच्च। वेदाध्ययनन्तु धर्मजिज्ञासासाधारणं न ब्रह्मजिज्ञासायाः पुष्कलकारणमतो नावधिः।

अत्र वृत्तिकृत आहुः। आनन्तर्यविधिर्धर्मजिज्ञासा। तस्या ब्रह्मजिज्ञासोपकारकत्वात्। यस्यैते चत्वारिंशत्संस्काराः स ब्रह्मणः सायुज्यं सलोकतां गच्छति।

महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ।

विविदिषन्ति यज्ञेनेत्यादिस्मृतिश्रुतिपरेभ्यः उपकारकत्वावगमात् । एवं सति सम्पूर्णस्य वेदस्यैकमोक्षफलकत्वादेकेनाध्ययनविधिनोपादानं युक्ततरं भवतीति। तत्र वक्तव्यं केयं धर्मजिज्ञासा? किं द्वादशलक्षण्यां स्थितं न्यायसहस्रं, उत तज्ज्ञः कर्मावबोधः, अथ वा कर्म? तत्र न तावत्कर्मावबोधो ब्रह्मविचारप्रवृत्तिहेतुः । अन्यज्ञानादन्यत्र प्रवृत्त्ययोगात् । नाऽपि विचारसाध्यब्रह्मावबोधे हेतुः । कर्मब्रह्मणोर्व्याप्त्यभावात् । न हि सम्बन्धं विना ऽन्यज्ञानादन्यज्ञानं भवति । अस्तु तर्हि न्यायसहस्रमानन्तर्यविधिः । तदपेक्षत्वाद्ब्रह्मविचारस्येति चेन्न । कृतिसाध्यधर्मनिर्णयापेक्षितानामुत्पत्तिविनियोगप्रयोगाधिकारातिदेशादिन्यायानां स्वतः सिद्धब्रह्मविचारानपेक्षितत्वात् । श्रुतिलिङ्गादयस्तु लोकसिद्धा एव धर्मब्रह्मविचारयोरुपादीयन्ते ।

ननु गुणोपसंहारे विध्यपेक्षितोत्पत्त्यादिन्याया अपेक्ष्यन्ते इति चेत्सत्यम् । उपासनाया धर्मविशेषितत्वात्तद्विचारे विधिन्यायापेक्षोपपत्तेः। स्यादेतत् । अथा ऽतो धर्मजिज्ञासेत्यादिप्रथमपादे वर्णिता वेदप्रामाण्यापेक्षिता अध्ययनविधेरर्थावबोधावसानत्वेन वेदस्य विवक्षितत्वाच्छब्दार्थसम्बन्धस्यौत्पत्तिकत्वादपौरुषेयत्वादित्यादयो न्याया वेदमूलब्रह्मविचारे ऽपेक्षिता इति उच्यन्ते । अध्ययनवदेते न्याया अपि धर्मब्रह्मविचारयोः साधारणत्वान्नानन्तर्यावधिभूता इति । वस्तुत एते न्यायाः शास्त्रयोनित्वा, दत एव च नित्यत्वं, समाननामरूपत्वादित्यस्मच्छास्त्रे सन्तीति न पूर्वतन्त्रापेक्षा ।

नन्वस्तु कर्मानन्तर्यं ब्रह्मविचारस्येत्यत आह । अथ कर्माणीति । न्वो ऽवधारणे । प्रलिनकारमवधिपदं सम्बध्यते । कर्माऽपि शुद्ध्यतिरिक्तद्वारेण नैवावधिरित्यर्थः । तथा हि । प्रासादारोहणे सोपानक्रमवदाक्रमनादीनां सहस्रसंवत्सरान्तानां कर्मणामनुष्ठानक्रमेण द्वारेण न ब्रह्मजिज्ञासायां हेतुत्वं मानाभावात् । न ह्युत्तरकर्मोपादानात्पूर्वकर्मत्यागे चरमकर्मान्ते ब्रह्मजिज्ञासोत्पत्तौ च मानमस्ति । स्यादेतत् । ब्रह्मविचारे कामध्वंसो हेतुः । सकामस्य तदसम्भवात् । तथा च कर्मणां हि रागभ्रान्तफलोपभोगेन वैराग्यद्वारा तत्र हेतुत्वमिति तन्न स्यात् । हिरण्यगर्भस्यैव शास्त्राधिकारित्वोपपत्तेः, भोगस्य कामाभिवृद्धिहेतुत्वेन वैराग्यहेतुत्वायोगाच्च । क्षयादिदोषदर्शनं हि वैराग्यहेतुर्न भोगः । यत्तु स्वर्गकामो यजेत गोदोहनेन पशुकामस्ये-

त्यादिशब्दे देहात्मत्वाधिकारिभेदादिर्द्वैतनाशप्रमित्यर्थः। अतः कर्मकाण्डस्य कर्माणि प्रवृत्तिव्याजेन द्वैतनाशप्रमितिद्वारा ब्रह्मज्ञानार्थतेति। तन्न। कर्मवाक्यं तु द्वैतनाशस्याप्रतीतेः।

अत्र केचित्। भवतु तर्हि पुरुषसंस्कारकर्मत्वं फलं तद्द्वारा कर्मणां जिज्ञासाहेतुत्वात्कर्मानुष्ठानानन्तर्यमथशब्दार्थ इति। ननु स्वतन्त्रफलसाधनानां संस्कारकर्मत्वं न युक्तम्। तथात्वे प्रोक्षणादिवत्स्वतन्त्रफलसाधनत्वविरोधादिति चेदुच्यते। चत्वारिंशत्संस्कारा इत्यादिस्मृतेः धर्मेण पापमपनुदति इदमनेनाङ्गं संस्क्रियते इत्यादिश्रुतेश्च सर्वेषां कर्मणां पापक्षयरूपसंस्कारहेतुत्वं वाच्यम्। स च संस्कारः श्रवणादि सति ज्ञाने उपकरोति तदभावे सर्वे एते पुण्यलोका भवन्तीत्यादिश्रुत्यवगतस्वतन्त्रपितृलोकादिफले उपकरोतीति व्यवस्था। अत एव यस्यैते चत्वारिंशत्संस्काराः स ब्रह्मणः सायुज्यं सलोकतां गच्छतीति फलद्वयोक्तिर्युज्यते।

नन्वत्र सायुज्यसालोक्यलिङ्गात्कार्यब्रह्मप्राप्तिरेव न मुक्तिः। तथा च संस्कारस्य ज्ञानद्वारा मुक्तिहेतुत्वं कथं ज्ञेयमिति चेदुच्यते। अभेदे हि सायुज्यशब्दो मुख्यः। न च कार्यब्रह्माभेदो जीवस्य युक्तः। पूर्वरूपे स्थिते नष्टे वा ऽन्यस्यान्यात्मत्वायोगात्। अत उक्तव्यवस्थया मुक्तिसालोक्ये उच्येते। स्मृत्या स्वे स्वे कर्मण्यभिरते इत्यादिगीतायां 'कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते' इत्यादिस्मृतौ च संस्कारस्य मुक्तिद्वारत्वं स्फुटं दर्शितम्। एवं च विधेयकर्माङ्गसंस्कारकर्मण एव गुणकर्मत्वादविधेयब्रह्मज्ञानकारकमनःसंस्कारकर्मणां गुणकर्मत्वाभावात् न स्वतन्त्रफलसाधनत्वं विरुध्यते। अङ्गे हि फलश्रुतिरर्थवादः। न च संस्कारकर्मत्वेनाङ्गत्वानुमानम् आधाने व्यभिचारात्। तस्माद् द्रव्यार्जनविधेः सत्यां श्रद्धायां क्रतूपकारकत्वं तदभावे भोगार्थत्वं यथा; तद्वत्सर्वकर्मणामनियमेन श्रवणादिसहकारिभेदादुभयार्थत्वमित्येकः पक्षः। यूपोत्पत्तिमात्रसिद्धाग्निहोत्रादीनां स्वर्गकामादिवाक्यैः स्वर्गादिसम्बन्धस्तथा विविदिषावाक्येनेष्यमाणज्ञानसम्बन्धः संयोगपृथक्त्वन्यायादित्यपरः पक्षः। अस्मिन्पक्षे कर्मणां नियमेन ज्ञानार्थत्वं तादर्थ्यविधानात्। तत्रेच्छाया विषयसौन्दर्यलभ्यतया कर्मसाध्यत्वायोगाद्ब्रह्मसाक्षात्कारस्य प्रतिबन्धनिवृत्तिद्वारा साध्यत्वसंभवात्। यज्ञेनेत्यादिसुबन्तपदैर्व्यवहितान्यपि कर्माण्यनूद्य विविदिषन्तीत्यत्र लिङ्

परिग्रहेण साक्षात्कारकामो यज्ञादीन्यनुतिष्ठेदिति विधिः परिणम्यते । कुण्डपायिनां सत्रे तु मासमग्निहोत्रं जुहोतीति श्रुतम् अग्निहोत्रं जुहोति पदयोः साध्यकर्मवाचित्वेन मासाग्निहोत्रं कर्मान्तरव्यवहिताग्निहोत्रपरामर्शकपदाभावात् कर्मणां मुक्तौ साक्षाद्धेतुत्वमप्रामाणिकं नान्यः पन्था विद्यते इत्यादिमानविरुद्धश्च । तस्माच्चित्तशुद्धिविवेकवैराग्यादिपरम्परया ज्ञानार्थानि कर्माणीति सिद्धम् । अतः कर्मानन्तर्यम् अथशब्दार्थ इति प्राप्ते ब्रूमः । प्रवृत्तिपूर्वत्वं सतो निश्चितस्यैवाधिकारिविशेषणत्वम् । न च जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवेत्यादि श्रुतेः ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेदित्यादिस्मृतेश्च एकजन्मार्जितेन शुद्धिर्द्वारमिति कर्मावगमः प्रवृत्तिहेतुरिति वाच्यम् । ब्रह्मचर्यादेव प्रव्रजेदिति विधिविरोधेनार्थवादश्रुतिस्मृत्योर्दुर्बलत्वादिति । ननु जायमान इति वाक्यस्य इदयाद्यवदानविधिशेषार्थवादत्वे ऽपि ब्रह्मचर्यं समाप्य गृही भवेदिति क्रमश्रुतेरुक्तस्मृतेश्च का गतिरित्यत आह । बटोरिति—

क्रमो भोगेन वैराग्यं द्वैतनाशश्च कर्मणाम् ।
द्वारं न स्यात्किन्तु शुद्धिः सा ऽपि नैकभवार्जिता ॥
बटोः संन्यासकथनादविरक्ते क्रमश्रुतिः ।
ऋणश्रुतिश्च सामर्थ्ये नान्धादेर्न्यासयोग्यता ॥

ननु ब्रह्मचर्यादेवेति वाक्यं कर्मानधिकार्यन्धपङ्ग्वादिविषयमस्तु । अतः श्रुतिस्मृतिभ्यां कर्मानन्तरं संन्यासपूर्वकब्रह्मजिज्ञासेत्यत्राह । नान्धादेरिति । श्रवणाद्यसमर्थस्य ज्ञानार्थसंन्यासे नाधिकारः । ननु गुरुमेवाभिगच्छेत् कर्णाभ्यां भूरि विश्रुवं अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमित्यादिश्रुतेः दृष्टिपूतं न्यसेत्पादमित्यादिस्मृतेश्च पटुतरेन्द्रियस्यैव संन्यासप्रतीतेः गृहाद्वा वनाद्वेत्यधिकारिसमभिव्याहाराच्च । तस्मात्सति वैराग्ये कर्माधिकारिणां संन्यासपूर्वकब्रह्मजिज्ञासाविधानान्न तस्याः कर्मानन्तर्यम् । अत्र प्रसङ्गाद्यज्ञोपवीतत्यागो नास्तीति भट्टभास्करमतं निराकृत्य इदमेवास्य तद्यज्ञोपवीतं य आत्मा मुण्डोऽपरिग्रह इत्यादिश्रुतेः अत ऊर्ध्वं यज्ञोपवीतमासनमित्यादीनि वर्जयित्वेत्यादिस्मृतेश्च तत्त्याग इति साधितम् । एतत्सर्वमभिप्रेत्योक्तं भगवत्पादैः धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरिति । अथाऽपि हृदयस्याग्रे ऽवद्यत्यथ जिह्वायाः अथ वक्षस इत्यत्रानन्तर्यद्वारा क्रमार्थो ऽथशब्दो यथा, तद्वदत्रास्त्वित्यत आह । न क्रमार्थ इति—

न क्रमार्थो ऽथशब्दः स्याद्धर्मब्रह्मविचारयोः ।
सूत्रस्य न्यायवेदित्वात्क्रमस्याप्यनपेक्षणात् ॥

किं विचारयोः क्रमे सूत्रं मानम् उत एकैकप्रयोगानुपपत्तिः? नाद्यः। सूत्रस्य मानापेक्षितन्यायसूचकत्वेन स्वयं मानत्वायोगात् । न द्वितीयः। तयोः शेषशेषित्वे ऽधिकृताधिकारे वा मानाभावेनैव प्रयोगासिद्धेः। नन्वाग्नेयादीनामेकफलकत्वेन यथा क्रमापेक्षा यथा वा द्वादशाध्यायानामेकधर्मजिज्ञास्यकत्वेन क्रमापेक्षा तथा धर्मब्रह्मविचारयोर्मोक्षफलकत्वेन ब्रह्मजिज्ञास्यकत्वेन च क्रमापेक्षा ऽस्त्विति चेन्न । तयोः फलभेदात् । ब्रह्मविचारस्य ज्ञानद्वारा मुक्तिः फलं न धर्मविचारस्य स्वर्गकामादिवाक्यैः कर्मणामभ्युदयफलकत्वावगमात् तेषां मुक्तिहेतुत्वे मानाभावान्न कर्मणेत्यादिना निषेधाच्च । न च केवलकर्मणां निषेधो न ज्ञानसमुच्चितानामिति वाच्यम् । समुच्चये मानाभावात् । न तावद्विविदिषावाक्यं तत्र मानम् । तस्य कर्मणां ज्ञानार्थत्वबोधकत्वात्, अविद्यया मृत्युं तीर्त्वेति कर्मणां पापनिवृत्तिफलमुक्त्वा विद्यया ऽमृतमश्नुते इति फलभेदश्रुतेश्च, वेदान्तेषु ज्ञानादेव कैवल्यमित्युद्घोषाच्च, । संन्यासस्य ज्ञानाङ्गतया विधानाच्च न कर्मसमुच्चयो मुक्तिहेतुः। न च नित्यकर्मणां विध्यनुपपत्त्या साक्षान्मुक्तिफलकत्वम्। शुद्ध्यादिपरम्परया सफलत्वे ऽपि विध्युपपत्तेः। कर्मणां ब्रह्मात्मैक्ये अविद्याध्वंसे वा सामर्थ्याभावाच्च । बन्धमूलाविद्यानङ्गीकारे ज्ञानवैयर्थ्यप्रसङ्गात्तदङ्गीकारे ज्ञानादेव तन्निवृत्तेर्न समुच्चयावकाशः ।

एतेन समुच्चयसामर्थ्यात्कर्मावबोधानन्तर्यं भास्करोक्तं परास्तम्। किं च समुच्चयपक्षे ऽप्यानन्तर्यनियमो दुर्वचः । ज्ञानवतैवानुष्ठितस्य कर्मणो मोक्षहेतुत्वेन प्रथमाश्रमएव मुमुक्षोर्ब्रह्मावबोधानन्तरकर्मवाक्याध्ययनविचारादिकर्मानुष्ठानस्य युक्ततया वैपरीत्यस्य सुवचत्वात् । न च नित्याध्ययनविधिप्रयुक्तत्वात्कर्मविचारस्य प्रथममनुष्ठेयत्वमिति वाच्यम् । ब्रह्मविचाराविरोधेनापि तदनुष्ठानसम्भवात्तत्प्रयुक्तत्वासिद्धेश्च । तत्प्रयुक्तत्वे वा ब्रह्मविचारस्यापि तत्प्रयुक्ततया प्राथम्यं किं न स्यात् । न च श्रोतव्यविधिसद्भावान्न ब्रह्मविचारस्य नित्याध्ययनविधिप्रयुक्ततेति वाच्यम् । क्लृप्तविधिनैव प्रयोगसम्भवे श्रोतव्यविध्यसिद्धेः । न च शमाद्यनपेक्षाध्ययनविधिना शमाद्यङ्गकश्रवणप्रयोगो न सम्भवतीति वाच्यम् । वाक्यान्तरे शिरो-